


THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 239.

# वीरमित्रोदयः

तीर्थप्रकाशः।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः।

# VÎRAMITRODAYA,

TIRTHA-PRAKÂSA,

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MISRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. X.

FASCICULUS I

PUBLISHED & SOLD BY THE SECRETARY,
CHOWKHAMBA SANSKRIT SERIES OFFICE BENARES.
AGENTS -
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON:
Printed by Jai Krishna Das Gupta,
at the Vidya Vilas Press,
BENARES,
Price Rupee one.

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतितसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः — २२९

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आ० ८

५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... ... " " १ "

६ मार्गव्ययः पृथग् नास्ति । ... ... ... ... ... ...

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्ड ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १, २

(३) श्लोकवार्त्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः (मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा ( मीमांसा ) २

(८) ब्रह्मसूत्रभाष्यम्- बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णं । ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्- विशिष्टाद्वैतब्रह्मनिरूपणपर श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णं ( वेदान्तः )

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्यापेतः ( वेदान्तः )

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ...

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... ... २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा )

CHOWKHAMBA SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS
NOS. 239, 240, 241, 242, 247, & 248

# वीरमित्रोदयः ।

## तीर्थप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा
संशोधितः ।

# VIRAMITRODAYA,

## TIRTH-PRAKÂSA

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MISRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. X.

*PUBLISHED & SOLD BY THE SECRETA*
CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.
AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARÂM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
*Benares.*

1917

श्रीगणेशाय नमः ॥

# अथ
# वीरमित्रोदयस्य तीर्थप्रकाशः।

सिन्दूरारुणगण्डमण्डलगलद्दानाम्भसां धारया
सिञ्चन्तं पदसक्तभक्तजनताविघ्नौघधूलीरिव ।
धम्मिल्लालिमिवालिवृन्दमनिशं मूर्ध्ना दधानं हर-
प्रेयांसं गिरिजाङ्गजं गजमुखं वन्देऽरविन्देक्षणम् ॥ १ ॥

दधानं भृङ्गालीरनिशममले गण्डयुगले
ददानं सर्वार्थान्निजचरणसेवासुकृतिने ।
दयाधारं सारं सकलनिगमानामपि परं
गजास्यं स्मेरास्यं तमिह कलये चित्तनिलये ॥ २ ॥

हृदयभुवि मुनीन्द्रैः सेविता नारदाद्यै-
स्तनुरुचिभिरजस्रं पारदाभां पिबन्ती ।
अतिविततगभीरग्रन्थसिन्धाविदानीं
प्रभवतु करुणातः शारदा पारदा नः ॥ ३ ॥

स्फूर्जद्धूर्जटिताण्डवे प्रतिदिशं वेगोच्छलज्जाह्नवी-
वीचीध्वाननिपीतभृङ्गिमुरजस्फारस्वनाडम्बरे ।
लालाटामृतरश्मिखण्डमसकृद्व्योमस्थितेऽर्द्धे विधो-
राघातादपसश्चयं दलयतु प्रोत्तालतालायितम् ॥ ४ ॥

प्रातःकाले प्रयातो दिशिदिशि विबुधैरर्चितः पुष्पवृष्ट्या

प्रेमार्द्रैर्दृष्टिपातैर्मनसि मनसिजं दीपयन् गोपिकानाम् ।
कृत्वाऽग्रे धेनुसङ्घं सजलजलधरश्यामलो वेत्रपाणिः
कालिन्दीकूलकेलिः प्रदिशतु भवतां वाञ्छितं नन्दसूनुः ॥५॥

श्रीकाशीराजवंशप्रबलजलनिधेर्मेदिनीमल्लनामा
पूर्णः पीयूषरश्मिः समजनि जनतानन्दसन्दोहसिन्धुः ।
बन्धुर्दीनद्विजानां तदनु च समभूदूर्जितैरर्जुनाभो
गर्जत्प्रत्यर्थिसैन्यप्रमथननिपुणैरर्जुनो भूमिपालः ॥ ६ ॥

बुन्देलक्षितिपालवंशविलसद्रत्नं प्रयत्नं विना
यः पृथ्वीं निखिलां विधाय दशगां राज्यं चकाराद्भुतम् ।
शौर्यौदार्यगुणैरगण्यमहिमा दाताऽवदाताशयः
श्रीमान् कीर्त्तिसुधासमुद्रलहरीनिर्द्धौतदिङ्मण्डलः ॥ ७ ॥

तस्मादभूद्विमलविष्णुपदावलम्बो
लम्बोदराङ्घ्रिकमलार्चनवीतविघ्नः ।
निघ्नन् रणे प्रतिभटान् प्रकटोग्रदर्पो
भूपालभालतिलको मलखाननामा ॥ ८ ॥

सदासमाराधनतुष्टरुद्रः प्रतापरुद्रस्तनयस्तदीयः ।
कृपासमुद्रः शरणागतानां बभूव राजा वसुधाधिपानाम् ॥९॥

ततोऽभूदुद्भूतप्रचुरगुणगाम्भीर्यगरिमा
हिमाद्रिस्थेमाऽसौ मधुकरनृपः शूरविक्रपः ।
यमालिङ्ग्यालिङ्ग्य प्रणयरसिकं प्रेमतरला
न पूर्वेषामेषा स्मरति विरहं हन्त कमला ॥ १० ॥

सत्कीर्त्तिर्नृपवृन्दवन्दितपदः सङ्ग्रामयज्ञाङ्गणे
दीक्षावान्सकलं निपीय धवलैः सोमं यशोराशिभिः ।
शश्वत्प्रज्वलति प्रतापदहने खड्गस्रुगाकर्षितैः
यो वीरः प्रजुहाव वैरिनिवहप्राणाहुतीरन्वहम् ॥ ११ ॥

दिनकर इव विस्फुरत्प्रतापो
हिमकरवत्कमनीयकान्तिपूरः ।
करिकर इव यत्करः मदानो
मधुकरसाहमहीपतिर्महीयान् ॥ १२ ॥

एते दक्षिणभूमिभूमिपतयः प्राच्या उदीच्या इमे
राजानो नृपवृन्दवन्दितपदाम्भोज प्रतीच्या अमी ।
वन्दन्ते नतमौलिमौलिविलसद्रत्नाङ्कुरास्त्वामिति
द्वाःस्था यस्य वदन्ति सम्भ्रमभराद्बद्ध्वा निबद्धाञ्जलि ॥१३॥

दण्डेन क्षोणिचक्रं भ्रमयति निभृतं यत्प्रतापः कुलालो
येनाकृष्टासिवल्ली दिशि दिशि तनुते हन्त हल्लीसकानि ।
उल्लङ्घ्याब्धीन् यदीया व्रजति दश दिशः कीर्त्तिवल्लीमतल्ली
तादृक् पुत्रस्तदीयः समजनि जगतीमण्डले वीरसिंहः ॥१४॥

अस्ति स्वस्तिलकायमीनकरकानीहारहारप्रभा-
प्रादुर्भावपराभवव्यसनिभिर्लिम्पन् यशोभिर्दिशः ।
मुष्णन् वैरिमहांसि विज्ञजनतां पुष्णन् समं बन्धुभि-
र्दिग्विख्यातबुंदेलवंशतिलकः श्रीवीरसिंहो नृपः ॥ १५ ॥

कस्तावद्बलिकर्णभार्गवमहादानप्रमाणस्तवः
कश्चासौ कुरुपाण्डुपाण्डुरयशःप्रस्तावनाविस्तरः ।
यावद्वर्षति वीरसिंहनृपतिर्वृष्टीरिमाः काञ्चनी-
र्धीराः प्रावृषि तावदञ्जनरुचिर्धारा न धाराधरः ॥१६॥

वीरः श्रीवीरसिंहः क्षितिरमणमणिः पाणिना दानकाले
दर्भाम्भोहेमधारावितरणमकरोद्भागशः संविभज्य ।
अर्थिभ्यो हेम, दर्भान् प्रतिनृपतिमहासौधगर्भावनीभ्यः,
प्रादादम्भःप्रवाहान् प्रतिनृपतिमृगीलोचनालोचनेभ्यः ॥१७॥

एते भाविनि वीरसिंहनृपतौ दानाद्वितीये भुवि

द्वेषेणैव हृदा द्विधा ननु भविष्यन्तीति चिन्तः वत ।
धात्रा कामवगवी पशुर्विरचिता चिन्तामणिर्ग्रावतां
नीतो, दुर्वहदारुदारुणतनुर्देवद्रुमोऽयं कृतः ॥ १८ ॥
नानादानविधानकौशलमयीमाकल्परम्यां महीं
दृप्यद्दर्पचयस्वरूपमचिरादारोप्य वीजं ततः ।
तत्रासिच्य विविच्यमानदिलसद्भक्तिद्रवैः कल्पितो
भूपो कल्पमहीरुहोऽत्र विधिना श्रीवीरसिंह' कृती ॥१९॥
पीतध्वान्तेन नित्यं प्रसृमरमहसा मुग्धदुग्धाब्धिभासा
वीरश्रीवीरसिंहक्षितितिलकलसत्कीर्त्तिसोमेन साकम् ।
अद्धा स्पर्द्धां करिष्यत्ययमिति मिषतो लाञ्छनस्याञ्जनाक्तं
चक्रं कृत्वा विधात्रा दिशि दिशि शनकैर्भ्राम्यते शीतरश्मिः ॥२०॥
एषा शेषांशुशुभ्रैर्निजरुचिनिचयैर्निर्ज्जितोन्निद्रचन्द्रा
सान्द्रा विक्षिप्य वीचीर्वहति शतमुखी यस्य सत्कीर्त्तिसिन्धुः ।
तस्याः कापि प्रणाली वहति सुरनदी नर्मदा कापि रेवा
कावेरी कापि कापि प्रसरति शरयूश्चन्द्रभागा च कापि॥२१॥
सेवामेवास्य राज्ञः कलय मलयजस्वच्छकीर्तेः पितॄणां
मार्गे मागा निरागास्तनय भवतरां निस्कृपस्तत्कृपाणः ।
इत्थं श्रीवीरसिंहक्षितिरमणमणेः सर्वतः पर्वतस्थाः
शिक्षां प्रत्यर्थिवाला निरवधि तनयं स्वस्वमध्यापयन्ति॥२२॥
सूनुस्तस्य गुणैस्त्रिलोकविदितैः श्रेष्ठः कनिष्ठीकृत-
प्रौढप्रौढनरेन्द्रचारुचरितश्चामीकराभो युवा ।
वीरः श्रीलजुझारसिंहनृपतिः सङ्ग्रामसिंहो रण-
स्फूर्जत्स्फारकृपाणपाणिरारिभिः प्रोद्वीक्ष्यमालोक्यते॥२३॥
गायन्ति यस्य चतुरर्णवतीरकुञ्ज-
गुञ्जन्मदोद्धतमधुव्रतकैतवेन ।

नीहारहारहरिणाङ्कमयूखभांसि
भूयांसि दिङ्मृगदृशो वहुशो यशांसि ॥ २४ ॥
येनाकारि निजारिपार्थिववधूवाष्पाम्बुसिक्ता मही
रिक्ता येन कृताश्च कोपनिवहाः प्रत्यर्थिपृथ्वीभुजाम् ।
दानं यस्य निरस्यति क्षितिपतेः कर्णादिकानां यशः
तस्य श्रीलजुझारसिंहनृपतेः साम्यं कथं कथ्यताम् ॥२५॥
कैलाशं गिरिशं हिमं हिमगिरिं शीतांशुमुक्तामणीन्
नीरं क्षीरपयोनिधेः करिवरं जातं च पाथोनिधेः ।
यत्कीर्त्तिर्महसा जिगाय धरणीधौरेयधुर्यः शतं
वर्षाण्यत्र जुझारसिंहनृपतिर्जीयात्स भर्त्ता भुवः ॥ २६ ॥
राज्यं प्राप जुझारसिंहनृपतिर्यस्याग्रतो भूपते-
स्तत्पुत्रोऽपि गुणार्णवः समजनि श्रीविक्रमार्को नृपः ।
तत्सूनुर्नरसिंहदेवनृपतिस्तं वीरसिंहं विना
भेजे राज्यपरम्परासुखमिदं मन्ये महेन्द्रोऽपि किम् ॥२७॥
गोपाचलस्थधरणीसुरवंशपद्म-
चण्डांशुराविरभवद्द्विजजातिवन्धुः ।
श्रीनन्दनन्दनपदद्वयचित्तवृत्तिः
श्रीहंसपण्डित इति प्रथमानकीर्तिः ॥ २८ ॥
यो दूरवारकुलभूरनुभूतसौख्यः
श्रीहंसपण्डित इति प्रथितः पृथिव्याम् ।
आसीद्विवेकचतुरश्चतुरः समग्रा-
वेदानधीत्य कृतकर्मकलाकलापः ॥ २९ ॥
यज्ञादिकर्मकरणाय किलावतीर्णः
पूर्णः श्रिया निजकुलाभरणायमानः ।
मिश्रः परः परशुराम इति द्विजेन्द्र-

स्तस्याभवत्स तनयो विनयोदितश्रीः ॥ ३० ॥
यो दर्भाग्रसमानबुद्धिविभवः प्रख्यातकीर्तिर्गुणैः
श्रौतस्मार्त्तसमस्तकर्मकुशलाच्चण्डीश्वराख्याद्गुरोः ।
अध्यायान्तमधीत्य शास्त्रमखिलं मीमांसया मांसलः
शश्वत्खण्डितखण्डनः समभवत्सङ्ख्यावतामग्रणीः ॥ ३१ ॥
पुत्रस्तस्य विभाति सद्गुणनिधिर्दानाम्बुसृष्टाम्बुधि-
र्वीरः श्रीयुतमित्रमिश्रसुकृती कल्याणकल्पद्रुमः ।
कीर्तीर्दिक्षु विदिक्षु यस्य रजनीजानिप्रभाभास्वरा
गायन्ति द्विजदारका हिमहरक्षीराब्धिशुभ्रा भुवि ॥३२॥
चातुर्यं चतुराननस्य निभृतं गाम्भीर्यमम्भोनिधे-
रौदार्यं विबुधद्रुमस्य मधुरां वाचं च वाचस्पतेः ॥
धैर्यं धर्मसुतस्य शर्म सकलं देवाधिपस्याहरत्
श्रीमान् ख्याततनयः सदा सविनयः श्रीमित्रसेनः सुधीः॥३३॥
दाता दापयिता दयादमपरः श्रीमानमात्सर्यवान्
धीरोऽधीतसमस्तशास्त्रनिवहव्याख्यारसख्यातिमान् ।
नानानाटकसट्टकप्रकरणग्रन्थौघतात्पर्यवि-
द्वादे न्यक्कृतवावदूकनिचयो यो गीतकीर्तिर्बुधैः ॥ ३४ ॥
मन्त्रे यो रसनायितः प्रतिदिनं दाने च हस्तायितो
विश्वासे हृदयायितो नृपसभाभूमीषु भूषायितः ।
यो विद्वन्निकषायितः प्रविलसत्कीर्त्यालवालायितः
श्रीमद्वीरमहीपतेः प्रतिपदं प्रेमास्पदं योऽजनि ॥ ३५ ॥
तेनानेकनिबन्धसिन्धुमनिशं निर्मथ्य बुद्ध्या पुन-
र्वेदान् साङ्गपदक्रमोपनिषदान् श्रुत्वावधार्यापि च ।
धर्मार्थादिपुमर्थनिर्णयपरः श्रीवीरसिंहाज्ञया
ग्रन्थोऽयं रचितः परोपकृतये श्रीवीरमित्रोदयः ॥ ३६ ॥

मा कुर्वन्तु मुधा बुधाः परिचयं ग्रन्थेषु नानाविधे-
ष्वत्यन्तं न हि तेषु सर्वविषयः कश्चित् क्वचिद्वर्त्तते।
पश्यन्तु प्रणयादनन्यमनसो ग्रन्थं मदीयं त्विमं
धर्माधर्मसमस्तनिर्णयविधिर्यस्मिन् दरीदृश्यते ॥ ३७ ॥
अंहःसंहरणाय सर्वजगतामन्तस्तमःशान्तये
लब्ध्वाऽऽज्ञां नृपवृन्दवन्द्यचरणश्रीवीरसिंहप्रभोः।
श्रीमत्पण्डितहंसवंशतिलकः श्रीमित्रमिश्रः सुधी-
र्विद्वद्वृन्दशिरोमणिर्वितनुते तीर्थप्रकाशं परम् ॥ ३८ ॥

तीर्थस्वरूपं तीर्थानां पुरुषार्थनिमित्तता।
तीर्थकीर्त्तनमाहात्म्यं विभागाश्चापि तीर्थगाः ॥ १ ॥
तीर्थयात्राधिकारश्च यात्राङ्गानुष्ठितिस्तथा।
यात्रायानकथाऽगम्यगम्यदेशादिकीर्त्तनम् ॥ २ ॥
कालशुद्धिश्च यात्रायां दूराद्यात्राफलं तथा।
तीर्थप्राप्तिदिने कृत्यं तीर्थप्राप्त्यनुपोषणम् ॥ ३ ॥
मुण्डनं च तथा तीर्थस्नानं तीर्थे च तर्पणम्।
तीर्थश्राद्धं च तीर्थेषु देवतादर्शनादिकम् ॥ ४ ॥
प्रतिग्रहनिषेधादिस्तीर्थेऽनुष्ठानपद्धतिः।
जम्बूद्वीपस्य वर्षाणामद्रीणां चापि कीर्त्तनम् ॥ ५ ॥
उद्देशः सर्वतीर्थानां नदीनां चापि तत्फलम्।
सामान्यतः समुद्दिष्टमथ काशीविवेचनम् ॥ ६ ॥
ततः प्रयागमहिमा गङ्गायाः सागरस्य च।
सङ्गमादिकमप्यत्र वर्ण्यते जाह्नवी ततः ॥ ७ ॥
कीर्त्यते यमुना चापि नर्म्मदा तदनन्तरम्।
ततो गयाविधिः सम्यक् मन्दारमहिमा ततः ॥ ८ ॥

अथ कोकामुखविधिः कुरुक्षेत्रफलं ततः ।
पृथूदकादिमाहात्म्यं सरस्वत्याः फलं ततः ॥ ९ ॥
अथ प्रभासमाहात्म्यं महिमा पुष्करस्य च ।
स्तुतस्वामिस्तुतिकथा बदरीवर्णनं ततः ॥ १० ॥
लोहार्गलस्य माहात्म्यं केदारमहिमा महान् ।
शालग्रामगुणग्रामो नैमिषोन्मेषणं ततः ॥ ११ ॥
इन्द्रप्रस्थस्य माहात्म्यमयोध्यामहिमोदयः ।
मथुरामहिमश्लाघा चित्रकूटानुकीर्त्तनम् ॥ १२ ॥
कालञ्जरस्य महिमा शृङ्गवेरपुरं ततः ।
अवन्ती द्वारका तापी तापीसागरसङ्गमः ॥ १३ ॥
पयोष्णीस्नानमहिमा मही गोदावरी ततः ।
सह्यामलकमाहात्म्यं गोकर्णमहिमा महान् ॥ १४ ॥
सप्तकोटीश्वरकथा सेतुबन्धफलश्रुतिः ।
पुरुषोत्तममाहात्म्यमेकाम्रगुणगुम्फनम् ॥ १५ ॥
अथ कोणार्कमाहात्म्यं विरजक्षेत्रनिर्णयः ।
कालरूपस्य महिमा करतोयानुकीर्त्तनम् ॥ १६ ॥
ब्रह्मपुत्रनदश्लाघा जल्पीशगुणजल्पनम् ।
ततो नानातीर्थफलमथ पृथ्वीप्रदक्षिणा ॥ १७ ॥
महाप्रस्थानगमनं ग्रन्थेऽस्मिन् वर्ण्यते क्रमात् ।
श्रीमित्रमिश्रविदुषा विदुषां मोदहेतवे ॥ १८ ॥

तत्र तीर्थस्वरूपम् ।

महाभारते,

भीष्म उवाच ।

शृणु तीर्थानि गदतो मानसानि ममानघ ।

येषु सम्यङ्नरः स्नात्वा प्रयाति परमां गतिम् ॥
सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः ।
सर्वभूतदया तीर्थं तीर्थमार्जवमेव च ॥
दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते ।
ब्रह्मचर्यं परं तीर्थं तीर्थं च प्रियवादिता ॥
ज्ञानं तीर्थं धृतिस्तीर्थं तपस्तीर्थमुदाहृतम् ।
तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा ॥
न जलाप्लुतदेहस्य स्नानमित्यभिधीयते ।
स स्नातो यो दमस्नातः शुचिः शुद्धमनोमलः ॥
यो लुब्धः पिशुनः क्रूरो दाम्भिको विषयात्मकः ।
सर्वतीर्थेष्वपि स्नातः पापो मलिन एव सः ॥
न शरीरमलत्यागान्नरो भवति निर्म्मलः ।
मानसे तु मले त्यक्ते भवत्यन्तः सुनिर्म्मलः ॥
जायन्ते च म्रियन्ते च जलेष्वेव जलौकसः ।
न च गच्छन्ति ते स्वर्गमविशुद्धमनोमलाः ॥
विषयेष्वनिशं रागो मानसो मल उच्यते ।
तेष्वेव हि विरागोऽस्य नैर्मल्यं समुदाहृतम् ॥
चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुद्ध्यति ।
शतशोऽथ जले धौतं सुराभाण्डमिवाशुचि ॥
दानमिष्टं तपः शौचं तीर्थं सेवा श्रुतं तथा ।
सर्वाण्येतान्यतीर्थानि यदि भावो न निर्मलः ॥
निगृहीतेन्द्रियग्रामो यत्रैव वसते नरः ।
तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥
ज्ञानपूते ध्यानजले रागद्वेषमलापहे ।
यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥

एतत्ते कथितं राजन् मानसं तीर्थलक्षणम् ।
भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु ॥
यथा शरीरस्योद्देशाः केचिन्मध्यतमाः स्मृताः ।
तथा पृथिव्या उद्देशाः केचित्पुण्यतमाः स्मृताः ॥
प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा ।
परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता ॥
तस्माद्भौमेषु तीर्थेषु मानसेषु च नित्यशः ।
उभयेषु च यः स्नाति स याति परमां गतिम् ॥ इति ।-

भौमानामपीत्यपिना मानसतीर्थलक्षणं श्रुतमेव, इदानीं भौमानां तीर्थानां पुण्यत्वे कारणं शृण्विति प्रतिपाद्यते । यथा शरीरस्योद्देशाः देहस्यावयवाः केचित् उत्तमाङ्गदक्षिणश्रवणादयः स्वभावत एव पुण्यतमाः तथा पृथिव्या उद्देशाः केचन पृथिवीप्रदेशाः भूमेरद्भुतात् प्रभावात् विलक्षणात्स्वभावात् पुण्यतमा दर्शनस्नानादिना पुण्यहेतवः । तथा सलिलस्य च, सलिलस्यापि केचन देशाः । अर्थात् सलिलस्य तेजसा प्रभावेण विलक्षणस्वभावेनेतियावत्, पुण्यतमा इत्यर्थः । यथा दक्षिणश्रवणस्य स्पर्शे आचमनानुकल्पः स्वाभाव्यात् न तु वामश्रवणस्य, तथात्रापि देशविशेषादीनां तथात्वमित्यर्थः । मुनीनां परिग्रहादिति । पूर्वं मुनिभिराश्रितत्वात् स्नानाद्यनुष्ठानाच्चेत्यर्थः । प्रभावोऽज्ञानादिसिद्धः पुण्यताप्रयोजको देशस्य जलस्य वा स्वभावभेदः । मुनिपरिग्रहस्त्वागन्तुको धर्मः । मुनिपदं देवादीनामुपलक्षणम् । वस्तुतो मुनिपरिगृहीतानामनादिरेव प्रभावः । स्तुत्यर्थमेव परिग्रहकीर्त्तनम् । एवं चान्यानाहितस्वभावविशेषेण पुण्यहेतुर्भूमिर्जलं वा तीर्थमिति सिद्ध्यति । तेन शालग्रामशिलादिसान्निध्याद्देशस्य तदीय-

स्नानोदकादेश्च तत्सम्पर्केण पुण्यहेतुत्वेऽपि न तीर्थत्वम् । मानसे तु तीर्थव्यपदेशस्तीर्थकार्यकारित्वाद्गौणः । उक्तलक्षणेनासङ्ग्रहात् । एवमन्यादृशेषु यत्र तीर्थपदप्रयोगः स गौणः । मानसानां पृथगेव वा तीर्थत्वं स्नानवत् ।

यथा,

नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ॥

इति सर्वाङ्गीणजलसंयोगरूपं स्नानं शङ्खेनोक्तम् ।

आग्नेयं भस्मना स्नानमद्भिर्वारुणमुच्यते ।
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥

इति भस्मस्नानादिकं हारीतेनोक्तम् ।

मानसं विष्णुचिन्तनम् ।

इतियोगियाज्ञवल्क्येनोक्तं स्नानं पृथगेव । एवञ्च तादृशभूमौ तादृशजले च प्रवृत्तिनिमित्तभेदात्तीर्थशब्दो नानार्थः । गुरुत्वेन वा द्वयोरनुगमः । अन्यानाहितेत्यत्रान्यपदेन शालग्रामसान्निध्यादीनां विशिष्टोपादानादभावसमुदायप्रवेशान्न दोषः । पुण्यजनकताऽवच्छेदकशक्तिविशेषावच्छिन्नत्वमेव वा तीर्थत्वम् । विशेषपदेनैव शालग्रामादिसान्निध्यव्युदासः । तत्र तीर्थत्वाव्यवहारात् । अन्यथा तत्रापि तीर्थप्राप्तिनिमित्तकश्राद्धापत्तेः । अभियुक्तैर्महर्षिभिस्तीर्थत्वेन परिभाषितानां काशीकाञ्चीप्रभृतीनामेव तीर्थत्वं नान्येषामित्यपि साधीयः । यथा दाक्षिनन्दनोदीरितनदीवृद्धिसंज्ञादौ, यथा वा मन्त्रादौ, तादृशपरिभाषाविषयत्वमेव शरणं तथात्रापीति । तदुक्तम्—

याज्ञिकानां समाख्यानं निर्दोषं मन्त्रलक्षणम् । इति

तत्तत्तीर्थभेदास्तत्तद्देशवासिप्रसिद्ध्याऽवसेयाः ।' एवं स-

कृतयोर्नद्योरेतद्भागे इयं नदी परभागे सेत्यत्रापि तत्त-देशीयशिष्टव्यवहार एव नियामकः। एवं तन्नदीच्युतप्रवाहस्य तन्नदीत्वान्यनदीत्वशङ्कायामपि । तथा मध्यविच्छिन्नस्रोतसि ग्रीष्मशुष्यद्वर्षाप्रवृत्तस्रोतसि वा तन्नदीत्वे देशव्यवस्थैव शरणम्।

इदानीं तीर्थानुसरणस्य पुरुषार्थसाधनताऽभिधीयते।

**महाभारते,**

ऋषिभिः क्रतवः प्रोक्ता वेदेष्विह यथाक्रमम्।
फलं चैव तथा तत्त्वं प्रेत्य चेह च सर्वशः॥
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते।
बहूपकरणा यज्ञा नानासम्भारविस्तराः॥
प्राप्यन्ते पार्थिवैरेते समृद्धैर्वा नरैः क्वचित्।
नार्थन्यूनैरवगणैरेकात्मभिरसंहतैः॥
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर।
ऋषीणां परमं गुह्यमिदं भरतसत्तम॥
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते।
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च॥
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते।
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः॥
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत्।

अवगणैः, तक्षादिसहायरहितैः। यज्ञस्य कुण्डमण्डपादिसाध्यत्वात्। एकात्मभिः, पत्नीरहितैः। असंहतैः, ऋत्विगादिसङ्घातरहितैः। अनुपोष्येति। तेनात्र त्रिरात्रोपोषणतीर्थाभिगमनकाञ्चनदानगोदानानां चतुर्णामपि प्रत्येकं दारिद्र्याभावः फलमित्यर्थः। अग्निष्टोमादिभिरित्यनेन केषां चित्तीर्थानां यज्ञादधिकफलत्वं दर्शितमिति सामान्यतो यज्ञफलतुल्यफलतोक्ता न विरुध्यते।

तथा,

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥

हस्तयोः संयमः, परपीडाचौर्य्यादिनिवृत्त्या। पादयोः संयमः, अगम्यदेशगमनपरताडनादिनिवृत्त्या। मनसः संयमः, कुत्सितसङ्कल्पादिनिवृत्त्या। विद्याऽत्र तत्तीर्थगुणज्ञानम् । तपः, तीर्थोपवासादि। कीर्तिः, सच्चरितत्वेन प्रसिद्धिः । यद्यपि कीर्त्तिशून्यस्य तीर्थफलाभाव इत्यसमञ्जसं, न वा प्रसिद्धिः कर्तुं शक्या कीर्त्यर्थं धर्मानुष्ठानानौचित्यात् । तथापि कीर्तिपदमधार्मिकत्वव्यतिरेकपरम् ।

तथा,

अकोपनश्च राजेन्द्र सत्यवादी दृढव्रतः ।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥

आत्मोपमत्वं च हितकरणेन अहिताकरणेन च । तदेतानि तीर्थयात्राप्रकरणपाठात्तीर्थयात्राङ्गानि । यद्वा । हस्तसंयमादिशून्यानां तीर्थे पापक्षयो न तु यथोक्तं फलमित्यत्र तात्पर्य्यम् । तथा च—

शङ्खः,

नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ।
यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम् ॥ इति ।

पापकृतां, कर्मानधिकारापादकपातकादिमताम् । पापमात्रस्य संसार्य्यव्यतिरेकात् । यथोक्तं फलं, पापक्षयातिरिक्तं स्वर्गादि । शुद्धात्मनाम्, ऐहिकमहापातकादिशून्यानाम् ।

तथा स एव,

तीर्थान्येव तु सर्वाणि पापघ्नानि सदा नृणाम् ।
परस्परानपेक्षाणि कथितानि मनीषिभिः ॥

सर्वे प्रस्रवणाः पुण्याः सर्वे पुण्याः शिलोच्चयाः ।
नद्यः पुण्याः सदा सर्वा जाह्नवी तु विशेषतः ॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥

सदा, संयमाद्यभावेऽपि । परस्परानपेक्षाणि, प्रत्येकं फलसाधनानि ।

वायुपुराणे,

तीर्थान्यनुसरन् धीरः श्रद्दधानः समाहितः ।
कृतपापो विशुद्धेत किं पुनः शुद्धकर्मकृत् ॥
तिर्यग्योनिं न गच्छेच्च कुदेशे च न जायते ।
स्वर्गी भवति वै विप्रो मोक्षोपायं च विन्दति ॥
अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः ।
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः ॥

श्रद्धा, वैदिककर्मणि फलावश्यम्भावनिश्चयः । समाहितः, असद्देशगमनासत्प्रसङ्गादिनिवृत्तिरूपसमाधानयुक्तः । कृतपापः, इह जन्मनि निष्पादितदुरितः । विशुद्धिः पापक्षयः । तथा चेह जन्मनि कृतपापोऽपि निष्पापो भवति । इह जन्मनि शुद्धकर्मकर्त्ता तु प्राचीनजनितपापक्षयवान् भवतीत्यत्र किंपुनर्वाच्यमित्यर्थः । पापात्मा, पापाचरणशीलः । नास्तिकः, देहाभिन्न आत्मेति बुद्धिमान् । अच्छिन्नसंशयः, फलोपायेतिकर्त्तव्यतासु सन्दिहानः । हेतुनिष्ठः, कुहेतुभिः शास्त्रोपप्लावकः ।

स्मृतिसारसमुच्चये,

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥

इत्युक्तम् । अनेन श्रद्धया फलावाप्तिरिति स्पष्टीकृतम् ।

तथा,

काम क्रोधं च लोभं च यो जित्वा तीर्थमावसेत् ।

न तेन किञ्चिन्न प्राप्तं तीर्थाभिगमनाद्भवेत् ॥

तीर्थानि तु यथोक्तेन विधिना सञ्चरन्ति ये ।

सर्वद्वन्द्वसहा धीरास्ते नराः स्वर्गगामिनः ॥

देवलः,

कृत्वा पापमविज्ञातं भ्रूणहत्यादि तत्पुनः ।

विनश्यति महायज्ञैरथ वा तीर्थचर्य्यया ॥

याज्ञवल्क्यः,

अनुपातकिनस्त्वेते महापातकिनो यथा ।

अश्वमेधेन शुद्ध्यन्ति तीर्थानुसरणेन वा ॥

देवलः,

तीर्थे पुण्यतमे यथावद्देहसंन्यासात् ब्राह्मणो महापातकान्मुच्यते ।

महाभारते,

अज्ञानेनापि यस्येह तीर्थयात्रादिकं भवेत् ।

सर्वकामसमृद्धः स स्वर्गलोके महीयते ॥

स्थानं च लभते नित्यं धनधान्यसमाकुलम् ।

ऐश्वर्य्यज्ञानसम्पन्नः सदा भवति भोगवान् ॥

तारिताः पितरस्तेन नरकात् प्रपितामहाः ।

अज्ञानेन, तीर्थज्ञानं विना । तीर्थयात्रादिकमित्यादिपदात् स्नानदानादिपरिग्रहः । एतद्बलात् फलकामना विनापि काम्यफलनिर्वाहो गम्यते । कामनाकृतं त्वाधिकफलं भवति अकामकृतात् कामकृते पुण्येऽप्याधिक्यस्मरणात् । तथाच—

आपस्तम्बः, यः प्रमत्तो हन्ति प्राप्तं दोषफलं सहसङ्कल्पेन भूयः एवमन्येष्वपि दोषवत्सु कर्मसु तथा पुण्यक्रियास्विति ।

प्रमत्तः, अज्ञः । प्राप्तं दोषफलं, हिंसाजन्यदोषफलं लभते ।

तदेव सङ्कल्पेन सह चेत्स्यात् तदा भूयोऽधिकं भवति । अन्येषु, निषिद्धभोजनादिषु । पुण्यक्रियासु, स्नानादिषु । ननु—

तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे समाचरन् ।
स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु ॥

इति शङ्खवचनविरोधात् कथमज्ञानात्तीर्थयात्राफलमिति चेत्, न । यत्र प्रयोजनान्तरमात्रमुद्दिश्य गच्छति तत्र यात्राफलाभावस्य शङ्खेन बोधनात् । यत्र तीर्थमेव तत्त्वेनाज्ञात्वा सामान्यजलबुद्ध्योद्दिश्य गच्छति तत्राज्ञानतस्तीर्थयात्राफलस्य पूर्ववाक्ये बोधनेनाविरोधात् ।

भारते,

तथा पुण्यानि तीर्थानि पुण्यान्यायतनानि च ।
उपास्य पुण्यं लब्ध्वा च भवत्यमरलोकभाक् ॥

अत्र च "न ते शक्या दरिद्रेण" इत्यादिवचनजातेन धनापेक्षाणां तीर्थानां यागाद्यपेक्षयाऽतिशय उक्तः । न च जपोपवासादेरपि धननिरपेक्षतया कथमन्यापेक्षयाऽतिशयः तीर्थानामेवेतिवाच्यम् । उपवासस्य कायक्लेशसाध्यतया ततोऽपि तीर्थस्यातिशयात् । उपवासासहिष्णूनां तत्रासामर्थ्याच्च । किञ्च—

संवत्सरशतं साग्रं निराहारस्य यत्फलम् ।
प्रयागे माघमासेऽस्य त्र्यहस्नातस्य तत्फलम् ॥

इत्यादितीर्थफलमुक्तम् । न चैतावानुपवासराशिः कर्तुं शक्यो विशेषतः कलियुगे । तस्माद्बहुवित्तव्ययायासनिरपेक्षतया तीर्थसेवा धर्मान्तरेभ्यो विशिष्यते ।

अथ तीर्थकीर्तनादिमाहात्म्यम् ।

भारते,

कीर्तनादेव तीर्थस्य स्नानाच्च पितृतर्पणात् ।

धुन्वन्ति पापं तीर्थे ये ते प्रयान्ति सुखं परम् ॥
कौर्म्ये, 'तीर्थानि प्रकृत्य'।
यत्र स्नानं जपो होमः श्राद्धदानादिकं कृतम्।
एकैकशो मुनिश्रेष्ठाः पुनात्यासप्तमं कुलम् ॥
भारते धौम्यतीर्थयात्रायाम्,
दिशस्तीर्थानि शैलांश्च शृणु मे गदतो नृप।
यान् श्रुत्वा गदतो राजन् विशोको भवितासि ह ॥
द्रौपद्या चानया सार्द्धं भ्रातृभिश्च नरेश्वर।
श्रवणाच्चैव तेषां त्वं पुण्यमाप्स्यसि पाण्डव ॥
गत्वा शतगुणं चैव तेभ्य एव नरोत्तम।
ब्रह्मपुराणे,
वाराणस्यां महातीर्थे नरः स्नात्वा विमुच्यते।
एवं प्रयागमधिकृत्य—
दर्शनात्तस्य तीर्थस्य नामसङ्कीर्त्तनादपि।
मृत्तिकालम्भनाद्वापि नरः पापात्प्रमुच्यते ॥
गङ्गामधिकृत्य—
गङ्गागङ्गेति यैर्नाम योजनानां शतैरपि।
स्थितैरुच्चारितं हन्ति पापं जन्मत्रयार्ज्जितम् ॥
अत्र तेषामित्यध्याहार्य्यम्। एवं "सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम्" इत्यादि तत्र तत्र स्पष्टीभविष्यति।
भारते,
यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च।
मनसा तानि गच्छेत सर्वतीर्थसमीहया ॥
एवम्—
मनसाऽप्यभिकामस्य पुष्कराणि तपस्विनः।
पापानि विप्रणस्यन्ति नाकपृष्ठे च पूज्यते ॥ इति।

अथ तीर्थविभागः ।

ब्रह्मपुराणे,

नारद उवाच ।

कियन्ति तानि तीर्थानि किंफलानि सुरेश्वर ।
सर्वेषामेव तीर्थानां सर्वदा किं विशिष्यते ॥

ब्रह्मोवाच ।

चतुर्विधानि तीर्थानि स्वर्गे मर्त्ये रसातले ।
दैवानि मुनिशार्दूल आसुराण्यार्षकाणि च ॥
मानुषाणि च लोकेषु विख्यातानि सुरादिभिः ।
ब्रह्मविष्णुशिवैर्देवैर्निर्मितं दैवमुच्यते ॥
त्रिभ्यो यदेकं जायेत तस्मान्नातः परं विदुः । इति ।

एवं च वाराणसीप्रभासपुष्करादीनि दैवानि ।

रेवाखण्डे,

ब्राह्मी सरस्वती मूर्त्तिर्गङ्गा मूर्त्तिस्तु वैष्णवी ।
नर्मदा शाङ्करी मूर्त्तिस्तिस्रो नद्यस्त्रिदैवताः ॥

ब्रह्मपुराणे,

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्त्तिताः ॥
भागीरथी नर्मदा च यमुना च सरस्वती ।
विशोका च वितस्ता च हिमवत्पर्वताश्रिताः ॥
एता नद्यः पुण्यतमा देवतीर्थान्युदाहृताः ॥

तथा,

केनापि न कृतं यत्र देवखातमिति स्मृतम् । इति ।

आसुराणि, गयासुरादिनिर्मितानि गयादीनि । आर्षाणि, ऋषिभिः प्रतिष्ठितानि । मानुषाणि, सोमसवितृवंशप्रसूतराजभिः

प्रतिष्ठितानि । त्रिविधं तीर्थमुक्तम्—

भारते,

पृथिव्यां नैमिषं तीर्थमन्तरीक्षे च पुष्करम् ।
त्रयाणामपि लोकानां कुरुक्षेत्रं विशांपते ॥ इति ।

भौमान्तरीक्षत्रिलोकस्थभेदात्त्रिविधमित्यर्थः ।

## अथ तीर्थयात्राधिकारिणः ।

तत्र ब्राह्मणक्षत्रियवैश्यशूद्राणां चतुर्णां वर्णानामधिकारः ।
महाभारते,

पुलस्त्यतीर्थयात्रायां पुष्करमधिकृत्य ।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम ।
न वियोनिं व्रजन्त्येते तीर्थे स्नाता महात्मनः ॥

इति वचनात् । तीर्थयात्रायां ब्रह्मचारिगृहस्थवानप्रस्थयतीनां चतुर्णामप्याश्रमाणामधिकारः । यथा—

ब्रह्मपुराणे,

या तीर्थयात्रा कथिता मुनीन्द्रैः कृता प्रयुक्ताऽप्यनुमोदिता च ।
तां ब्रह्मचारी विधिवत्करोति सुसंयतो गुरुणा साभियुक्तः ॥
सर्वस्वनाशेऽप्यथ वान्यपक्षे सद्ब्राह्मणानग्रत एव कृत्वा ।
यज्ञाधिकारेऽप्यथवा निवृत्ते विप्रस्तु तीर्थानि परिभ्रमेत ॥
तीर्थेष्वलं यज्ञफलं हि यस्मात् प्रोक्तं मुनीन्द्रैरमलस्वभावैः ।
यस्येष्टियज्ञेष्वधिकारिताऽस्ति वरं गृहं गृहधर्माश्च सर्वे ॥
एवं गृहस्थाश्रमसंस्थितस्य तीर्थे गतिः पूर्वतरैर्निषिद्धा ।
सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानि नैवेति वयं वदामः ॥

प्रयुक्ता, कारिता । गुरुणा साभियुक्त इति गुर्वनुज्ञयैव ब्रह्मचारिणो नान्यथा । नैष्ठिकस्य गुर्वभावे यत्राचार्यपुत्रादौ वं-

सति तदनुज्ञयैवाधिकारः । अग्नौ वासपक्षे स्वेच्छयाऽधिकारः । गुर्वाज्ञादिवशात् कार्य्यान्तरार्थं गतस्तु यदि दैवात्तीर्थस्नानादि करोति तद्गुरवे निवेद्य गुरुणानुमोदितस्तत्फलं लभत इत्यन्यत्रोक्तम् ।

मनुरप्याह—

तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत् ।
तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः ॥ इति ।

तेषां, मातापितृगुरूणाम् । कृतसमावर्त्तनस्य गृहस्थस्य वा पित्रोर्जीवतोरप्येष एव विधिः पारतन्त्र्यतौल्यात् । यस्तु पित्रोरतिदूरवर्त्ती स यज्ञदानादिवत् तीर्थयात्रादि कुर्य्यादेव । यत्तु—

कौर्म्ये,

न ताभ्यामननुज्ञातो धर्ममन्यं समाचरेत् ।
वर्जयित्वा मोक्षफलं नित्यं नैमित्तिकं तथा ॥

इति मोक्षार्थकर्मणि पित्राद्यनुज्ञा नापेक्षितेत्युक्तं तत् संन्यासिविषयं "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इतिदर्शनात् । सर्वस्वनाशेऽप्यथवा नृपस्त्विति क्वचित्पाठः । यज्ञाधिकारनिवृत्तिस्तु पत्नीवियोगादिना । विप्रपदं द्विजपरम् । इष्टिर्दर्शपौर्णमासादिः । यज्ञोऽग्निष्टोमादिः । एवं यज्ञाधिकारादिना विशिष्टस्य गृहस्थस्य तीर्थयात्रायां नाधिकारः । अत्र हेतुः सर्वतीर्थादप्यधिकफलमग्निहोत्रमिति । एवं चाग्निहोत्रेणोपसंहारात् स्मार्त्ताग्निमत्त्वं नाधिकारविरोधीति ध्येयम् । तदेवं क्वचिदग्निमत्त्वेन निषेधोऽपि श्रौताग्निमद्विषय एव एतदेकमूलकत्वात् । स्मार्त्ताग्निमतोऽपि चिरप्रवासनिषेधात् तदतिक्रमे पुरुषदोष एव न तु तीर्थफलानिष्पत्तिः । श्रौताग्निमतश्च धनार्थं प्रवासाभिधानात् तदर्थं गतस्य तीर्थलाभे प्रासङ्गिकं तीर्थस्नानादिफलं भवत्येव । तत्र च

श्राद्धं साग्निनापि विप्रपाण्यादावग्नौकरणेन कर्त्तव्यं प्रोषितसाग्नेरुपरागदर्शनश्राद्धवत्।

कौर्म्ये साग्नेस्तीर्थयात्रां निषिद्ध्योक्तम्—

महाग्निर्वा सपत्नीको गच्छेत्तीर्थान्यतन्द्रितः। इति।

एवं चाग्निहोत्री अग्निपत्नीसहित एव तीर्थयात्रां कुर्यादिति। एवं निरग्नेर्गृहस्थस्य स्मार्त्ताग्निमतश्च साग्निकस्याप्यग्निपत्नीसहितस्य यज्ञाधिकारे पत्नीवियोगादिना निवृत्तेऽनाश्रमस्यापि तीर्थयात्रा सिद्ध्यति। एवं वानप्रस्थस्यापि तत्राधिकारः। वानप्रस्थं प्रकृत्य—

ऋणानि त्रीण्यपाकृत्य कुर्यात्तीर्थस्य सेवनम्।
विधाय वृत्तिं भार्यायाः पुत्रेषु विनिधाय च॥

इति कौर्म्यात्।

पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा।

इति मनुवचानात् पुत्रेषु भार्य्यां निक्षिप्यापि वानप्रस्थस्य वनगमनसिद्धेः तत्पक्षमवलम्ब्यैव "पुत्रेषु विनिधाय च" इत्युक्तम्। न तु तीर्थनिमित्तमेव भार्य्यानिक्षेपः। यतेरपि तीर्थेऽधिकारः। मुमुक्षुभिस्तीर्थगतं द्विजेन्द्रैः कार्य्यं तथा तत्फलकाङ्क्षिभिश्च।

इति काशीखण्डात्। गतं गमनम्। एवं चतुर्णां वर्णानामाश्रमाणां च तीर्थाधिकारः सिद्ध इति। ननु—

जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम्।
देवताराधनं चेति स्त्रीशूद्रपतनानि षट्॥

तथा,

विप्रसेवैव शूद्रस्य विशिष्टं धर्मलक्षणम्।
यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम्॥

इति वचनेन शूद्रस्य तीर्थयात्रानिषेधात् कथं तत्राधिका-

र इति चेत्, न। तद्वचनस्य विप्रसेवाविरोधेन तीर्थयात्रानिषेधपरत्वात्। अत एव—

भारते,

शूद्रस्तु द्विजशुश्रूषाविरुद्धं धर्ममाचरन्।
नरके पच्यते तद्वद्वेदश्रवणकीर्त्तनात्॥

इत्युक्तम्। अनुलोमजानां तीर्थेऽधिकारः।

सजातिजानन्तरजाः षट् सुता द्विजधर्मिणः।

इति मनुवचनात्। तदर्थस्तु द्विजातिसमानजातीयासु जातास्त्रयस्तथा आनुलोम्येनोत्पन्नाः ब्राह्मणेन क्षत्रियावैश्ययोः क्षत्रियेण वैश्यायामिति त्रयः एवं षट्पुत्रा द्विजधर्मिणः उपनयनादिधर्मयुक्ता इत्यर्थः। वस्तुतस्तु सजातिजाभ्यो या या अनन्तरास्तासु जाताः षट् अनुलोमजा द्विजधर्मिण इत्यर्थः। अतश्च शूद्रायां त्रैवर्णिकेभ्यो जातानामपि अनुलोमजानां द्विजधर्मत्वम्। तथा च द्विजानां तीर्थयात्रासिद्धौ तेषामपि तत्सिद्धिर्द्विजधर्माविशेषात्। उपनयनप्राप्तिस्तु शूद्रापुत्राणां संस्कारप्रकाशे विचारितम्। कुण्डगोलकयोरपि तीर्थेऽधिकारः।

शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।

इति मनुवचनात्। अपध्वंसजाः, स्वक्षेत्रे विनानुमतिमन्येनोत्पादिताः। इदं तु मिताक्षरास्वरसादुक्तम्। अपध्वंसजा व्यभिचारजा इति तद्व्याख्यानात्। मनुटीकायां तु अपध्वंसजाः प्रतिलोमजाः सूतादयः शूद्रधर्माण इत्युक्तम्। युक्तं चैतत्। सजातिजेत्यादिनाऽनुलोमजादेरुक्तत्वादपध्वंसजा इत्यनेन प्रतिलोमजानां वक्तुमुचितत्वात्। अतः प्रतिलोमजानां तीर्थेऽधिकारः सिद्धः।

शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिस्कृतः।

इति याज्ञवल्क्यवचनात् तस्य नाधिकारः सिद्ध्यति यद्यपि, तथापि—

तीर्थान्येव तु सर्वाणि पापघ्नानि सदा नृणाम्।

इति शङ्खवचनात् चण्डालकुण्डगोलकादीनामप्यधिकारः। न चैतस्य सामान्यवचनत्वात् प्रतिलोमभिन्नपरतास्त्विति वाच्यम्। "सर्वधर्मबहिष्कृत" इत्यस्य "शूद्राणां तु सधर्माण" इत्यनुरोधेन अहिंसादिविध्यनुरोधेन च सङ्कोचावश्यकत्वे एतदनुरोधेनापि सङ्कोचस्य सुवचत्वात्। स्त्रीणामपि तीर्थेऽधिकारः। विधवां प्रकृत्य—

स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः।

इति स्कान्देऽभिधानात्।

जन्मप्रभृति यत्पापं स्त्रिया वा पुरुषस्य वा।
पुष्करे स्नातमात्रस्य सर्वमेव प्रणश्यति॥

इति वचनाच्च। तत्र सधवानां पतिसाहित्येन।

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम्।
पतिं संसेवते या तु तेन स्वर्गे महीयते॥

इति मनुवाक्ये यज्ञपदस्य विहितकर्मोपलक्षकत्वात्। पत्यनुमत्याऽधिकारः।

व्रतोपवासनियमान् पतिमुल्लङ्घ्य याऽऽचरेत्।
आयुष्यं हरते भर्तुर्मृता नरकमृच्छति॥

इति वचनात्। पतिमुल्लङ्घ्य, पतिमनादृत्य पत्युरननुमत्येति यावत्। पापकृतां तु पापशमनार्थं तीर्थेऽधिकारः प्रागेव प्रपञ्चितः।

अथ तीर्थयात्रेतिकर्तव्यताऽभिधीयते।

ब्रह्मपुराणे,

यो यः कश्चित्तीर्थयात्रां तु गच्छेत्सुसंयतः स तु पूर्वं गृहे स्वे।

कृतोपावासः शुचिरप्रमत्तः सम्पूजयेद्भक्तिनम्रो गणेशम् ॥
देवान्पितॄन् ब्राह्मणांश्चैव साधून्धीमान् विप्रो वित्तशक्त्याप्रयत्नात् ।
प्रत्यागतश्चापि पुनस्तथैव देवान् पितॄन् ब्राह्मणान् पूजयेच्च ॥

एवं कुर्वतस्तस्य तीर्थाद्यदुक्तं फलं तत्स्यान्नात्र सन्देहोऽस्ति । सुसंयतः, पूर्वदिने कृतैकभक्तादिनियम इति केचित् । ब्रह्मचर्य्यादियुक्त इति तु युक्तम् । गृहे स्वे इति स्वगृहाद्यात्रा मुख्याऽसम्भवेऽन्यतोऽपि यात्रा कार्य्या । निर्गृहाणामपि यात्रासमाचारात् । गृहेष्विति क्वचित्पाठः । कृतोपवास इति अतीतत्वबोधकनिष्ठया उपवासपरदिने गणेशपूजादिकं कुर्य्यादित्यर्थो लभ्यते । देवान्, ग्रहान् इष्टदेवं चाचारात् । पितॄणां पूजनं श्राद्धरूपम् । ब्राह्मणपूजनं गन्धमाल्यवस्त्रालङ्कारादिना । वित्तशक्त्या, स्ववित्तानुसारेण । उपवासपरदिने श्राद्धम्—

शुभे तिथौ शुभे वारे शुभे लग्ने चरेद्द्विजः ।
उपोष्य रजनीमेकां प्रातः श्राद्धं विधाय च ॥
गणेशं ब्राह्मणान्नत्वा भुक्त्वा प्रस्थितवान् सुधीः ।

इति स्कान्दवचनादपि लभ्यते । अत्र गणेशं ब्राह्मणान्नत्वेति क्रमो न विवक्षितः । "सम्पूजयेद्भक्तिनम्र" इत्यादिविधिबोधितक्रमाविरोधात् । अर्थवादस्थक्रमदौर्बल्यात् । कल्पतरावेत एव यात्राधर्मा उक्ताः । एवं च पूर्वदिने यथाविध्युपोष्य परदिने गणेशं ग्रहान् स्वेष्टदेवं च पूजयित्वा घृतप्रचुरं श्राद्धं विधाय त्रीन् ब्राह्मणान् गन्धादिना पूजयित्वा यात्रासङ्कल्पं कुर्यात् । वक्ष्यमाणवचनात्तत्रैव मुद्राकङ्कणकाषायपरिधानरूपं कार्पटीवेषं कृत्वा ग्रामं वासावच्छिन्नं प्रदक्षिणीकृत्य क्रोशाभ्यन्तरग्रामं गत्वा श्राद्धशेषेण घृतेन पारणं

कुर्य्यात्। ततो दिनान्तरे प्रातः कृतस्नानादिर्गच्छेत्। प्रत्यागतस्तथैव वित्तानुसारेण देवान् ग्रहादीन्, पितृंश्च श्राद्धेन, ब्राह्मणान् गन्धादिना पूजयेत्। देवानित्यादेः पुनरभिधानादुपवासगणेशपूजयोर्निवृत्तिः। प्राञ्चस्तु तथैवेत्यनेन उपवासस्यापि प्राप्तिः, स च स्वगृहागमनपूर्वदिने, देवानित्यादितश्च गणेशपूजानिवृत्तिरित्याहुः। तच्चिन्त्यम्। तथैवेत्यस्य वित्तानुसारेणेत्यर्थेनैवोपपत्तेः। स्वगृहं प्राप्य देवादिकं पूजयेत्। एतच्च श्राद्धत्रयं यात्रार्थमिति यात्रार्थश्राद्धमित्येव वाक्यं कार्य्यम्। स्वगृहासम्भवे स्वगृहागमनविलम्बाद्वा वा यत्र कापि श्राद्धादि कृत्वा यात्रा समापनीयेत्याचारः। नात्र सन्देहमस्तीत्यत्रापि लिङ्गत्यागः। सन्दिग्धमस्तीतिकल्पितः पाठः। स्मृतिसमुच्चये तीर्थयात्रायां मुण्डनमप्युक्तम्। तद्वचनमग्रे वक्ष्यते। तीर्थयात्रानिमित्तकं श्राद्धं प्रचुरघृतेन कार्य्यम्।

गच्छन् देशान्तरं यत्तु श्राद्धं कुर्वीत सर्पिषा।
यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः॥

इति भविष्यपुराणवचनात्। यत्तु "व्रीहिभिर्यजेत" इत्यत्र तृतीयया निरपेक्षसाधनत्वबोधनादन्यनिवृत्तिवदत्रापि निरपेक्षसाधनत्वप्रतीतेर्घृतमात्रेणैव श्राद्धं न त्वन्नादिना इति, तन्न। केवलघृतस्य भक्ष्यत्वसमाचारविरहात् केवलघृतेन पिण्डदानासम्भवाच्च प्रचुरघृतयुक्तेनान्नेन श्राद्धं कार्य्यम्। नच प्राचुर्य्ये तृतीयाया अननुशासनात् कथमेवमितिवाच्यम्।

आम्राऽपूपैः सदा कार्य्या मांसैरन्या भवेत्तथा।
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः॥

इति वायुपुराणवचने प्रचुरशाकादिना शाकाष्टकादिश्राद्धं कार्य्यमिति तात्पर्य्येण यथा तृतीयायाः प्राचुर्य्यबोधकत्वं

तथात्रापि सम्भवात् । न च तत्रापि केवलशाकादिना श्राद्धमस्तु किं नश्छिन्नमितिवाच्यम् ।

नवोदके नवान्ने च गृहप्रच्छादने तथा ।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥

इतिवचनविरोधात् । अनेन वचनेनाष्टकायामप्यन्नविधानात् । यदि च तत्र शाकशब्दस्य विशेषपरत्वं न च तत्र वृत्त्यन्तरापेक्षा सामान्यशक्त्यैव विशेषपरत्वे निर्वाहात् न च तृतीयायाः प्राचुर्ये लक्षणेति, तदा प्रकृतेऽपि दीयतां दृष्टिः । किञ्च शेषमन्नं क्व देयमित्यनुज्ञाग्रहणदर्शनादपि न केवलसापेक्षा श्राद्धम् । तथा च–

ब्रह्मपुराणम् —

स तानाह पुनः शेषं क्व देयं चान्नमित्यपि ।
इष्टेभ्यो दीयतामेतदिति तं प्रवदन्ति ते ॥ इति ।

अपि च "आमा वाजस्य प्रसवो जगम्यात्" इत्यादिमन्त्रलिङ्गादप्यन्नावश्यकत्वम् । वाजस्य अन्नस्य दत्तस्य प्रसवः फलं मा मां आजगम्यात् पुनः पुनरागच्छेदित्यर्थात् । न चास्य पार्वणविकृतित्वादन्नशब्दे ऊहः, तृतीयायाः करणतामात्रबोधकत्वेनोपपत्तौ ऊहकल्पने मानाभावात् । अपि च—

तिलैर्व्रीहियवैर्माषैराद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥

इति वचनात्केवलतिलैः केवलजलेनापि श्राद्धं स्यात् । सर्वत्र न निरपेक्षसाधनत्वं तृतीयार्थ इति चेत्, प्रकृतेऽपि तुल्यम् ।

तीर्थयात्रासमारम्भे तीर्थात्प्रत्यागमेऽपि च ।
वृद्धिश्राद्धं प्रकुर्वीत बहुसर्पिःसमन्वितम् ॥

इतिहलायुधधृतकूर्मपुराणाच्च बहुघृतयुक्तान्नेनैव श्राद्धं कार्यमिति केचित् । परे तु "व्रीहिभिर्यजेत" इतितृतीयया प्रतिस्प-

द्धिप्रधानभूतद्रव्यान्तरनिरपेक्षत्वमुच्यते इति अत्रापि तथा। तथा च सर्पिषा प्रधानद्रव्येणेत्यर्थः पर्यवस्यति। एवं च नामगोत्राद्युच्चार्य्य एतत्सोपकरणं घृतमित्यादिवाक्यं कार्य्यम्। कार्य्यं च श्राद्धशेषघृतेनैव ग्रामान्तरे पारणमित्याहुः। तन्न। प्रकृतौ अन्नस्य प्रधानत्वादत्र तन्निवृत्त्यापत्तेः। अत एव व्रीह्यादौ निरपेक्षत्वस्य तृतीयागम्यत्वेऽपि श्राद्धप्रकरणस्थद्रव्यविधीनां न तत्र तात्पर्य्यं भोजनपदार्थस्य परस्परसाहित्येनैव लोके प्रसिद्धत्वात्। अतो घृतस्य प्रकृतिप्राप्तस्यापि पुनर्वचनं प्राधान्यसिद्ध्यर्थम्। अतश्चान्नस्य प्राधान्यमात्रं निवर्त्तत इति सिद्ध्यति वाक्यकरणादिफलमित्येव युक्तम्।

इदं च श्राद्धमाभ्युदयिकश्राद्धप्रकृतिकमिति केचित्। तन्न। असति विशेषश्रवणे सर्वप्रकृतित्वेन क्लृप्तस्य पार्वणस्यैव प्रकृतित्वात्, अत एव गणेश्वरमिश्रादयोऽप्येवमिति वाचस्पतिमिश्रा लिखन्ति स्म। परे तु उत्कलखण्डे इन्द्रद्युम्नतीर्थयात्राप्रकरणे—

आमुक्तशुक्लवसनः स्वाचान्तः सपवित्रकः।
नान्दीमुखान् पितृगणान् पूजयित्वा यथाविधि॥

इति दर्शनात् भाविनिमित्तके सर्वत्र वृद्धिश्राद्धदर्शनाद तीर्थयात्रासमारम्भ इति पूर्वलिखितवचनाच्च,

अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके।
पुंसवने निषेके च नववेश्मप्रवेशने॥
देववृक्षजलादीनां प्रतिष्ठायां विशेषतः।
तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम्॥

इति मत्स्यपुराणवचनाच्चात्र वृद्धिश्राद्धमेवेदमित्याहुः। श्राद्धं चेदं छन्दोगानां षड्दैवतमन्येषां नवदैवतं द्वादशदैवतं वा इति। उपवासदिने मुण्डनमपि कार्य्यम्।

प्रयागे तीर्थयात्रायां पितृमातृवियोगतः ।
कचानां वपनं कार्य्यं न वृथा विकचो भवेत् ॥

इति स्मृतिसमुच्चयलिखितविष्णुवचनात् । कृततीर्थयात्रस्य गृहप्रवेशे तु न वपनं मानाभावात् । न चेदं वचनं प्रायश्चित्तार्थतीर्थयात्रायामेवेतिवाच्यम्, सङ्कोचे मानाभावात् । अन्यथा श्राद्धस्यापि तत्परत्वापत्तेः । ननु—

अनुभाविनां परिवापणं समावृत्ता न वपेरन्नन्यत्र विहारादित्येके अथापि ब्राह्मणं रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्यैतदपिधानं यच्छिखेति सत्रेषु तु वचनाद्वपनं शिखायाः ।

इति आपस्तम्बवचनाद्यज्ञदीक्षारूपविहाराद्यतिरिक्ते कथं मुण्डनमिति चेत्, न । एतस्याविहितमुण्डनपरत्वात् । अत एवात्रापि वृथेत्युक्तम् । विधिं विनेति तदर्थः । एके एवं मन्यन्ते । स्वपक्षस्तु वपेरन्निति । तत्रैकेषां मतमेव साधु वपननिषेधस्यापि श्रुतेः । अतो ब्राह्मणमुदाहरति-अथापीति । एतद्ब्राह्मणपर्यालोचनया वपननिषेधः सशिखवपनपर इति सूत्राभिप्राय इति । नन्वेवम् "उदवसानीयान्ते दक्षिणस्यां वेदिश्रोणौ सर्वं केशश्मश्रुलोमवपनम्" इति कात्यायनसूत्राद्गवामयने सशिखवपनं सत्रे विहितं तदसङ्गतं स्यादतः सत्रेष्विति । एवमेव सूत्रं भाष्ये व्याख्यातम् । एतेन ज्ञायते वपननिषेधश्रुतिः सशिखवपनपरा । अन्यथा विहारातिरिक्तवपनमात्रस्यैव निषेधे पित्रादिवियोगेऽपि तन्न स्यात् ।

क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः ।
( शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः । )

इति स्नातकधर्मविधायकमनु(याज्ञवल्क्य)वचनविरोधापत्तेश्च । नी-

(१) क्लृप्तं छिन्नमित्यर्थः ।

चत्वं च—

मासादूर्ध्वमनायुष्यं पक्षादर्वाक् च सम्पदः ।

इति ज्योतिषादवसेयम् । "त्रिः पक्षस्य केशश्मश्रुनखलोमानि संहारयेत्" इति सद्वृत्ताध्याये चरकेणाभिधानाच्च ।

श्राद्धानन्तरं गमनसङ्कल्पः ततः कार्पटिकवेषधारणं कार्य्यम् । तदुक्तम्—

वायुपुराणे,

उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कार्पटीवेषं कृत्वा ग्रामं प्रदक्षिणम् ॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ।
ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ॥
पदे पदेऽश्वमेधस्य फलं स्याद्गच्छतो गयाम् ।

कार्पटीवेषः, ताम्रमुद्रातीम्रकङ्कणकाषायवस्त्रधारणम् । गमनफलं च यद्यपि गयायामेव श्रूयते तथापि तीर्थान्तरयात्रायामपि द्रष्टव्यम् एकत्र निर्णीत इतिन्यायात् । फलाकाङ्क्षायां च गमनफलत्वेन श्रुतस्यास्यैवान्यत्रापि गमनफलत्वमुचितमन्तरङ्गत्वात् न तु विश्वजिन्न्यायादत्र फलकल्पनं तस्य बहिरङ्गत्वेनोपस्थितिगौरवादितिमिश्राः । वस्तुतः उपक्रमोपसंहाराभ्यां गयायात्रायामेव तदिति प्रतिभाति । "उद्यतश्चेद्गयाम्" इत्यनेनोपक्रमात् "फलं स्याद्गच्छतो गयाम्" इत्यनेनोपसंहारात् । यच्चोक्तं तीर्थान्तरयात्रायामप्येतदेव फलं, तदपि चिन्त्यम् ।

दानधर्मे गोलोकं प्रकृत्य—

मनस्विनस्तीर्थयात्रापरायणास्ते ह्यत्र मोदन्ति गवां निवासे ।

इति सामान्यतस्तीर्थयात्राफलाभिधानात् तस्यैव तीर्थान्तरयात्रायामन्वयात् । तथा प्रभासादीनुपक्रम्य—

सरस्वतीदृषद्वत्यौ यमुनां येऽनुयान्ति च ।
तत्र ते दिव्यसंस्थाना दिव्यमाल्यधराः शिवाः ॥
प्रयान्ति पुण्यगन्धाढ्याः—

इति विशेषतोऽपि यात्राफलश्रवणात् इति । अतश्च कार्पटीवेषधारणमपि गयायात्राङ्गमेव युक्तम् । श्राद्धानन्तरं यद्यपि ग्रामान्तरगमनं निषिद्धम् ।

पुनर्भोजनमध्वानं द्यूतमायासि मैथुनम् ।
श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद्विवर्ज्जयेत् ॥

इति मात्स्यात् । तथापि ग्रामान्तरगमनमत्र सति सम्भवे क्रोशाभ्यन्तरग्राम एवेति बोध्यम् । "अध्वनि च क्रोशपूरणे" इत्यादिना श्राद्धानन्तरं हारीतेन क्रोशगमननिषेधादिति । असम्भवे क्रोशादूर्ध्वगमनेऽपि न दोषः । एवं प्रतिपदाश्वमेधजन्यफलसमजातीयफलादिप्राप्तिकामोऽहममुकतीर्थयात्रां करिष्य इति सङ्कल्प्य तत्तत्तीर्थयात्रां कुर्यात् । यदि तु अनिर्द्धारितानि तीर्थानि गन्तव्यानीत्यभिप्रायस्तदा विशेषमनभिधाय तीर्थयात्रां करिष्य इत्येव वाच्यम् । कार्पटीवेषधारणं यात्राङ्गम् । अतः स्नानभोजनतीर्थस्नानादिकाले तस्य नावश्यकता । स्नानादिकाले काषायवस्त्रादिधारणेऽपि न क्षतिः कर्म्मकाले रक्तवस्त्रनिषेधस्य धातुरक्तभिन्नविषयत्वात् । धातुरक्तस्य स्वभावशुद्धत्वकथनात् । यथा—

व्यासः,

अच्छिन्नाग्रं तु यद्वस्त्रं मृदा प्रक्षालितं च यत् ।
अहतं धातुरक्तं च तत्पवित्रमिति स्थितिः ॥ इति ।

हेमाद्रौ श्राद्धखण्डे गयाप्रकरणे भारते,

"केशश्मश्रुनखादीनां वपनं च न शस्यते ।

अतोऽन्न कार्य्यं वपनं गयाश्राद्धार्थिना सदा ॥

ये भारतेऽस्मिन् पितृकर्मतत्पराः सन्धार्य्य केशानतिभक्तिभाविताः ऋणक्षयार्थं पितृतीर्थमागतास्तेषामृणं सङ्क्षयमेष्यति ध्रुवम् ॥

इदं वचनं तु,

वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ।

इत्यनेनैकवाक्यतया तीर्थप्राप्तिनिमित्तकमुण्डननिषेधकम् । परे तु एतद्वचनबलाद्गयायात्रायामपि न मुण्डनं, सन्धार्य्य केशान् आगता इत्यन्वयादित्याहुः। तच्चिन्त्यम् ।सन्धार्य्य केशान् पितृकर्मतत्परा इत्यनेन सन्निहितान्वयेन निर्वाहे, तीर्थयात्रायां वपनविधायकस्य सङ्कोचायोगात्, गौडदेशादौ भारते एतद्वचनस्यानुपलभ्यमानत्वाच्च । अत्र च प्रतिदिनगमनविधानात् स्वेच्छया विलम्ब्य न स्थातव्यम् । भयाद्यनुरोधादवस्थाने न दोषः । यद्युपवासदिन एव रात्रौ यात्रामुहूर्त्तो दैवज्ञाद्यावेदितो भवति तदा छत्रादिप्रस्थानं स्थापयित्वा परदिने श्राद्धं कृत्वा गृहान्निर्गन्तव्यं न तु मुहूर्तानुरोधादुपवासदिन एव श्राद्धं कृत्वा रात्रौ प्रस्थातव्यम् । श्राद्धे उपवासोत्तरत्वस्य विहितस्य भङ्गप्रसङ्गात् । उपवासासमर्थस्तु उपवासप्रतिनिधिं कुर्यात् ।

नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् ।

यत्पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरं च ॥

इत्यभिधानात् । अत्र केचिद्यात्रायां सङ्कल्पो न कार्य्यः अङ्गत्वेन निष्फलत्वादित्याहुः । तच्चिन्त्यम् ।"फलं स्याद्व्रजतो गयाम्" इत्यादिना गमनस्यैव फलवत्ताप्रतीतेः । स्यादेतत् । यदि तीर्थयात्रायां पदे पदेऽश्वमेधफलं तर्हि यात्रैव तीर्थापेक्षया गरीयसी स्यात्, न हि सिंहापेक्षया तल्लाङ्गूलस्य पराक्रमातिशय, इति वक्तुं श्रोतुं च युज्यत इति ।

तस्माद्यात्रादिविशिष्टस्य तीर्थस्यैव तत् फलम्। अतः "एवं कुर्वं-स्तस्य तीर्थाद्यदुक्तं फलं तत्स्यान्नात्र संदेहमस्ति" इत्युक्तम्। न च

तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे समाचरन्।
स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु॥

इति वचनाद्यात्राया अपि फलमवगम्यते इति वाच्यम्। यात्रादिविशिष्टस्य यादृशं फलं तादृशं फलं न लभत इति तदर्थात्। तस्माद्यात्रायाः फलश्रवणं "यस्य पर्णमयी" इत्यादिवदर्थवाद एवेति। मैवम्।

विनश्यति महायज्ञैरथवा तीर्थचर्य्यया।

इत्यनेन,

अश्वमेधेन शुद्ध्यन्ति तीर्थानुसरणेन वा।

इत्यादिना च तीर्थयात्राया एव तृतीयया फलसाधनत्वावगमात्।

शृण्वन्तु मुनयः सर्वे तीर्थस्नानफलं महत्।
गमनं स्मरणं चैव सर्वकल्मषनाशनम्॥

इति वामनपुराणाच्च।

भारते तीर्थयात्रायाम्,

श्रवणाच्चैव तेषां त्वं पुण्यमाप्स्यसि पाण्डव।
गत्वा शतगुणं चैव तेभ्य एव नरोत्तम॥

इति वचनम्,

वाराणस्यां महातीर्थे नरः स्नात्वा विमुच्यते।
सप्तजन्मकृतात् पापाद्गमनादेव मुच्यते॥

इति वचनं च प्रागेवोपन्यस्तमिति। न चैतानि वचनानि प्रायश्चित्तार्थयात्राया एव फलमभिदधति नान्यस्या इति वाच्यम्।

तीर्थानि तु यथोक्तेन विधिना सञ्चरन्ति ये।

सर्वद्वन्द्वसहा धीरास्ते नराः स्वर्गगामिनः ॥

इत्यादिवचनाद्यात्रायाः स्वर्गार्थताया अपि प्रतीतेः । "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यादौ तु कामशब्दाभावादाश्रयाभावाच्च न फलार्थता । प्रकृते तु यात्रायाः क्रियारूपत्वान्नाश्रयापेक्षा अतः फलार्थत्वमेव युक्तम् । न च क्रियारूपाणामपि प्रयाजानां प्रकरणेन क्रत्वङ्गत्वावगमात् फलश्रवणस्यार्थवादत्वमिष्टमेवेति वाच्यम् । "वर्म वा एतद्यज्ञस्य क्रियते" इत्यर्थवादत एव प्रयाजादीनां क्रत्वङ्गत्वावगमात्तत्र श्रुतस्य फलस्य युक्तमर्थवादत्वम् । प्रकृते तु तीर्थस्नानादेः यात्रायाश्च तुल्यवत्फलार्थत्वप्रतीतेर्न परस्पराङ्गत्वमिति विशेषः । एवं च—

स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु ।

इत्यत्रापि कष्टकल्पना नोचितेत्यनुचिन्तनीयमायुष्मद्भिरिति । एवं च प्राप्ततीर्थस्य राजबलात्कारादिनाऽकृततीर्थस्नानस्यापि यात्राफलं सिद्ध्यत्येवेति ध्येयम् । केचित्तु यात्रायाः प्रधानत्वमङ्गत्वं च खादिरत्ववत्तत्तद्वचनबलात् सिद्ध्यतीत्याहुः । न चान्यानर्थक्यदोषः कर्मानुसारेण फले तारतम्यकल्पनात् । अतश्चाश्वमेधफलसमानजातीयमेव फलं स्वल्पं भवतीति कल्प्यते इति न कश्चिद्विरोधः ।

## अथ तीर्थयात्रायां यानविचारः ।

मत्स्यपुराणे मार्कण्डेयवाक्यम्—

कथयिष्यामि ते वत्स तीर्थयात्राविधिक्रमम् ।
आर्षेणैव विधानेन यथादृष्टं यथाश्रुतम् ॥
बलीवर्दसमारूढः शृणु तस्यापि यत्फलम् ।
नरके वसते घोरे गवां क्रोधो हि दारुणः ॥

सलिलं च न गृह्णन्ति पितरस्तस्य देहिनः ।
ऐश्वर्यलोभमोहाद्वा गच्छेद्यानेन यो नरः ॥
निष्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्जयेत् ।

ऐश्वर्याद्यभिधानादशक्त्या यानेन गमने न दोष इति प्रतिभाति ।

नरयानं चाश्वतरीहयादिसहितो रथः ।
तीर्थयात्रास्वशक्तानां यानदोषकरं नहि ॥

इति कूर्मपुराणाच्च । अयं च निषेधः प्रयागमात्रपरः तत्प्रकरण एव मत्स्यपुराणे श्रुतत्वादिति कल्पतरुः । वस्तुतः प्रयागोपक्रमेऽपि—

एवं कुरुष्व कौन्तेय सर्वतीर्थाभिषेचनम् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

इत्युपसंहारे एवमित्यनेन प्रयागधर्मस्य सर्वतीर्थेष्वतिदेशदर्शनात् सर्वतीर्थपरत्वनिर्णयः । न च प्रयागावान्तरतीर्थपरं सर्वेदमिति युक्तम् ।

अन्ये तु बहवस्तीर्थाः सर्वपापहराः स्मृताः ।
तेषु स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥

इति पूर्वमेव तदभिधानात् । अत एव सर्वतीर्थपदं बहुव्रीहिणा प्रयागपरमिति निरस्तम् । वक्ष्यते चाधिकमुपरिष्टात् । पठन्ति च—

गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम् ।
नरयाने तदर्धं स्यात् पद्भ्यां तच्च चतुर्गुणम् ॥

पद्भ्यामिति पादुकाशून्याभ्यां पद्भ्यां सातिशयतीर्थफलं भवति न तु तत्परिधाने दोषो निषेधाश्रवणात् इति केचित् ।

वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च ।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥

इति विष्णुपुराणीयवचनेन निष्प्रतिपक्षसदाशब्दस्वरसात्तीर्थयात्रायामप्युपानत्परिधानमावश्यकमिति तु मिश्राः। वस्तुतस्तु

यानमर्धफलं हन्ति तदर्धं छत्रपादुके।
वाणिज्यं त्रींस्तथा भागान् सर्वं हन्ति प्रतिग्रहः॥

इति वचनादुपानद्विशिष्टगमने फलस्य पादह्रासः। एवं च "पद्भ्यां तच्च चतुर्गुणम्" इत्यत्र गुणशब्दः पादपरः "कृते चतुर्गुणो धर्म" इति वत्। एतेन यानेऽर्धफलं पादुकासाहित्ये पादफलं न्यूनं पद्भ्यां याने चतुर्गुणमिति यदि तदा सम्पूर्णं फलं कुत्रेति शङ्काभासो निरस्तः। पद्भ्यां चतुर्गुणं चतुष्पादं सम्पूर्णं फलमित्यर्थात्। यत्तु यथा "एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्" इत्यत्र द्वन्द्वलभ्यसाहित्यविवक्षा तथाऽत्रापीति छत्रसहितोपानत्परिधान एव पादह्रासो न तु केवलोपानत्परिधान इति, तन्न। तत्र ह्युपादेयकर्तृगतत्वेन विवक्षौचित्यात्। इह तूद्देश्यगतत्वेन तदविवक्षणात्। अत एव "यस्य पुरोडाशौ क्षायतः" इत्यत्र साहित्याविवक्षेति। "नौकायानमयानं स्यात्" इतिवचनान्नौकायाने न दोष इत्येके। नौकां विना यत्र गङ्गासागरादौ गमनं न सम्भवति तत्परमिदमित्यन्ये।

## अथ तीर्थफलतारतम्यहेतवः।

शङ्खः,

तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे समाचरन्।
स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु॥

अनुषङ्गोऽत्र पित्रादिसेवाध्ययनाद्यर्थं विदेशगमनम्। तेन दैवात्तीर्थलाभे स्नानजं फलम्। स्नानपदं श्राद्धादेरप्युपलक्षकम्। तेन यात्रायाः स्वातन्त्र्यात्तीर्थस्नानाद्यनङ्गत्वात् यथा-

विधि यात्रामकृत्वा यस्तीर्थं गतस्तस्य यात्राफलाभावेऽपि तीर्थस्नानादिफलं भवत्येव । एवं तीर्थ एव यो जातसंवृद्धो यो वाऽग्निहोत्री तीर्थे वसति स तीर्थस्नानादिफलं सम्पूर्णं लभत एव ।

पैठीनसिः,

षोडशांशं स लभते यः परार्थेन गच्छति ।
अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ॥

परार्थेन, वेतनादिना । प्रसङ्गोऽत्र गुरुसेवाध्ययनवाणिज्यादिरेव विहिताविहितरूपः । एवं च एतदनुरोधात् "स्नानजं फलमाप्नोति" इत्यस्यापि वाक्यस्यार्द्धं स्नानजं फलमाप्नोतीत्यर्थः कर्त्तव्यः । एवं चानुषङ्गप्रसङ्गौ समानार्थौ इति केचित् । परे तु तीर्थान्तरोद्देशेन गमनमनुषङ्गः, सेवाद्युद्देशेन गमनं प्रसङ्गः । एवं चानुषङ्गे पूर्णं तीर्थस्नानफलं प्रसङ्गेऽर्धम् । न च सेवाद्युद्देशेन गमनमनुषङ्गः तीर्थान्तरोद्देशेन गमनं प्रसङ्ग इति विपरीतं किं न स्यादिति वाच्यम् । सेवाद्युद्देशेन गमने सम्पूर्णं तीर्थफलं तीर्थान्तरोद्देशेन गमनेऽर्द्धं फलमिति अनौचित्यादित्याहुः । वस्तुतस्तु "प्रसङ्गेन गच्छति" इत्यत्र प्रसङ्गेन गमने यात्राफलस्यैवार्द्धत्वं प्रतिपाद्यते न तु तीर्थस्नानादिफलस्य । यात्रायाः स्नानाद्यनङ्गत्वेन तदभावेऽपि तस्य साङ्गत्वेन तत्फलेऽर्द्धत्वकल्पनानौचित्यात् । अत एवानुषङ्गप्रसङ्गयोः समानार्थत्वेऽपि "तीर्थयात्राफलं न तु" इत्यनेन पूर्णत्वस्यैव निषेधः एतद्वचनैकवाक्यतयाऽर्द्धस्य स्वीकारात् ।

प्रभासखण्डे,

यश्चान्यं कारयेच्छक्त्या तीर्थयात्रां तथेश्वरः ।
स्वकीयद्रव्ययानाभ्यां तस्य पुण्यं चतुर्गुणम् ॥

विशिष्टब्राह्मणानां तीर्थगमनानुकूल्येऽष्टगुणमप्युक्तम्—
भारते युधिष्ठिरं प्रति,

नेता च त्वमृषीन् यस्मात्तेन तेऽष्टगुणं फलम् । इति ।

तीर्थयात्रानुरोधादगम्यदेशगमनेऽपि न दोषः ।

अङ्गवङ्गकालिङ्गेषु सौराष्ट्रमगधेषु च ।
तीर्थयात्रां विना यातः पुनः संस्कारमर्हति ॥

इति स्मृतेः ।

### अथागम्यदेशाः ।

पारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च ।
प्रणष्टाश्रमधर्माश्च देशा वर्ज्याः सदैव हि ॥

विष्णुः, न म्लेच्छविषये श्राद्धं कुर्यात् न गच्छेत् म्लेच्छविषयपरनिपानेष्वपः पीत्वा तत्साम्यमुपगच्छति ।

चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।
तं म्लेच्छदेशं जानीयादार्यावर्त्तमतः परम् ॥ इति ।

चरत्कृष्णसारोऽपि मगधादिरगम्यदेशः । तदुक्तम्—
ब्रह्मचारिकाण्डे,

आनर्त्तकाङ्गमगधाः सुराष्ट्रा दाक्षिणापथः ।
उपावृत्तिसिन्धुसौवीरा एते सङ्करयोनयः ॥

आरट्टकान् पारस्करान् सौवीराङ्गकालिङ्गकान् ।
प्रासूरांश्च तथा गत्वा पुनःस्तोमेन याजयेत् ॥

तेनैतेषां गमने पुनः संस्कारः ।

तथा,

अङ्गवङ्गकालिङ्गेषु सौराष्ट्रमगधेषु च ।
तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हति ॥

तीर्थयात्राप्रसङ्गेन तेषां गमनमदुष्टमित्यर्थः । तीर्थयात्रां

विनाऽपि गङ्गाक्षेत्राद्यवच्छिन्नमगधादिसञ्चारे न दोषः ।

न श्मशानं न चादेशो गङ्गायां परिकीर्त्यते ।

इति गङ्गामाहात्म्यलिखनात् ।

वायुपुराणे,

त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम् ।

उत्तरेण महानद्या दक्षिणेन च कीकटात् ।

देशस्त्रैशङ्कवो नाम श्राद्धकर्मविगर्हितः ॥ इति ।

बौधायनः,

आनर्त्तान् पारस्करान् पुण्यान् पुण्ड्रान् सौवीरानङ्गकलिङ्गमासूरानिति च गत्वा पुनः स्तोमेन यजते सर्वपृष्ठया वा । अथाप्युदाहरन्ति—

पद्भ्यां स कुरुते पापं यः कलिङ्गान् प्रपद्यते ।

ऋषयो निष्कृतिं तस्य प्राहुर्वैश्वानरं हविः ॥

आनर्त्तो, द्वारका यस्मिन् देशे । अङ्गः चम्पाप्रदेश इति कल्पतरुः । यदि तु तीर्थयात्रादौ कर्मनाशा नदी अन्तरा पतति तदा यथा जलस्पर्शो न भवति तथा तदुल्लङ्घनं कार्यम् ।

कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात् ।

गण्डकीबाहुतरणात् पुनः संस्कारमर्हति ॥

इति वचनात् । धर्म्मः क्षरति कीर्त्तनादिति चतुर्थं चरणमन्ये पठन्ति । के च न मैथिलास्तु "करतोयाजलस्पर्शात् कर्मनाशाविलङ्घनात्" इति, पठित्वा कर्मनाशापारगमनं तीर्थयात्रायामपि निषेधन्ति । तन्न साधीयः । कर्मनाशाजलस्पर्शस्य तैरपि विगीतत्वेन पूर्वोक्तवचनप्रामाण्यस्य तैरपि स्वहस्तिततत्वात् । एतद्वचनस्य दक्षिणदेशीयादिबहुतराशिष्टाचाराविरोधेनाप्रामाण्यात् । किञ्च—

करतोयां समासाद्य त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥
इत्यारण्यकपर्वणि करतोयास्नानश्रवणात्,
करतोये सदानीरे सरिच्छ्रेष्ठे सुविश्रुते ।
पौण्ड्रान् प्लावयसे नित्यं पापं हर करोद्भवे ॥

इति स्मृतिदर्पणलिखितकरतोयास्नानमन्त्राविरोधाच्च । वचनैकदेशाप्रामाण्यनिर्णये सर्वस्य वचनस्याप्रामाण्यनिर्णयात् । पौण्ड्रान्, देशविशेषान् ।

## अथ प्रशस्तदेशाः ।

मनुः,

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥
तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां सदाचारः स उच्यते ॥
कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥
आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्य्यावर्त्तं विदुर्बुधाः ॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः ॥
एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः ।

शूद्रस्तु यस्मिंस्तस्मिन् वा निवसेद्वृत्तिकर्षितः ॥

सरस्वतीदृषद्वत्योर्विशेषणं देवनद्योरिति। अन्तरालाः, सङ्करजातयः। मत्स्यादिशब्दा बहुवचनान्ता देशपराः। मत्स्याः, विराटदेशाः। पञ्चालाः, कान्यकुब्जादिदेशाः। शूरसेनकाः, मथुरादिदेशाः। विनशनं, यत्र सरस्वती नष्टा। ततः पूर्वस्यां प्रयागात् पश्चिमायां च दिशि मध्यदेश इत्यर्थः। एतान् संश्रयेरन्निति परिसङ्ख्या। पञ्च पञ्चनखा भक्ष्या इतिवत्। पर तु न हि निन्दा निन्दितुं प्रवर्तत इतिन्यायेन "म्लेच्छदेशस्ततः पर" इति ब्रह्मावर्तादिस्तुत्यर्थमेवेत्याहुः।

## अथ यात्रानियमः।

भविष्ये,

तीर्थं गच्छन् त्यजेत्प्राज्ञः परान्नं परभोजनम्।
जितेन्द्रियो जितक्रोधो ब्रह्मचारी भवेच्छुचिः॥

परान्नं, परेभ्यो लब्धं स्वपक्वमपि। परभोजनं, परपाकेन परस्वामिकभोजनम्। स्वपत्नीपक्वाभिन्नमेव निषिद्धमिति नार्थः मातृभ्रातृपक्वेऽविगानात्।

तथा,

शुचिवस्त्रधरः स्नातो नित्यहानिं न कारयेत्।
गच्छेत्तीर्थं शनैर्विद्वान् सततं संयतेन्द्रियः॥
यथाशक्ति ददद्दानं विप्रेभ्यः प्रीतिमावहन्।
श्राद्धं कुर्यात् सदा दाने जपेत्तत्तीर्थमोदने॥

यद्यपि—

नरकं दारुणं श्रुत्वा परान्ने तु रतिं त्यजेत्।
यो यस्यान्नमिहाश्नाति स तस्याश्नाति किल्बिषम्॥

इति पद्मपुराणे सामान्यतः परान्नभोजनं निषिद्धमेव।

तथाप्यनिन्द्यभोजनस्यानिषेधादत्र तस्यापि निषेधार्थमधिक-दोषार्थं वेदम्।

तथा,

तीर्थे गच्छन् चरेत् सन्ध्यास्तिस्र एकत्र मानवः।
नास्नातो नाशुचिर्गच्छेन्न भुक्त्वा न च सूतकी॥

तिस्रः सन्ध्या एकत्र चरेदित्यनेन प्रातरेव कृतदिनकृत्येन चलितव्यमिति प्रतीयते इति वदन्ति। अशुचिः, पुरीषादिकं कृत्वाऽकृतशौचः चण्डालादिस्पर्शेऽकृतस्नानश्च। ननु—

तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति॥

इति वचनेनास्य विरोध इति चेत्, मैवम्। तीर्थे विवाह इत्यनेन अनिवार्य्यतीर्थाद्यधिकरणकास्पृश्यस्पर्शो न दोषाये-त्यभिधानात्। स्पृष्टास्पृष्टिर्न दुष्यतीतिवचनं, पक्वान्नशुद्धौ कल्पतरुकृता लिखितं तीर्थे पक्वान्नस्पर्शे न दोष इति। अत एव पुरुषोत्तमक्षेत्रादौ तथैव शिष्टाचार इति। अन्ये तु "स्पृष्टास्पृष्टिर्न दुष्यति" इति वचनमनेनाहं स्पृष्ट इति ज्ञानं यत्र नास्ति तद्वि-षयमित्याहुः। यात्रामध्ये यद्याशौचं पतति तदाऽऽशौचनिवृत्तौ गन्तव्यं "न च सूतकी" इति वचनात्। एवं रजस्वलयापि। यद्वा—

दीक्षितेष्वभिषिक्तेषु व्रततीर्थपरेषु च।
तपोदानप्रसक्तेषु नाशौचं मृतसूतके॥

इति वचनात् यात्रोत्तरं सूतकादौ न दोषः। "न च सूतकी" इतिवचनं तु यात्रापूर्वं सूतके सति न गच्छेदित्येत-त्परम्। दीक्षितेष्वित्यनेन दीक्षणीयेष्ट्युत्तरं यजमानस्य यत्कर्म तत्राशौचं नास्तीतिदर्शितम्।

गरुडपुराणे,

तीर्थे चलित्वा यः कोऽपि पुनरायाति वै गृहे ।
अनुज्ञातः शुभैर्विप्रैः प्रायश्चित्तं समाचरेत् ॥

तीर्थार्थं चलितो यदि दैवात् परावर्त्तते स ब्राह्मणानुज्ञां गृहीत्वा प्रायश्चित्तमाचरेदित्यर्थः ।

तथा,

यस्तीर्थसम्मुखो भूत्वा व्रजन्ननशने कृते ।
चेन्म्रियेदन्तराले तु ऋषीणां मण्डलं व्रजेत् ॥

अनशने इत्यत्र चकारोऽध्याहार्यः । एवञ्च तीर्थार्थं व्रजन्मृतः मासोपवासादिरूपेऽनशने च मृत इत्यर्थः ।

अथ तीर्थयात्रायां कालशुद्धिर्निरूप्यते ।

ज्यौतिषे, त्यजेदिति प्रकृत्य ।

लालाटिनि दिगधीशे दिग्बलिविहगे ललाटगे वापि ।

लालाटिदिग्धीशं लालाटिदिग्विहगं चैकश्लोकेन स्पष्टयति—

रायमुकुटः,

जीवार्कज्ञेषु लग्ने हरिदिशि भृगुजे ऽन्त्यायगेऽग्नौ न यायात्
याम्यां सौरारयोः खे नवमनिधनयोर्नैर्ऋते सैंहिकेये ।
पश्चात्सौरेस्तु राशौ पवनदिशि विधौ पञ्चषष्ठोपयाते
बन्धौ शुक्रेन्दुवित्स्वुत्तरदिशि च गुरौ द्वित्रिगे शम्भुकोणे ॥

अयं च फलितोऽर्थः । गुरुबुधसूर्या लग्नस्थाः प्राग्याने नेष्टाः। एवमाग्नेयीयाने व्ययायगो भृगुः, दक्षिणे शनिभौमौ दशमे, नैर्ऋत्यां लग्नादष्टमनवमगो राहुः, पश्चिमे शनिः सप्तमगः, वायव्यां पञ्चमषष्ठश्चन्द्रः, उत्तरे शुक्रचन्द्रबुधाश्चतुर्थाः, ईशान्यां द्वित्रिगो गुरुर्नेष्ट इति ।

तथा,

इति कालाशुद्धिस्तु शुक्रा .... ... .... ....

गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे।
याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत्॥

तथा,

रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ।
वर्जयेत्सर्वकर्माणि व्रतस्वस्त्ययनानि च॥

उपप्लवे शीतलभानुभान्वोरर्द्धोदये वा कपिलाख्यषष्ठ्याम्।
सुरासुरेज्यास्तमयेऽपि तीर्थे यात्राविधिः सङ्क्रमणेऽपि शस्तः॥

इति पठन्ति।

तथा,

सिंहस्थिते मघासंस्थं गुरुं यत्नेन वर्जयेत्।
अन्यत्र सिंहभागेषु विवाहादि विधीयते॥

तथा,

वापीकूपतडागयागगमनं क्षौरं प्रतिष्ठा व्रतं
विद्यां मन्दिरकर्णवेधनमहादानं वनं सेवनम्।
तीर्थस्नानविवाहदेवभवनं मन्त्रादि देवेक्षणं
दूरेणैव जिजीविषुः परिहरेदस्तङ्गते भार्गवे॥

तथा,

बाले वा यदि वा वृद्धे शुक्रे वास्तङ्गते गुरौ।
मलमास इवैतानि वर्ज्जयेद्देवदर्शनम्॥

अत्र देवदर्शनपदमपूर्वदेवदर्शनपरम्।

अनादिदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे।
मलमासेऽप्यनावृत्तं तीर्थस्नानं विवर्जयेत्॥

मलमासेऽप्यनावृत्तमित्यपिः समुच्चये। तेन नष्टभार्गवेऽनावृत्तं दर्शनं न कार्य्यमिति गम्यते।

काशीखण्डे,

न ग्रहास्तोदयकृतो दोषो विश्वेश्वरालये । इति ।
एवं लुप्तसम्वत्सरेऽपि तीर्थयात्रा न कार्य्या ।
पूर्वराशिं यदा त्यक्त्वा अपूर्णे वत्सरे गुरुः ।
अपरं राशिमायाति लुप्तकालः स उच्यते ॥
अतिचारगतो जीवः पूर्वभं नैव गच्छति ।
नाचरेत्तत्र कर्माणि तदा तत्रैव संस्थिते ॥
लुप्तकालः, सम्वत्सरो लुप्तः कर्मानर्हं इत्यर्थः ।
तथा,
अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः ।
लुप्तसम्वत्सरो ज्ञेयः सर्वकर्मसु गर्हितः ॥
अस्यापवादस्तु—
अतिचारगते जीवे वृषवृश्चिककुम्भयोः ।
यज्ञोद्वाहादिकं कुर्यात् तत्र कालो न लुप्यते ॥
तथा,
मेषे वृषे झषे कुम्भे यद्यतीचारगो गुरुः ।
न तत्र काललोपः स्यादित्याह भगवान् यमः ॥
तथा, मेषे वृषे........इत्याह भाल्लवो मुनिः ।
तीर्थविशेषे गुरुमौढ्यादिदोषो नास्ति ।
गोदावर्य्यां गयायां च श्रीशैले ग्रहणद्वये ।
सुरासुरगुरूणां च मौढ्यदोषो न विद्यते ॥
वायुपुराणे,
गयायां सर्वकालेषु पिण्डं दद्याद्विधानतः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥

आधिमासादौ गयायात्रा निषिद्धैव । एतद्बलात् सापि न निषिद्धेत्यन्ये । अन्ये तु—

गर्गात्रिमाण्डव्यपराशराद्याः भृग्वङ्गिरःकश्यपशौनकाद्याः ।
लुप्ताब्ददोषं प्रवदन्ति मध्ये सोमोद्भवायाः सुरनिम्नगायाः ॥
लुप्तवत्सरदोषस्तु पयोष्णीनिम्नगातटात् ।
नान्यदेशेष्विति प्राहुर्वसिष्ठात्रिपराशराः ॥

इति पठन्ति । एवं महागुरुनिपाते तीर्थयात्रादिकं न कार्य्यम् । यथा रत्नाकरे—

देवलः,

अन्यश्राद्धं परान्नं च गन्धमाल्यादि मैथुनम् ।
वर्जयेद्गुरुपाते तु यावत्पूर्णो न वत्सरः ॥

तथा,

महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत् ।
आर्त्विज्यं ब्रह्मचर्य्यं च श्राद्धं देवक्रियां तथा ॥

'श्राद्धं देवयुतं च यत्' इति कालिकापुराणे पाठः ।

देवीपुराणे,

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
नापि दैवं न वा पित्र्यं यावत् पूर्णो न वत्सरः ॥ इति ।

दाक्षिणात्यास्तु—

तीर्थस्नानं महादानं परान्नं तिलतर्पणम् ।
अब्दमेकं न कुर्वीत महागुरुनिपातने ॥
वपनं मैथुनं तीर्थं वर्ज्जयेद्गुर्विणीपतिः ।
श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यत्र वेदवित् ॥

श्राद्धं श्राद्धभोजनमिति व्याचक्षते । अस्थिक्षेपार्थतीर्थयात्रायामाद्यवर्षेऽपि न दोष इत्याहुः । यात्रातिथिनक्षत्रादिविचारो ज्यौतिषप्रकाशे समयप्रकाशे च ज्ञातव्यः ।

अथेदानीं दूरागतानां गङ्गादिस्नानादौ विशेषः स्मृत्यर्थ-

सारोक्तो लिख्यते। तत्र प्रायश्चित्तविधिना सङ्कल्पपूर्वकं पद्भ्यां षष्टियोजनागतस्य गङ्गास्नाने षडब्दकृच्छ्रसमं फलम्। एवं च दशयोजनागतस्याब्दतुल्यम्। एवमीषदधिकतृतीयांशाधिकक्रोशागतस्य गङ्गायां स्नाने कृच्छ्रतुल्यं फलम्। षष्टियोजनापेक्षया योजनवृद्धौ अर्द्धकृच्छ्रवृद्धिर्बोध्या। पूर्वं सप्तमातृका रक्षोभयान्नद्यो जाता भये गते पुनर्देवता अभूवन् ततो नद्यः शुष्काः तेषु स्थलेषु भागीरथी समभूत्। तासु विष्णुगङ्गादिसप्तमातृका नाम सप्त गङ्गाः।तासु षष्टियोजनागतस्य स्नानं षडब्दकृच्छ्रसमम्। प्रयागे वाराणस्यां गङ्गाद्वारे गङ्गासागरसङ्गमे च द्विगुणं, यमुनायां विंशतियोजनागतस्य स्नानं त्र्यब्दसमं, मथुरायां द्विगुणं, सरस्वत्यां चत्वारिंशद्योजनागतस्य चतुरब्दसमं, प्रभासे द्वारवत्यां च द्विगुणं, यमुनासरस्वत्योर्यात्रायोजनवृद्धौ पादकृच्छ्रवृद्धिः परिकल्प्या इत्यादिकम्।

## अथ तीर्थप्राप्तिदिनकृत्यम्।

तत्र यानादिना गतोऽपि तीर्थसमीपे यथाशक्ति कियद्दूरं केवलपद्भ्यामेव गत्वा तीर्थे दृष्टिपथं गते साष्टाङ्गं प्रणमेत्। तीर्थाय नम इति पुष्पाञ्जलिं दद्यात्। यथाशक्त्युपकटौ कर्पटं स्थापयेत्। तथैव शिष्टाचारात्। पठन्ति च—

यानानि च परित्यज्य भाव्यं पादचरैर्नरैः।
लुठित्वा लोठिनीं तत्र कृत्वा कार्पटिकाकृतिम्॥

लोठिनीं लुठित्वा, साष्टाङ्गं नत्वा। यदि यात्रासमये कार्पटिकाकृतिर्न कृता तदेदानीमपि कार्येत्यर्थः। ततः प्रथमं प्रणवेन तीर्थं स्पृष्ट्वा ततः सचैलमवगाहेत आचारात्। पठन्ति च—

प्रथमं चालभेत्तीर्थं प्रणवेन जलं शुचि।
अवगाह्य ततः स्नायाद्यथावन्मन्त्रयोगतः॥ इति।

अवगाह्य, सचैलं स्नात्वा । मन्त्रश्च—

**प्रभासखण्डे,**

ओंनमो देवदेवाय शितिकण्ठाय दण्डिने ।
रुद्राय चापहस्ताय चक्रिणे वेधसे नमः ॥
सरस्वती च सावित्री वेदमाता गरीयसी ।
सन्निधानीभवत्वत्र तीर्थे पापप्रणाशिनि ॥
सर्वेषामेव तीर्थानां मन्त्र एष उदाहृतः ।
इत्युच्चार्य नमस्कृत्वा स्नानं कुर्याद्यथाविधि ॥

अयं च प्रार्थनायां मन्त्रः । न तु स्नाने करणं मानाभावात्, मन्त्रलिङ्गविरोधाददिति वदन्ति । "विष्णोः पादप्रसूतासि" इत्याद्यावाहनमन्त्रवदस्य स्नानकरणेऽपि न क्षतिरित्यपरे । अन्ये तु—

सागरस्वननिर्घोष दण्डहस्तासुरान्तक ।
जगत्स्रष्टर्जगन्मर्दिन्नमामि त्वां सुरेश्वर ॥
तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥
इमं मन्त्रं समुच्चार्य तीर्थस्नानं समाचरेत् ।
अन्यथा तत्फलस्यार्द्धं तीर्थेऽसौ हरति ध्रुवम् ॥

इति प्रार्थनामन्त्रस्य पूर्वोक्तमन्त्रेण विकल्पं मन्यन्ते ।

## अथ तीर्थोपवासः ।

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।
वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥

इति स्कन्दपुराणवचनान्मुण्डनवत् तीर्थोपवास आवश्यकः ।

**काशीखण्डे,**

तीर्थोपवासः कर्तव्यः शिरसो मुण्डनं तथा ।

**नारदीये,**

तीर्थमासाद्य कुर्वीत नरः शुचिरुपोषणम् ।
उपवासविशुद्धात्मा कर्त्तव्यं कर्तुमर्हति ॥

कल्पतरुकृतस्तु तीर्थोपवासः काम्यः "तीर्थमभिगम्य व्रतोपवासनियमयुक्तः त्र्यहमवगाहमानस्त्रिरात्रमुषित्वा सर्वपापैः प्रमुच्यते स्वस्तिमांश्च भवति" इतिदेवलवचनात् त्रिरात्रोपवास-त्र्यहस्नानयोः सर्वपापविमुक्तिस्वस्तिमत्त्वे फलमित्याहुः । तन्न । तीर्थे त्रिरात्रोपवासस्य सर्वतीर्थविहितैकाहोपवासातिरिक्तस्यैव देवलवचनेन तादृशफलवत्त्वावगमात् । "सर्वतीर्थेष्वयं विधिः" इत्यनेन तीर्थप्राप्तिनिमित्तकोपवासस्य नैमित्तिकान्तरवदावश्यकत्वाक्षतेः ।

तीर्थमासाद्य कुर्वीत नरः शुचिरुपोषणम् ।
उपवासविशुद्धात्मा कर्त्तव्यं कर्तुमर्हति ॥

इतिनारदीयवचनेन तीर्थोपवासस्यावश्यकत्वावगतेः । वस्तुतः "त्रिरात्रमुषित्वा" इत्यनेन त्रिरात्रावस्थितेः फलमुक्तम् । "उपवासनियमयुक्त" इत्यनेन नैमित्तिक उपवासः कार्य्य इत्युक्तम् । "सर्वतीर्थेष्वयं विधिः"इति च तत्प्रापकम् । अत एव—

ब्रह्मपुराणे बहूनि तीर्थान्युक्त्वा—
तीर्थेष्वेतेषु विधिवत् सम्यक्श्रद्धासमन्वितः ।
स्नानं करोति यो मर्त्यः सोपवासो जितेन्द्रियः ॥
देवानृषीन् मनुष्यांश्च पितॄंश्चान्यांश्च तर्पयेत् ।
अभ्यर्च्य देवतास्तत्र स्थित्वा च रजनीत्रयम् ॥
पृथक् पृथक् फलं तेषु प्रतितिष्ठंश्च भो द्विजाः ।
प्राप्नोति हयमेधस्य नरो नास्त्यत्र संशयः ॥ इत्युक्तम् ।

काशीखण्डे,
यदह्नि तीर्थप्राप्तिः स्यात्तदह्नः पूर्ववासरे ।

उपवासस्तु कर्त्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत्॥

इति वचनं पक्षान्तरबोधकम्। एवं च प्राप्तिदिनतत्पूर्वदिनयोरुपवासे विकल्पः। न च काशीविषयं काशीखण्डवचनमिति वाच्यम्। सामान्यतीर्थोपक्रमात्। एवं च—

काशीखण्डे,

ततो मायापुरीं प्राप्येत्युपक्रम्य—

तीर्थोपवासं कृत्वा च निशि जागरणं तथा।
प्रातः स्नात्वा च गङ्गायां तर्प्यान् सन्तर्प्य यत्नतः॥
यावत् स पारणं कर्तुमियेष द्विजसत्तमः।
तावच्छीतज्वराक्रान्तश्चकम्पेऽत्यर्थमातुरः॥

इति वचनं तीर्थप्राप्तिदिनेऽप्युपवासं दर्शयदुपवासस्य वैकल्पिकत्वं स्पष्टमाह। उक्तवचनात् समर्थस्य दिनद्वयेऽसमर्थस्याप्तिदिने उपवास इति कश्चित्। तन्न। सकलशिष्टाचारविरोधात्। प्राप्तोपवासे वैकल्पिकपूर्वदिनतद्दिनरूपकालविधायकत्वेनोपपत्तौ फलविशेषप्रयोजककल्पनान्तरानवकाशात्। यत्तु पूर्वदिने उपवासपक्षे तद्दिन एव मुण्डनस्यापकर्षः त्रिपक्षादौ सपिण्डनापकर्षे तत्पूर्ववर्त्तिश्राद्धानामिवेति, तन्न।

व्युत्क्रमात् प्रेतश्राद्धानि यो नरो धर्ममोहितः।
ददाति नरकं याति पितृभिः सह शाश्वतम्॥

इति देवलवचनात् सपिण्डीकरणोत्तरं प्रेतश्राद्धकरणायोगादस्तु तेषां तथात्वम्। प्रकृते तु "मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः" इत्यनेन तीर्थप्राप्तिदिने विहितमुण्डनस्य वचनान्तरबलादुपवासस्य पूर्वदिने प्राप्तावपि नापकर्षो प्रमाणाभावात्। इति।

अथ तीर्थे मुण्डनम् ।

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।
वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥

इति देवलवचनात् ।स्कन्दपुराणेऽप्येवम् । क्वचित्तु 'नैमिषं पुष्करं गयाम्' इतिपाठः । विरजाक्षेत्रं उत्कलदेशे प्रसिद्धम् । यत्र गयासुरस्य नाभिः । तदुक्तम्–

वायुपुराणे,

आक्रान्तं दैत्यजठरं धर्मेण विरजाद्रिणा ।
नाभिकूपसमीपे तु देवी तु विरजा स्थिता ॥ इति ।

मुण्डनं च स्नातकस्य शिखावर्जं "तस्यैतदपिधानं यच्छिखेति" दर्शनात् । एवं यस्य ब्रह्मचार्य्यादेः शिखारक्षणं तस्यापि शिखायाः परिमाणविशेषानभिधानात् स्वेच्छया शिखा धार्या यावता लोकानां वपनबुद्धिर्भवति तावदपनीयम् । मुण्डनं त्यागार्हाणां केशश्मश्रुनखानां सर्वेषाम् । त्यागानर्हता च स्नातकस्य शिखादिमात्रस्य शास्त्रप्रामाण्यात् । न तु स्वेच्छाधृतकेशश्मश्रुनखविशेषादेः ।

वपेत् केशांश्च श्मश्रूणि नखानि च निकृन्तयेत् ।

इति ब्रह्मपुराणोक्तेरिति । यद्यपि कल्पतरुकारेण तीर्थे मुण्डनं नोक्तं न वा तत्र प्रमाणमादर्शितं, तथापि "मुण्डनं चोपवासश्च" इत्यादिवाक्यस्य सकलशिष्टपरिगृहीतत्वात्तत्कर्त्तव्यमेव । उक्तवचनबलात् स्त्रीणां विधवानां सधवानामपि मुण्डनमविशेषादित्येके । सधवानां मुण्डनं नास्तीत्यन्ये ।

सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् ।
एवमेव तु नारीणां शिरसो मुण्डनं भवेत् ॥

इत्यस्य प्रायश्चित्तप्रकरणे श्रुतस्याकाङ्क्षातौल्येनात्राप्यन्व-

यात् । प्रयागादावपि तासां त्र्यङ्गुलकेशाग्रकर्त्तनमात्रं वपनम् । न च

केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम् ।
तिष्ठन्ति तीर्थस्नाने तु तस्मात्तान्यत्र वापयेत् ॥

इति वचनविरोधः । तस्य सधवातिरिक्तवपनपरत्वादित्यपरे । बहुतरशिष्टाचारोपष्टब्धोऽयं पक्षः ।

यतिः शूद्रश्च विधवा सशिखं वपनं चरेत् ।

इति दाक्षिणात्याः । वाचस्पतिमिश्रास्तु—

वर्जयित्वा गयां गङ्गां विशालां विरजां तथा ।

इति पठित्वा गङ्गायां न मुण्डनमिति प्रलपन्ति । तन्न साधीयः । अस्य पाठस्य शिष्यैरपरिग्रहात् । 'वर्जयित्वा कुरुक्षेत्रम्' इतिपाठस्यैव तैः सङ्ग्रहात् ।

गरुडपुराणे,

गङ्गां प्राप्य सरिच्छ्रेष्ठां वपनं यो न कारयेत् ।
क्रिया तस्याऽक्रिया सर्वा तीर्थद्रोही भवेन्नरः ॥

तथा,

गङ्गां प्राप्य सरिच्छ्रेष्ठां कम्पन्ते पापसञ्चयाः ।
केशानाश्रित्य तिष्ठन्ति तस्मात्तान् परिवापयेत् ॥
यावन्ति नखलोमानि गङ्गातोये पतन्ति वै ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

इत्यादिगङ्गामुण्डनविधायकबहुतरवचनविरोधात् । यत्तु गङ्गामुण्डनविधायकानाममीषां कल्पतरुकृताऽलिखितत्वान्निर्मूलतेत्युक्तम् । तदयुक्तम् । कल्पतरुकाराऽलिखितान्यपि प्रयागवपनविधायकानि वचनानि शिष्टपरिग्रहेण प्रमाणानि इति स्ववचनविरोधात् । अथ प्रयागवपनविधायकान्येव शिष्टपरिग्रहात् प्रमाणानि न त्वेतानि तादृशान्यपि तथेति ब्रूषे,

एतत् नूत्नं रुचिरेव ते लोचनमिति । अत एव केषां-चित् कामधेनुलिखितवाक्यानां कल्पतरुकारालिखितानामपि शिष्टपरिग्रहादेव प्रामाण्यमिति श्रीदत्तोपाध्याया अप्यवोचन् । "वर्जयित्वा गयां गङ्गाम्" इतिपाठप्रामाण्ये तु प्रयागानवच्छिन्न-गङ्गायां मुण्डनवर्जनं प्रयागावच्छिन्नगङ्गायां विधिरिति विवेकः। परे तु तत्पाठप्रामाण्ये गङ्गामुण्डने विकल्प इत्याहुः । तन्न । उक्तरीत्योपपत्तौ विकल्पकल्पनायां मानाभावादिच्छाविकल्प-स्याष्टदोषदुष्टत्वाच्च । निगूढवर्तितीर्थादौ तु अश्रद्धादिवशादेव श्राद्धानाचरणवत् मुण्डनाद्यनाचरणं न तु तदनुरोधात् सर्व-पदसङ्कोचः श्राद्धानाचरणवदुपपत्तेः । मिश्रास्तु—

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।

इत्यत्र सर्वतीर्थपदं प्रयागपरं सर्वाणि तीर्थानि वसन्त्यत्रेति बहुव्रीहिणा तदुपपत्तेः । न च कथं तर्हि सर्वतीर्थेष्विति बहुवच-नमिति वाच्यम् । सर्वतीर्थपदस्य बहुव्रीहिणा प्रयागवचनत्वे सिद्धे तस्याविवक्षितत्वात् "ग्रहं सम्मार्ष्टि" इतिवत् । कथं तर्हि गयादिविशेषनिषेधः । द्रव्ये यथा मौद्गश्चरुर्भवतीतिविशेषविधिनैव माषादिनिषेधे सिद्धे पुनरयज्ञिया वै माषा इति माषनिषेधवचनं नेहिनिन्दान्यायेन मुद्गस्तुत्यर्थम्, एवं गयादिवर्जनमपि प्रयाग-स्तुत्यर्थमिति । सर्वतीर्थपदस्य प्रयागबोधकत्वे किं मानमिति चेत्,

एवं कुरुष्व राजेन्द्र सर्वतीर्थाभिषेचनम् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

इति प्रयागवर्णनाभ्यन्तरस्थमत्स्यपुराणवचनमित्यवेहि इत्याहुः । तच्चिन्त्यम् । कर्मधारयसम्भवे बहुव्रीहेरन्याय्यत्वात् ।

---

१. न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते किन्तु विधेयं स्तो-तुमिति न्यायः ।

सर्वतीर्थपदे प्रयागपरत्वे बहुवचनानुपपत्तेश्च । न चैकपाशकेऽपि "अदितिः पाशान्" इति यथा बहुवचनं लक्षणादिनोपपाद्यते तथात्राप्यस्त्विति वाच्यम् । उक्तरीत्या सर्वतीर्थगतबहुत्ववाचकत्वेन बहुवचनत्वोपपत्तौ लक्षणादेरन्याय्यत्वात् । न च देवप्रयागादीनामपि प्रयागशब्दवाच्यानां सत्त्वाद्बहुवचनोपपत्तिरिति वाच्यम् । देवप्रयागादौ सर्वेषां तीर्थानां सद्भावे प्रमाणाभावेन तत्र सर्वतीर्थव्युत्पत्त्यसम्भवात् । यदपि "ग्रहं सम्मार्ष्टि" इतिवत्तदविवक्षेत्युक्तं, तदपि न । तत्र हि ग्रहाणां प्रत्येकमेकत्वसत्त्वादेकवचनं सम्भवत्येव परन्तु सर्वग्रहसङ्ग्रहायैकत्वाविवक्षणं युज्यते । अत्र तु सर्वतीर्थपदस्य प्रयागपरत्वेन वृत्त्यर्थे बहुत्वाभावाद्बहुवचनस्यैवासाधुतयाऽनिष्पत्तौ तद्विवक्षाऽविवक्षादिविचाराप्रसङ्गात् । न चैवं "सप्तदश प्राजापत्यान् पशूनालभेत" इत्यत्रापि न सङ्ख्याविवक्षा स्यात् द्वितीयायाः प्रधानत्वबोधकत्वेन युक्तिसाम्यादिति वाच्यम् । तत्र द्वितीयायास्तृतीयासमानार्थकत्वात् सप्तदशभिः पशुभिरालभनं कार्यमित्यर्थात् । एवम् "अग्नीषोमीयं पशुमालभेत" इत्यादावपि । किञ्च यदि सर्वाणि तीर्थानि वसन्त्यत्रेतिव्युत्पत्त्या सर्वतीर्थपदं प्रयागबोधकं तदा "सर्वतीर्थानि देवाश्च वसन्त्यत्राविमुक्तके । सर्वतीर्थमयी गङ्गा" इत्यादिदर्शनात् काशीगङ्गाबोधकत्वमपि न तस्य कुतः । ननु प्रयागे वपनं कुर्य्यात् इतिविशेषविधिविषय एव सर्वतीर्थेष्वित्यादिसामान्यविधेस्तात्पर्यं यथा "पुरोडाशं चतुर्द्धा करोति" इतिसामान्यविधेः "आग्नेयं चतुर्द्धा करोति" इतिविशेषविधिविषयविषयत्वम् । तदुक्तम्—

सामान्यविधिरस्पष्टः संस्क्रियेत विशेषतः । इति ।

नैवम् । तत्र हि "पुरोडाशं चतुर्द्धा करोति" इतिसामान्य-

विधेरस्पष्टविषयत्वात् "आग्नेयं चतुर्द्धा करोति" इत्यनेन विशेषविषयत्वेनोपसंहारो युज्यते । प्रकृते तु कर्मधारयबहुवचनाभ्यामशेषतीर्थविषयतायाः स्पष्टत्वात्तदुपसंहारासम्भवात् । तदुक्तम्—

सामान्यविधिरस्पष्टः संस्क्रियेत् विशेषतः ।
स्पष्टस्य तु विधेर्नान्यैरुपसंहार इष्यते ॥ इति ।

अन्यथा यत्र गयादितीर्थे विशिष्य श्राद्धं श्रुतमस्ति तत्परत्वं स्यात् सामान्यतस्तीर्थश्राद्धविधायकविधेः । अथ गयादितीर्थविशेषे श्राद्धविधेः सामान्यतः प्राप्ततीर्थश्राद्धे फलविशेषाभिधायकत्वं न तु श्राद्धविधेयकत्वमिति चेत्, तर्हि "सर्वतीर्थेषु" इत्यादिना सामान्यतः प्राप्तवपनस्यैव फलविशेषाभिधायकत्वं "प्रयागे वपनं कुर्यात्" इतिविधेरस्तु युक्तितौल्यात् । ननु "सर्वतीर्थेष्वयं विधिः" इत्यस्यासङ्कोचे—

यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः ।

इत्यादिनाऽतिशयफलकस्थलजलयोस्तीर्थत्वाभिधानेन प्रस्रवणादीनामपि तीर्थत्वावगमात् स्वदेशातिसमीपवर्त्तिप्रस्रवणादावुपवासवपनयोः प्राप्तिः स्यादिति । मैवम् । तत्रोपवासवपनयोरिष्टापत्तेः तत्र तीर्थप्राप्तिनिमित्तकश्राद्धवत् । न हि सर्वतीर्थपदस्य प्रयागपरत्ववत् तीर्थश्राद्धविधायकवाक्येऽपि प्रस्रवणादिभिन्नतीर्थपरत्वमिति सम्भवति । अथ तीर्थश्राद्धविधायकवाक्ये तीर्थपदं गयाप्रयागादिमहातीर्थपरं शिष्टाचारोपष्टम्भात्, तर्हि "सर्वतीर्थेषु" इत्यत्र तीर्थपदमपि तादृशसर्वतीर्थपरमस्तु । वस्तुतस्तु उभयत्रापि सङ्कोचे प्रमाणाभावान्न महातीर्थपरत्वमिति प्रस्रवणादावपि मुण्डनादि भवत्येवेति सिद्धम् । यच्चोक्तम्—"वर्जयित्वा गयां गङ्गाम्"

इत्यत्र "अयज्ञिया माषा" इति वद्गयादेर्वर्जनकथनं प्रयागस्तुत्यर्थमिति। तदप्यश्रद्धेयम्। तत्र हि "अयज्ञिया वै माषा" इति न माषनिन्दार्थं किन्तु मुद्गस्तुत्यर्थमिति 'न हि निन्दा निन्दितुं प्रवर्त्तते किन्तु विधेयं स्तोतुम्' इति न्यायेन युज्यते। वैशब्दोपनिबन्धनार्थवादत्वप्रतीतेः। प्रकृते तु तदभावान्नार्थवादत्वप्रतीतिः। वस्तुतस्तु रसादिसादृश्येन माषाणां तत्र प्राप्तिः प्रतिनिधितयाऽपि सम्भवति "काण्डमूलपर्णपुष्पफलप्ररोहरसगन्धादिना सादृश्येन प्रतिनिधिं कुर्य्यात्" इति पैठीनसिवचनात्।

यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्।
यवानामिव गोधूमा व्रीहीणामिव शालयः॥

इति कात्यायनवचनाच्च। अतो माषाः प्रतिनिधितयाऽपि न ग्राह्या एतदर्थम् "अयज्ञिया वै माषा" इति। न ह्येवं गयादीनां प्रति निश्चिततया प्राप्तिरस्ति येन गयावपननिषेधः सार्थको भवेत्। यच्चोक्तम्—

एवं कुरुष्व राजेन्द्र सर्वतीर्थाभिषेचनम्।

इति वचनं सर्वतीर्थपदस्य प्रयागवाचकत्वे मानम्। तदप्युपेक्षणीयम्। मत्स्यपुराणे बहूनि तीर्थान्युक्त्वा—

अन्ये च बहवस्तीर्थाः सर्वपापहराः शुभाः।
तेषु स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः॥
एवं कुरुष्व राजेन्द्र सर्वतीर्थाभिषेचनम्।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति॥

इत्यभिधानेन सर्वतीर्थपदस्य सकलतीर्थपरतायाः स्पष्टमेवावगमात्। कृत्वाचिन्तया तूच्यते भवतु, तत्र प्रकरणानुरोधेन बहुव्रीहिणा लक्षणया प्रयागपरत्वम्। तथापि प्रकृते किमायातम्। न ह्येकत्र लाक्षणिकः शब्दः प्रयुक्त इत्यन्य-

त्रापि तथा युक्तम् । तदुक्तम्—

भट्टपादैः,

सिंहशब्दः क्वचिद्गौणो माणवादौ निरूपितः ।
न सिंहे श्रूयमाणेऽपि तदर्थः परिगृह्यते ॥ इति ।

किञ्च अग्निपुराणे,

काशीप्रभृतीनि बहूनि तीर्थान्युक्त्वा सर्वान्ते—

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।

इत्यभिधानेन काश्यादौ मुण्डनावगमात् ।

प्रभासखण्डे,

तत्र स्नानं प्रकुर्वीत विगाह्य निधिमम्भसाम् ।
आदौ कृत्वा तु वपनं सोमेश्वरसमीपतः ॥
शङ्करं मनसा ध्यायन् केशांस्तत्र परित्यजेत् ।
तत्र त्यक्त्वाऽखिलान् केशान् भूयः स्नानं समाचरेत् ॥
यत्किञ्चित् कुरुते पापं पुरुषो वृत्तिकर्षितः ।
तद्यतः पर्वतसुते सर्वं केशेषु तिष्ठति ॥
तस्मात्सर्वप्रयत्नेन केशांस्तत्र परित्यजेत् ।
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ॥
नासौ तत्फलमाप्नोति वपनाद्यच्च लभ्यते ।
क्षुरकर्म न शस्तं स्याद्योषितां तु वरानने ॥
सभर्तृकाणां तत्रैव विधिं तासां शृणुष्व मे ।
सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् ॥

इत्यन्तेन प्रभासे मुण्डनं विधाय ।

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।

इत्यभिधानाच्च ।

ब्रह्मवैवर्त्तेऽपि,

आयत्य मणिकर्ण्यां तु स्नात्वा दत्त्वा धनं बहु ।
वपनं कारयित्वा तु स्थिता शुद्धा पयोव्रता ॥

इत्यभिधानात् । पयोव्रता, जलमात्राहारा ।

केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम् ।
तिष्ठन्ति तीर्थस्नाने तु तस्मात्तान्यत्र वापयेत् ॥

इति वचनाच्च । कल्पतरुकारापरिग्रहात् नैतानि प्रमाणानीति चेत्, न । दत्तोत्तरत्वात् । यच्चोक्तं मिश्रैः—

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ ।
आधाने सोमपाने च वपनं सप्तसु स्मृतम् ॥

इति वचनात्प्रयागावच्छिन्नगङ्गायां मुण्डनं सिद्ध्यति प्रयागस्य भास्करक्षेत्रत्वादिति । तदपि न श्रव्यम् । "गङ्गायां भास्करक्षेत्रे" इत्यस्य भास्करक्षेत्रावच्छिन्नगङ्गायामित्यर्थे "वपनं सप्तसु स्मृतम्" इत्यत्र सप्तत्वासङ्गतेः । यदप्युक्तं भास्करक्षेत्रपदं प्रयागपरमिति, तदपि वार्त्तम् । तस्य तत्परत्वे मानाभावात् । उत्कलदेशप्रसिद्धस्य कोणार्कस्यैव भास्करक्षेत्रपदेनाभिधानात् । प्रयागस्य प्रजापतिक्षेत्रत्वात् ।

एतत् प्रजापतिक्षेत्रं त्रिषु लोकेषु विश्रुतम् ।

इति मत्स्यपुराणात् । न चैतद्वचनबलात्तीर्थान्तरवपननिषेधः शङ्क्यः । सप्तपदस्य प्रचयशिष्टसङ्ख्यानुवादकत्वेनाप्युपपत्तौ निषेधकत्वकल्पनायोगात् । अन्यथा वाक्यभेदापत्तेः । सप्तत्वस्य हविरुभयत्ववदविवक्षितत्वाच्चेति सिद्धं सर्वतीर्थेषु मुण्डनम् । तच्च यदा दशमासोत्तरं पुनस्तीर्थप्राप्तिस्तदापि कार्यम् ।

संवत्सरे द्विमासोने पुनस्तीर्थं व्रजेद्यदि ।
मुण्डनं चोपवासश्च ततो यत्नेन कारयेत् ॥

इति शिष्टाचारोपष्टब्धवचनात्। न तु दशमासमध्येऽपि। अत्र च तीर्थस्याप्राप्तस्य प्राप्तिर्निमित्तं तेन प्रथमदिने मुण्डनादौ कृते दशमासपर्य्यन्तं तत्रैव स्थितस्य न मुण्डनादिप्रसक्तिः। मुण्डनं च तीर्थस्नानाद्युत्तरं कार्य्यम्।

गत्वा स्नानं प्रकुर्वीत वपनं तदनन्तरम्।
वपेत्केशांश्च श्मश्रूणि नखानि च निकृन्तयेत्॥

इति ब्रह्मपुराणात्। अनन्तरमित्यत्राव्यवहितानन्तर्य्यं न विवक्षितम्। तेन श्राद्धानन्तरं वपनम्।

विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत्।

इत्यनेन श्राद्धे विलम्बाभावप्रतिपादनात्। सर्वप्रथममेव वपनं कार्य्यम्।

केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम्।
तिष्ठन्ति तीर्थस्नाने तु तस्मात्तान्यत्र वापयेत्॥

इति वचनादिति केचित्। अत्र च यतीनां

कक्षोपस्थशिखावर्जमृतुसन्धिषु वापयेत्।

इति वचनेन ऋतुसन्धिष्वेवेति ऋतुसन्धिरूपकालनियमविधानेन तदितरकालस्यार्थात् परिसङ्ख्यावगमात् ऋतुसन्धिव्यतिरिक्तदिने तीर्थप्राप्तावपि न वपनमित्येके। "ऋतुसन्धिषु वापयेत्" इत्यस्य वपननियमविधित्वात् प्रायश्चित्त इव तीर्थेऽपि यतीनां वपनमित्यन्ये। इदं तु बोध्यम्। "वापयेत्" इत्यत्र न परिसङ्ख्या नियमापेक्षया गुरुत्वात् धातुपारार्थ्यप्रसङ्गाच्च। ऋतुसन्धिषु वपनाभावेऽप्यक्षतिप्रसङ्गाच्च। तथा च शिष्टाचारविरोधः। तेन वपननियम एवायम्। न चैवं तीर्थवपनप्रसक्तिः। सन्न्यासिनां हि सर्वकर्मणां त्यागस्य विहितत्वात्साक्षात्य प्रतिप्रसवविधिमन्तरेण वपन-

प्रसक्तिः । न चैवं तीर्थस्नानमपि न प्रसज्येत, इष्टापत्तेः । आचारकल्पितस्मृत्यैव वा प्रतिप्रसवविधिः । आहिताग्नीनां तु पर्वव्यतिरिक्तकालेऽपि तीर्थप्राप्तौ वपनं भवत्येव नैमित्तकत्वात् पितृमरणवत् । जीवत्पितृकस्यापि च तीर्थे वपनं "सर्वतीर्थेषु" इतिविधेस्तत्रापि गतत्वात् । पठन्ति च—

विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना ।
यो वापयति लोमानि स पुत्रः पितृघातकः ॥ इति ।

निषिद्धकालेऽपि च तीर्थे मुण्डनं कार्यम् ।

नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ।
तथा तथैव कार्य्याणि न कालस्तु विधीयते ॥

इति दक्षवचनात् । यदापि अत्र नैमित्तिकानि काम्यानि प्रायश्चित्तादीनि इति तु शूलपाणिव्याख्यानमङ्गीक्रियते तदापि अस्य प्रायश्चित्ततुल्यत्वं पापक्षयसाधनत्वात्तीर्थमुण्डनस्य । वस्तुतो नैमित्तिकानि काम्यानि इति न सामानाधिकरण्येनान्वयः किन्तु पृथगेव । तर्हि कः काम्यानीत्यादेर्विषयः । रोगादिनिवृत्यर्थे शान्तिकादौ मलमासादिनिवृत्त्यनादर इत्यवेहि ।

क्षौरं नैमित्तिकं कार्य्यं निषेधे सत्यपि ध्रुवम् ।
पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके ॥

इतिदाक्षिणात्यधृतस्मृतेश्च मुण्डननिषेधेऽपि काले कार्य्यम् । वपने च प्रथमं श्मश्रु वपनीयम् ।

श्मश्रुकर्म कारयित्वा नखच्छेदमनन्तरम् ।

इति वाराहपुराणात् । आपस्तम्बशाखायां तथैव दर्शनाच्च । तथा हि—

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत तेऽसुरा ऊर्ध्वं पृष्ठेभ्यो नापश्यन् ते केशानग्रेऽवपन्त अथ श्मश्रूणि अथोपपक्षौ ततस्ते-

ऽवाश्च आयन् पराभवन् यस्यैवं वपति भ्रातृव्येति अथोपरैव भव-
ति अथ देवा ऊर्द्धं पृष्ठेभ्योऽपश्यन् त उपपक्षावग्रेऽवपन्त अथ
श्मश्रूणि अथ केशान् ततस्तेऽभवन् सुवर्गं लोकमायन् यस्यैवं
वपति भवत्यात्मना अथो सुवर्गं लोकमेति अथैतन्मनुर्वप्त्रे मि-
थुनमपश्यत् स श्मश्रूण्यग्रेऽवपत् अथोपपक्षौ अथ केशान् ततो
वै स प्राजायत प्रजया पशुभिर्यस्यैवं वपति प्रप्रजया पशुभि-
र्मिथुनैर्जायते इति ।

प्रप्रजयेति शब्दो जायत इत्यनेन सम्बध्यते । उपपक्षौ क-
क्षौ इति भाष्यम् । इदं च प्रकरणात् कर्मविशेषपरम् । तेन—

मुण्डयेत्सर्वगात्राणि कक्षोपस्थशिखा न हि ।

इत्यनेनाविरोधः । नन्वेवं-

गत्वा स्नानं प्रकुर्वीत वपनं तदनन्तरम् ।
वपेत् केशांश्च श्मश्रूणि नखानि च निकृन्तयेत् ॥

इति ब्रह्मपुराणमसङ्गतं स्यात् इति चेत्, नूनं सामन्तादपि सार्वभौमो बिभेति येन स्मृतेरन्यथात्वभिया श्रुतिमन्यथयितुं प्रवृत्तोऽसि । वस्तुतो ब्रह्मपुराणस्योभयवपन एवैदम्पर्य्यं न तु पौर्वापर्य्ये इत्यविरोध इति ।

अत्रेदं विविच्यते । वपनं करिष्ये इत्युल्लेखो वपनं कारयिष्ये इति वा । अत्र मिश्राः । वपनं नाम केशविभागानुकूला क्षुरक्रिया तत्कर्तृत्वं नापितस्यैवातो वपनमहं कारयिष्य इत्येवोल्लेखः । "प्रयागे वपनं कुर्य्याद्" इतिविधेस्तथैवोल्लेख इति चेत्, न । विधेरपि वापनपरत्वात् । तेन कारयेदित्यर्थे कुर्य्यादिति णिचो लोपेन निर्देशः । ननु यथा ऋत्विग्द्वारा निर्वाह्यायामपीज्यायां यजेतेतिविध्यनुरोधात् यजमानो यक्ष्य इत्येवाभिलपति न याजयिष्य इति तथाऽत्रापि

वपनं करिष्ये इत्येवाभिलापः किं न स्यादिति चेत्, न । यक्ष्य इति प्रयोगस्य दृष्टान्तस्य वैषम्यात् । तथा हि तत्र देवतोद्देशेन हविस्त्यागो यागः स च यजमानकर्तृक इति यक्ष्य इत्यभिलापस्यौचित्यम् । प्रकृते तु वपनस्य स्वयंकर्तृत्वाभावान्न करिष्य इति प्रयोगसम्भवः । ननु, यथा होमस्याध्वर्युकर्तृकत्वेऽपि होमं करिष्य इति, यथा वा चयनस्याध्वर्युकर्तृकत्वेऽपि चयनं करिष्य इति यजमानस्याभिलापः । तथात्रापि करिष्य इत्यभिलापः सम्भवति इति चेत्, न । अग्निप्रक्षेपतत्त्यागयोरुभयोरपि सहितयोर्होमत्वेन एकांशेऽध्वर्युकर्तृकत्वेऽपि अन्यांशे यजमानकर्तृकत्वेन होमं करिष्य इत्यभिलापसम्भवात् । चयने साग्निचितिकेनाहं यक्ष्य इत्येव सङ्कल्पः प्रधानसङ्कल्पस्यैवौचित्यात् । चयनस्य पृथक्सङ्कल्पेऽपि वा चेष्य इति सङ्कल्पः शिष्टाचारात् "सर्वकामोऽग्निं चेष्य" इति बौधायनसूत्राद्वा द्रष्टव्यः । अत्र त्वस्मदायत्ते किमित्यवाचकं प्रयोक्ष्यामहे इतिन्यायेन वपनं कारयिष्ये इत्यस्यैवोचितत्वात् इत्याहुः । तन्न । वपेदितिविधिना प्रयोजकव्यापारकर्तृत्वरूपहेतुकर्तृत्वस्याविहितत्वेनानुल्लेख्यत्वात् । न चान्यथानुपपत्त्या तद्विधिरिति वाच्यम् । तथा सति णिजन्ततानियमेन वपेदितिप्रयोगस्यासाधुतापत्तेः । न च लुप्तणिजङ्गीकारेण तद्विधिर्युक्तः । लुप्तणिचो गमकत्वे णिचो लोपे च प्रमाणाभावात् । कथं तर्हि वपेदितिविधिना प्रयोजकव्यापारकर्तुः प्रयोज्यव्यापारकर्तृत्वविधिः । उच्यते । प्रयोजकव्यापारकर्त्तर्यपि स्वव्यापारप्रयोज्यव्यापारकर्तृत्वसत्त्वात् । एवं च णिजन्तप्रयोगस्य प्रयोजकव्यापारकर्तृत्वरूपहेतुकर्तृत्वविवक्षायां नियतत्वेन प्रयोजकव्यापारद्वारा प्रयोज्यव्यापारे परम्पराकर्तृत्वविवक्षायामणिजन्तताप्रयोगोऽपि नानु-

पपन्नः। न च साक्षात्कर्तृत्व एव तच्छक्तिः। लुङ्लृट्योरद्यतनानद्यतनसाधारण्येन भूतभविष्यन्मात्र इव कर्तृप्रत्ययानां साक्षात्परम्परासाधारण्येन कर्तृत्वमात्रे शक्त्युपगमात्। दृष्टश्च हेतुकर्त्तर्यपि अणिजन्तप्रयोगः यथा स्वामिनि सन्निधानमात्रकर्त्तरि साक्षाद्विलेखनमकुर्वत्यपि षड्भिर्हलैः कर्षतीति। तथा चोक्तमश्वप्रतिग्रहेष्ट्यधिकरणे (वार्तिक) कृता "हेतुकर्तर्यपि कर्तृत्वमस्ति तत्र यदा हेतुत्वं विवक्ष्यते तदा हेतुमद्व्यापारे ऽविवक्षितेऽपि णिजुत्पद्यते। कर्तृत्वमात्रविवक्षायां विनैव णिचाश्वप्रतिग्रहं यो यथाकथञ्चिन्निर्वर्तयति स प्रतिगृह्णातीति शक्यते वक्तुम्" इत्यादिना। अतश्च वपनेऽपि परम्परया वापयितुः कर्तृत्वसत्त्वात् सम्भवति तस्य वपनकर्तृत्वविधिः। ततश्च विधिविहितक्रियाया एवोल्लेख्यत्वाद्वपनं करिष्य इत्येवोल्लेखः। अत एव चयनस्याध्वर्युकर्तृकत्वेऽपि यजमानकर्तृकः चेष्य इत्येव सङ्कल्प उक्तो बौधायनादिभिः। अत एव च प्रयोज्यव्यापारकर्तृत्ववाच्येव शब्दो बहुषु वचनेषूपलभ्यते। तथा हि "समावृत्ता न वपेयुः" इत्यापस्तम्बः। "वपेत् केशांश्च श्मश्रूणि" इति ब्रह्मपुराणम्। श्रुतिः "ते केशानग्रेऽवपन्त" इत्यादि।

ननु "वपनं नैव कारयेत्" "तस्मान्नान्यत्र वापयेत्" इत्यपि दर्शनात् कारयिष्य इत्यपि चालापः स्यादिति चेत्, नैवम्। विधीनामुभयविधत्वेऽपि—

यानि कानि च पापानि ब्रह्महत्यासमानि च।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम्॥

इति मन्त्रलिङ्गाद्वपनमहं करिष्य इत्येवोल्लेख इति सिद्धम्।

---

१ पू. मी. अ० ११ अ० १२

इदं च मुण्डनं तादृशे तीरप्रदेशे स्थित्वा कार्य्यं यथा वायुनुन्नाः केशाद्याः स्वयमेव तीर्थे पतन्ति ।

यावन्ति नखलोमानि वायुना प्रेरितानि वै ।
पतन्ति जाह्नवीतोये नराणां पुण्यकर्मणाम् ॥ इति वचनात् ।
केशानां यावती सङ्ख्या छिन्नानां जाह्नवीजले ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

इति वचनाच्चेति । न तु स्वयं प्रक्षेप्तव्याः "केशनखलोमानि अप्सु न क्षिपेत्" इति गद्यशङ्खवचनात् । तीर्थवपनादौ विशेष उक्तः—

अपरार्के,

उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः ।
केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥
दक्षिणं कर्णमारभ्य धर्मार्थे पापसञ्चये ।
शिखाद्यं नवसंस्कारे शिखाद्यन्तं शिरो वपेत् ॥

धर्मार्थे तीर्थादिवपने दक्षिणकर्णमारभ्योदक्संस्थं वपेत् । पापसञ्चयनिमित्तके प्रायश्चित्तादौ शिखामग्रे ततोऽधस्तात् सर्वं वपेत् नात्रोदक्संस्थता । नवसंस्कारे चूडाकरणे दक्षिणकर्णाच्छिखान्तं शिखामारभ्य वामकर्णान्तं वपेदित्यर्थः ।

## अथ तीर्थस्नानम् ।

कौर्म्मे,

पृथिव्यां सर्वतीर्थेषु स्नात्वा पुण्येषु च द्विजाः ।
मुच्यते पातकैः सर्वैः समस्तैरपि पूरुषः ॥

भारते,

नाव्रतो नाकृतात्मा च नाशुचिर्न च तस्करः ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥

स्नानं तु विपरीतनदीप्रवाहादौ न कर्त्तव्यं शिष्टाचारात्। पठन्ति च—

प्रत्यावृत्तोदके स्नानं वर्ज्यं नद्यां द्विजातिभिः।
तस्यां रजकतीर्थं तु दशहस्तेन वर्जयेत्॥

तथा,

अग्राह्यास्त्वागता ह्यापो नद्याः प्रथमवेगजाः।
प्रक्षोभिताश्च केनापि याश्च स्युरशुभागमाः॥

अशुचिदेशादागता इत्यर्थः। तथा तीर्थाद्विनिर्गता इति क्वचित्पाठः। पठन्ति च—

शाल्मली तिन्तिडीनिम्बकरञ्जाश्च हरीतकी।
कोविदारकपित्थार्कवदर्येरण्डशिग्रवः॥
शेलुश्च खदिरश्चैषां स्नानं छायासु वर्जयेत्॥ इति।
बदरी च विभीतकीति क्वचित् पाठः।
प्रतिस्रोतो रजोयोगो रथ्याजलनिवेशनम्।
गङ्गायां न प्रदुष्यन्ति सा हि धर्मद्रवः स्वयम्॥
रात्रौ दैवात्तीर्थप्राप्तौ स्नानादिकं कार्यमेव।
महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम्।
तस्यां स्नानं न कुर्वीत नित्यनैमित्तिकादृते॥
इति देवलवचनात्।
मलमासेऽपि दैवात्तीर्थप्राप्तौ स्नानं कार्य्यम्।
तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः।

इत्युपक्रम्य कार्य्याणि मलमासेऽपीति यमेनाभिधानादिति केचित्। तच्चिन्त्यम्। अस्य वचनस्यारब्धतीर्थाधिकरणकस्नानपरत्वात्। आवृत्ततीर्थस्नानपरत्वाद्वा। अन्यथा

मलमासेऽप्यनावृत्तं तीर्थस्नानं विवर्जयेत्।

इत्यनेन विरोधापत्तेः । न च तस्याकस्मिकतीर्थप्राप्तिनिमित्तकेतरपरता । उक्तरीत्याऽसङ्कोचेनैवोपपत्तौ सङ्कोचे मानाभावात् । मदनपारिजातेऽप्येवम् । वस्तुतस्तु उभयोरपि तीर्थस्नानविधिनिषेधयोस्तीर्थाधिकरणकस्नानान्तरपरत्वात्तीर्थनिमित्तस्नानस्य निमित्तवशात् करणमेव । निमित्तभूता प्राप्तिरेव परं मलमासे न कार्या यात्राया निषिद्धत्वात् । अतो दैवात्तीर्थे प्राप्तस्य तत्प्राप्तिनिमित्तकं स्नानादि भवत्येव । एवम्—

विवाहतीर्थयज्ञेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं तद्वत् कर्म यज्ञादि कारयेत् ॥

इति पैठीनसिवचनमप्यारब्धतीर्थाधिकरणकस्नानादिपरं यज्ञसाहचर्यात् । न हि सूतके याग आरभ्यते किं त्वारब्धः समाप्यते । अकस्मात्तीर्थप्राप्तौ तु आशौचेऽपि नैमित्तिकं स्नानं कार्यमेव निमित्तबलात् । तीर्थे चान्यमुद्दिश्य कुशप्रतिकृतिस्नपनं कार्यम् । तत्र प्राप्तिदिननियमो नास्ति मानाभावात् ।

स्नापयेत् स्निग्धमित्रादीन् ज्ञातींस्तीर्थे नरोत्तमः ।
अन्यथा प्रहरन्त्येते बलात्तीर्थभवं फलम् ॥

इति स्कान्दवचनात् ।

तथा,

प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ।
मज्जयेत्तु यमुद्दिश्य सोऽष्टभागं फलं लभेत् ॥

प्रतिकृतिः प्रतिमा । कुशमयी प्रतिकृतिः ग्रन्थियुतकुशरूपबटुर्वा । अत्र चाचारात्—

कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः पुरा ।
त्वयि स्नाते तु स स्नातो यस्यार्थे ग्रन्थिबन्धनम् ॥

इति मन्त्रेण ग्रन्थिबन्धनं स्नपनं च कार्यम् ।

गारुडे,

मातरं पितरं चापि भ्रातरं सुहृदं गुरुम् ।
यमुद्दिश्य निमज्जेत द्वादशांशं लभेत सः ॥

तेन स्नानद्वादशांशफलम् । मात्रादीनुद्दिश्य स्वयं स्नायादित्यर्थः । अत्र स्नानं मृद्ग्रहणं विना मज्जनमात्रमिति केचित् । यद्यपीदं माघाधिकारे पठितं तथाप्येकत्र दर्शनादाचाराच्चान्यत्राप्यन्वेति । मातरं पितरं जायामिति क्वचित्पाठः। दशमांशं लभेत स इति स्मृतिदर्पणे पाठः। इदं च परार्थस्नानं जीवन्तमुद्दिश्यैव । मृतमुद्दिश्य तर्पणादेरेव विधानात् । मृतमुद्दिश्यापि तदित्यन्ये ।

महाभारते,

कुरुक्षेत्रं गयां गङ्गां प्रभासं पुष्कराणि च ।
एतानि मनसा ध्यात्वाऽवगाहेत ततो जलम् ।
स विमुच्येत पापेन राहुणा चन्द्रमा यथा ॥

कुरुक्षेत्रादिस्मरणे पापक्षयः फलम् । पापक्षयश्रवणमर्थवादो वा। क्त्वाप्रत्ययेन स्मरणस्य स्नानाङ्गत्वावगमात् । एतच्च स्मरणं मज्जनपूर्वाङ्गानन्तरं मज्जनाव्यवहितप्राक्काले कर्त्तव्यम् । अङ्गप्राप्तिश्च तीर्थस्नानस्य—

सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र मता क्रिया ॥

इति शङ्खेन क्रियास्नानत्वेन परिभाषितस्य "क्रियास्नानं प्रवक्ष्यामि" इत्यादिशङ्खवचनेनैव । अतश्च क्रियास्नानधर्मा एव तीर्थस्नाने न तु नित्यस्नानधर्माः। ते चाह्निकप्रकाशे द्रष्टव्याः । तीर्थस्नानं तु प्रकरणभेदात् नित्यस्नानाद्यपेक्षया पृथगेव काम्यं नित्यं च । सर्वतीर्थे च प्राति-

स्विकफलसत्त्वेऽपि वैकल्पिकं सर्वसाधारणं फलं पापक्षयः।

सर्वाण्येव तु तीर्थानि पापघ्नानि सदा नृणाम्।

इति शङ्खवचनात्।

अथ तर्पणम्।

शङ्खलिखितौ,

न स्रवन्तीं वृथाऽतिक्रामेदनवसिच्य।

अनवसिच्य तर्पणमकृत्वेति कल्पतरुः। तथा च नदीप्राप्तौ तस्मिन्नेव कूले स्नानतर्पणादि कृत्वा तदुत्तरणं कार्यम्। इदं च सरस्वत्यामेव। अत एव विशेषं पठन्ति—

मार्गेऽन्तरेव नदीप्राप्तौ स्नानादि परपारतः।

अर्वागेव सरस्वत्या एष मार्गगतो विधिः॥ इति।

विष्णुधर्मोत्तरे,

असन्तर्प्य पितॄन् देवान्नदीपारं च न व्रजेत्।

देवपदमृषीणामुपलक्षणम्।

महाभारते,

जलं प्रतरमाणश्च कीर्त्तयेत् प्रपितामहान्।

नदीमासाद्य कुर्वीत पितॄणां पिण्डतर्पणम्॥

पिण्डतर्पणमिति समाहारः।

विष्णुः,

अत्र च पितृगीता गाथा भवति।

कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलिम्।

नदीषु बहुतोयासु शीतलासु विशेषतः॥ इति।

स्कान्दे,

अकालेऽप्यथ वा काले तीर्थे श्राद्धं च तर्पणम्।

अविलम्बेन कर्त्तव्यं नैव विघ्नं समाचरेत्॥

अनेन च तीर्थस्नानवदेव राज्यादावपि तर्पणं कार्यमिति गम्यते ।

तथा,

यस्तु तीर्थे नरः स्नात्वा न कुर्यात् पितृतर्पणम् ।
पिबन्ति देहनिस्रावं पितरस्तु जलार्थिनः ॥

तथा,

गिरिषु ख्याततीर्थेषु नदीषु च विशेषतः ।
साकाङ्क्षाः पितरो नित्यं तिष्ठन्ति सलिलार्थिनः ॥

इदं च तर्पणं नैमित्तिकं भिन्नमेव स्नानवत्, नित्यतर्पणधर्मकं च । नित्यस्य प्रसङ्गेन तन्त्रेण वा सिद्धिः । यत्तु स्नानाङ्गं तर्पणं तत्तु तीर्थस्नानोत्तरं पृथगेव कार्यम् । न चेत्तस्य क्रियास्नानाङ्गत्वे मानाभावः ।

ब्रह्मपुराणे,

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते ।
तर्पणं तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम् ॥

इति वचनेन नैमित्तिकस्नानाङ्गत्वेनापि तर्पणस्य विहितत्वात् । अत्र च निषिद्धदिनेऽपि तीर्थे तिलतर्पणं कार्यमेव ।

अयने विषुवे चैव सङ्क्रान्त्यां ग्रहणेषु च ।
उपाकर्मणि चोत्सर्गे युगादौ मृतवासरे ॥
सूर्यशुक्रादिवारेऽपि न दोषास्तिलतर्पणे ।
तीर्थे तिथिविशेषे च कार्यं प्रेते च सर्वदा ॥

इतिवचनात् । अत एव—

स्कन्दपुराणे,

तीर्थमात्रे तु कर्तव्यं तर्पणं सतिलोदकैः ।
अन्यथा तर्पयेद्यस्तु स विष्ठायां कृमिर्भवेत् ॥

विशेषतस्तु जाह्नव्यां सर्वदा तर्पयेत् पितृन्।

अत्र च तीर्थनिमित्तकस्य तीर्थाधिकरणकस्य च प्रतिप्रसवो विशेषात्।

तथा मरीचिः,

तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम्॥
तिलाभावे तु द्रव्यान्तरेणापि तीर्थे तर्पणम्।
तिलानामप्यभावे तु सुवर्णरजतान्वितम्।
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वाप्यथ॥

इति योगियाज्ञवल्क्यवचनात्। सुवर्णरजतान्वितं, सुवर्णरजतस्पृष्टम्। अत्र केचित्—

पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम्।

इति सुमन्तुवचनात्तीर्थे हेमश्राद्धपक्षे श्राद्धानन्तरं तर्पणमाचरन्ति न तु पूर्वम्। तदयुक्तम्। बहुभिर्वाक्यैः स्नानानन्तरमेव तद्विधानात्। सुमन्तुवचनं तु येषां शाखिनां श्राद्धाङ्गभूतं तर्पणमस्ति तेषां हिरण्यश्राद्धे तत्पश्चाद्विधत्ते। अत एव प्रयोगपारिजाते श्राद्धाङ्गतर्पणमेव प्रकृत्येदमभिहितम्। तस्मात्तीर्थतर्पणं स्नानान्त एव कार्य्यमिति सिद्धम्। सन्न्यासिभिस्तु तर्पणं न कार्यं प्रतिप्रसवाभावात्।

न कुर्यात्सूतकं भिक्षुः श्राद्धपिण्डोदकक्रियाः।

इति स्मृतेश्च।

## अथ तीर्थश्राद्धम्।

पाद्मे,

तीर्थायतनगोष्ठेषु द्वीपोद्यानगृहेषु च।
विविक्तेषूपलिप्तेषु श्राद्धं देयं विजानता॥

गरुडपुराणे,

वाराणस्यां कृतं श्राद्धं तीर्थे शोणनदे तथा ।
पुनःपुनामहानद्यां श्राद्धी स्वर्गं नयेत् पितॄन् ॥

मात्स्ये,

कृतशौचं महापुण्यं सर्वपापनिषूदनम् ।
यत्रास्ते नरसिंहस्तु स्वयमेव जनार्दनः ॥
तीर्थमिक्षुमतीनाम पितॄणां वल्लभं सदा ।
सङ्गमे यत्र तिष्ठन्ति गङ्गायाः पितरः सदा ॥
तथा तत्र सरः पुण्यं सर्वमोचंननाम च ।
मन्दाकिनी तथा गोदा विपाशा च सरस्वती ॥
पूर्वमिन्द्रपदं तद्वद्वैद्यनाथं महाफलम् ॥
सिप्रानदी महाकालः तथा कालञ्जरं शुभम् ।
गयायां पिण्डदानेन समान्याहुर्महर्षयः ॥
शुक्लतीर्थं च विख्यातं तीर्थं सोमेश्वरं परम् ।
सर्वव्याधिहरं पुण्यं फलं कोटिशताधिकम् ॥
महाबोधिः पाटला च नागतीर्थमवन्तिका ।
महारुद्रो महालिङ्गं दशार्णा च नदी शुभा ॥
शतरुद्रा शताह्वा च तथा विष्णुपदं परम् ।
अङ्गारवाहिका तद्वन्नदौ तौ शोणघर्घरौ ॥
एतानि पितृतीर्थानि शस्यन्ते स्नानदानयोः ।
श्राद्धमतेषु यद्दत्तं तदनन्तफलं स्मृतम् ।

---

१ अस्मिन् प्रकरणे मत्स्यपुराणे द्वाविंशेऽध्याये अन्यान्यपि बहूनि तीर्थानि प्रतिपादितानि सन्ति तानि तत एवावगन्तव्यानि ।

२ तथा रुद्रसरः पुण्यं सरो मानसमेव च । इति मु०म०पु०पाठः।

३ पूर्वमिन्द्रपदमिति मु० म० पाठः ।

द्वारका.कृष्णतीर्थं च तथाऽर्बुदसरस्वती ॥
धूतपापं तथा तीर्थं समुद्रो दक्षिणस्तथा।
गोकर्णो गजकर्णश्च तथैव पुरुषोत्तमः॥
एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते।
भीमेश्वरं कृष्णवेणी कावेरी वद्रेवा नदी ॥
नदी गोदावरीनाम त्रिसन्ध्या तीर्थमुत्तमम्।
तीर्थं त्रैयम्बकं नाम नदी पर्वतवाटिका ॥
श्राद्धमेतेषु यद्दत्तं तत्तु कोटिगुणं भवेत्।
तीर्थं तु पुष्करं नाम शालग्रामस्तथैव च ॥
कावेरी चोत्तरार्का च तथा जालन्धरो गिरिः।
एतेषु पितृतीर्थेषु श्राद्धकारी महीयते ॥
लोहतीर्थं तथा दण्डं चित्रकूटस्तथैव च।
विन्ध्ययोगश्च गङ्गायां तथा नन्दान्तरं शुभम् ॥
कूष्माण्डकं तथा तीर्थं सुवंशीपुलिनं तथा।
संसारमोचनं तीर्थं तथैव ऋणमोचनम् ॥
अट्टहासं तथा तीर्थं गौतमेश्वरमेव च।
तथा वसिष्ठतीर्थं च हारीतं तत्परं स्मृतम् ॥
हंसतीर्थं कुशावर्त्तं ब्रह्मावर्त्तं तथैव च।
पिण्डारकं च विख्यातं शङ्खोद्धारं तथैव च ॥
वैकुण्ठतीर्थं च तथा भीमेश्वरपुरं तथा।

---

१ कुड्मला इति मु० म० पाठः।
२ चोत्तरा पुण्या इति मु० म० पाठः।
३ नदीतटम् इति मु० म० पाठः।
४ कुब्जाम्रन्तु तथा तीर्थमुर्वशीपुलिनं तथा इति मु० म०पाठः।

तीर्थं वेदशिरोनाम तथैवेक्षुमती नदी ॥
तीर्थं मातृगृहं नाम करवीरपुरं तथा ।
सप्तगोदावरं तीर्थं सर्वतीर्थेष्वनुत्तमम् ॥
तत्र श्राद्धं प्रदातव्यमनन्तफलमीप्सुभिः ।

यत्रेक्षुमत्यां गङ्गायाः सङ्गमे पितरः सदा तिष्ठन्तीत्यन्वयः । तेन गङ्गेक्षुमत्योः सङ्गमो गम्यते । अत एव "तथैवेक्षुमती नदी" इत्यनेन न पौनरुक्त्यम् । गोदेतितीर्थान्तरम् । तेन गोदावर्या न पौनरुक्त्यम् । 'मन्दाकिनी तथाऽच्छोदा' इति पाठे तु नानुपपत्तिः । नदी पर्वतवाटिका इति । नदीति सामान्यतः, पर्वतवाटिका पुष्पाद्युद्यानम् ।

विष्णुः, पुष्करेष्वक्षयं दानं श्राद्धं जपहोमतपांसि च पुष्करे स्नातमात्रस्तु सर्वपापेभ्यः पूतो भवति एतदेव गयातीर्थेऽमरकण्टकपर्वते वराहपर्वते यत्र क्वचन नर्मदातीरे यमुनातीरे गङ्गायां विशेषतो गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे कुशावर्त्ते बिल्वके नीलपर्वते कनखले कुब्जाम्रे भृगुतुङ्गे केदारे महालये नलितिकायां सुगन्धायां शाकम्भर्यां फल्गुतीर्थे महागङ्गायां त्रिहलिकाश्रमे कुमारधारायां प्रभासे यत्र क्वचन सरस्वत्यां विशेषतः सततं नैमिषारण्ये वाराणस्यामगस्त्याश्रमे कौशिक्यां शरयूतीरे शोणस्य ज्योतीरसायाश्च सङ्गमे श्रीपर्वते कालोदके उत्तरमानसे मतङ्गवाप्यां साप्तर्षे विष्णुपदे स्वर्गमार्गप्रदेशे गोदावर्यां गोमत्यां वेत्रवत्यां विपाशायां वितस्तायां शतद्रूतीरे चन्द्रभागायामिरावत्यां सिन्धोस्तीरे दक्षिणपञ्चनदे औषज, एवमादिषु अन्येषु तीर्थेषु सरिद्वरासु सङ्गमेषु प्रभवेषु पुलिनेषु प्रस्रवणेषु च पर्वतनिकुञ्जेषु वनेषूपवनेषु च

१ तथैवौघवती नदी इति मु० म० पाठः ।

गोमयेनोपलिप्तेषु मनोज्ञेषु गृहेषु च । इति ।

प्रभवोऽत्र नदीनामुत्पत्तिदेशः । प्रस्रवणं, निर्झरः । उपवनं, गृहवाटिका । अत्र पुष्करेष्वक्षयं श्राद्धमित्यादिवाक्यैः सामान्यवाक्यादेव तीर्थप्राप्तिनिमित्तके श्राद्धे प्राप्ते तदाश्रितपुष्करादिदेशाख्यगुणफलविधिः "चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्य" इतिवत् । न तु विशिष्टश्राद्धान्तराविधानं विधिगौरवापत्तेः । अगत्या त्वन्यत्र विशिष्टविधिः । अमावास्यादिश्राद्धेऽपि तद्विधिरिति तु शूलपाणयः ।

देवीपुराणे,

तीर्थेषु ब्राह्मणान्नैव परीक्षेत कदाचन ।
अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ॥
सक्तुभिः पिण्डदानं च संयावैः पायसेन वा ।
कर्त्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुडेन वा ॥
श्राद्धं च तत्र कर्त्तव्यमर्घावाहनवर्जितम् ।
श्वध्वाङ्क्षगृध्रकाकानां नैव दृष्टिहतं च तत् ॥
श्राद्धं च तैर्थिकं प्रोक्तं पितॄणां तुष्टिकारकम् ।
अकालेऽप्यथ वा काले तीर्थे श्राद्धं तथा नरैः ॥
प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम् ।
पिण्डदानं च तच्छस्तं पितॄणां चातिवल्लभम् ॥
विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत् ।

अपरीक्षितब्राह्मणमेव तीर्थश्राद्धं कार्य्यम् । निश्चितगर्हितदोषास्तु त्याज्या एव । अत्र च "सक्तुभिः पिण्डदानं च" इत्यनेन पिण्डदानानुवादेन द्रव्यविधिः । अतश्च यन्मते पिण्डदानमङ्गं तन्मतेऽपि प्राकृताङ्गस्य पुनःश्रवणमाज्यभागवन्न परिसङ्ख्यार्थं प्रयाजैकादशत्ववद्गुणमात्रविधानोपपत्तेः । "पिण्डदानं च

तच्छस्तम्" इति तु शस्तमिति श्रवणादकालेऽपि श्राद्धप्रशंसार्थं न त्वाज्यभागवत् परिसङ्ख्यार्थं, पूर्ववाक्यैकवाक्यतया स्तावकत्वोपपत्तौ विध्यश्रवणेन च परिसङ्ख्यार्थत्वायोगात्। आज्यभागयोस्त्वेकवाक्यत्वासम्भवात्तथाङ्गीकारो युक्तः। अत एव नैतस्य श्राद्धासम्भवे पिण्डदानमात्रकर्त्तव्यतापरत्वमिति कस्यचिदुक्तं युक्तम्। तस्य—

पिण्डमात्रं तु दातव्यमभावे द्रव्यविप्रयोः।
श्राद्धाहनि तु सम्प्राप्ते भवेन्निरशनोऽपि वा॥

इति देवलवचनेन श्राद्धमात्रे विधानेनैतस्य तद्विधायकत्वायोगाच्च। श्रीदत्तोऽप्येवम्। सक्तुः भृष्टयवचूर्णम्। संयावः तिलमुद्गादिसाधितमन्नम्। पिण्याकस्तिलकल्कः। स चात्र ससारो विवक्षितः। निःसारस्याभक्ष्यत्वेन श्राद्धे निषेधात्। पिण्डे सक्त्वादिविधानाच्छ्राद्धस्यापि सक्त्वादिद्रव्यता। अत एव—

स्मृतिः,

दद्याद्यच्च द्विजातिभ्यः शृतं वाऽशृतमेव वा।
तेनाग्नौकरणं कुर्य्यात् पिण्डांस्तेनैव निर्वपेत्॥

कल्पतरौ मत्स्यपुराणम्,

आमश्राद्धं यदा कुर्य्याद्विधिज्ञः श्राद्धदस्तदा।
तेनाग्नौकरणं कुर्य्यात् पिण्डांस्तेनैव निर्वपेत्॥ इति।

यद्यपि तीर्थश्राद्धमामान्नेनैव कार्य्यम्।

आपद्यनग्नौ तीर्थे च ग्रहणे चन्द्रसूर्य्ययोः।
आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात् सदैव हि॥

इति वचनात्। भावप्रधानबहुव्रीहिणा अनग्नौ पाकयोग्याग्निविरहे इत्यर्थः। अव्ययीभावे शब्दासाधुत्वापत्तेः। तथापि आमश्राद्धप्रसङ्गे सक्त्वादिमात्रनिर्वचनबलात्। सक्त्वादिभिन्नं

सिद्धान्नं तु न प्राप्नोति प्रापकाभावात्। एवं च सक्त्वाद्य-सम्पत्तौ आमान्नेन। तत्रापि पिण्याकः प्रशस्तः। तदभावे गुडेन श्राद्धपिण्डदाने। गुडेन चेतिवचनात्।

आमश्राद्धप्रदोऽनग्निः सर्वत्रैव मनीषिणः।
तेनाग्नौ करणं कुर्यात् पिण्डांस्तेनैव निर्वपेत्॥
आमान्नालाभे हेम्ना तीर्थश्राद्धं कर्त्तव्यम्।
अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं सङ्ग्रहे च कुर्याच्छूद्रः सदैव हि॥

इति कालादर्शधृतवचनात्। शूद्रस्य हेमामान्नयोर्विकल्पः। उभयत्र सदैव हि इति श्रवणात्।

अमावास्यादिकं श्राद्धं यदा शूद्रः समाचरेत्।
कुर्य्यादामेन वा हेम्ना याचयित्वाऽपि नान्धसा॥

इति बौधायनवचनाच्च। हेमश्राद्धं हिरण्यप्रधानकं श्राद्धम्।

तीर्थे श्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः।
आमान्नेन हिरण्येन कन्दमूलफलैरपि॥

इति पठ्यमानवचनप्रामाण्ये तु पक्वान्नेन तीर्थश्राद्धं मुख्यं तदभावे आमान्नादिना। पक्वान्नपदं वा सक्त्वादिपरम्। "श्राद्धं च तत्र कर्त्तव्यम्" इति वचने तत्रेतिनिमित्तसप्तमी प्राप्तेरेवेत्युपसंहारस्वरसात्। तेन तीर्थप्राप्तिनिमित्तकं श्राद्धमर्घ्यावाहनरहितं कार्य्यं न तु तीर्थाधारकश्राद्धमात्रम्। न च तत्रेतिसप्तमी आधारत्वबोधिकैव उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वात् न तु निमित्तत्वबोधिका लक्षणापत्तेरिति वाच्यम्। उपसंहारस्वारस्येनैव तदङ्गीकारात्। न चैवमपि आवाहनस्य पित्रादिसन्निधिफलकत्वेन तीर्थे च पितॄणां नित्यसन्निहितत्वाद्वैयर्थ्यापत्तेस्तीर्थाधिकरणकश्राद्धमात्र एवावाहनबाधो युक्त इति वाच्य-

म् । शारीरस्य सन्निधेर्देवताधिकरणे निरस्तत्वात् । किमर्थं तर्ह्या-
वाहनम् । अदृष्टार्थमित्यवेहि । तेन तीर्थनिमित्तकश्राद्ध एवार्घ्या-
वाहनराहित्यमिति सिद्धम् । तथा पदार्थान्तरपर्य्युदासोऽपि—

देवीपुराणे प्रदेशान्तरे,

अर्घमावाहनं चैव द्विजाङ्गुष्ठनिवेदनम् ।
तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥ इति ।

अग्नौकरणमपि तीर्थे नास्तीति स्मृतिरत्नावल्याम् ।
"श्वध्वाङ्क्षगृध्रकाकानाम्" इतिवाक्येन श्वादिदर्शनेऽपि तीर्थश्राद्धं
हतं न भवतीति प्रतिपादितम् । श्वादिपदं चण्डालादेरुपलक्षकम् ।
वैगुण्यसम्पादकदर्शनकर्तृत्वाविशेषात् । तथा—

देवलोऽपि,

न चात्र श्येनगृध्रादीन् पक्षिणः प्रतिषेधयेत् ।
तद्रूपाः पितरस्तत्र समायान्तीति वैदिकम् ॥
दृष्टिपदमनिवार्य्यस्पर्शोपलक्षणम् ।
तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥
इतिवचनात् ।

अकालेऽप्यथ वा काल इत्यस्यावश्यकामावास्यादिकाल-
भिन्न इत्यर्थः । न तु रात्र्यादौ, निषेधविरोधात् । तेनायमर्थः ।
यस्मिन्नपि काले प्रतिपदादौ श्राद्धमनावश्यकं तदापि तीर्थ-
प्राप्तौ श्राद्धमवश्यं कार्य्यमिति मिश्रादयः । अत्र केचिदेवं दूष-
णमाहुः । एवं सत्यकाल इत्यनर्थकं स्यात् । गृहप्रवेशादि-
निमित्तकमावश्यकामावास्यादिकालभिन्नेऽपि श्राद्धं क्रियते न

---

१ श्वध्वाङ्क्षेति वचनस्थितम् ।

च तत्राकाले इति पदं श्रूयते। निमित्तसन्निपाते नैमित्तिकं कार्य्यमित्यनेनैवाकालेऽपि कर्त्तव्यमित्यवगम्यते गृहप्रवेशनिमित्तकवत्। अन्यथा तत्राप्यकाल इति प्रक्षेप्यं स्यात्। तेन ज्ञायते उपरागादिषु रात्रौ यथा श्राद्धमनुष्ठीयते तथा तीर्थप्राप्तिनिमित्तकमपि। एवद्वचनबलान्निषेधोऽप्येतद्भिन्नविषय एवेति, तन्न। निषिद्धकालानादरस्यापि न्यायसिद्धत्वात् गृहदाहेष्ट्यादौ आसुरी रात्रिरन्यत्रेत्यादिना निषिद्धाया रात्रेर्न्यायेनैवानादरणीयत्वात्। वस्तुतो विहितातिरिक्तस्य सर्वस्यापि निषिद्धत्वं नियमविधौ इतरनिवृत्तेः फलत्वात्। अतो निमित्तप्राप्तौ नैमित्तिकमावश्यकमिति न्यायादेव रात्र्यादौ प्रतिपदादौ च श्राद्धप्राप्तिः। अकाल इत्यादीनि तु न्यायप्राप्तानुवादकानीत्येव युक्तम्। अत एव—

गरुडपुराणेऽपि,

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।
दिवा च सर्वदा रात्रौ गयायां श्राद्धकृद्भवेत्॥ इति।

भारते,

भुक्तो वाप्यथवाऽभुक्तो रात्रावहनि खेचर।
न कालनियमो ह्यस्ति गङ्गां प्राप्य सरिद्वराम्॥ इति।
ततः सायाह्नदत्तं हि राक्षसैर्विप्रलुप्यते।
ग्रहोपवाससङ्क्रान्तितीर्थश्राद्धादिकं विना॥

इतिदाक्षिणात्यसङ्गृहीतविष्णुवचनाच्च। आचारोऽपि वैदिकानामेवम्। अवैदिकानामपरीक्षकत्वेनाभिमतानां द्विजाणामनाचरणेऽपि न क्षतिः। दैवात्तद्दिने श्राद्धाकरणे दिनान्तरेऽपि कार्य्यम्। न च प्राप्तिनिमित्तकं प्राप्तिदिन एव कर्त्तुमुचितं दिनान्तरे निमित्तसत्त्वेऽपि निमित्तानन्तरकालाभा-

वादितिवाच्यम् । नैमित्तिकं हि निमित्तानन्तरमसति बाधके कार्यमिति अनन्तरकालो न्यायलभ्यः । तेन सति प्रतिबन्धे कालान्तरेऽपि कर्त्तुमुचितं निमित्तप्रयुक्तत्वात् जातेष्टिवत् । यथा हि "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इति विहितजातेष्टेर्जातकर्मपूर्वं कर्त्तव्यत्वेन विहितायाः जातकर्मपूर्वं स्तनपाननिषेधात् तावत्कालं स्तनपानविरहे स्तनन्धयविपत्तिप्रसङ्गात् सूतकानन्तरकाल एव कर्त्तव्यतेति चतुर्थे सिद्धान्तितम् । तथेहापि । न च—

तीर्थद्रव्योपपत्तौ च न कालमवधारयेत् ।
पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते ॥

इति वचनात् सद्य एव काले कार्य्यमिति वाच्यम् । सद्य इत्यादिपदानां निमित्तानन्तरं नैमित्तिकमिति न्यायलभ्यानन्तरकालानुवादकत्वमेव निमित्तत्वद्योतनार्थम् अन्यथा सप्तम्या तीर्थस्याङ्गत्वप्रसङ्गात् । न तु सद्यः कालविधायकत्वम् । एतेनास्तु जातेष्टेः कालान्तरे करणं जातकर्मपूर्वकाले कदापि कर्त्तुमशक्यत्वेनान्यथानुपपत्तेः अनन्तरकालस्यानङ्गत्वात् । इह तु प्राप्तिदिने कर्त्तुं शक्यतया तद्दिन एव निमित्तमनुष्ठापकम् । दिनान्तरे तु निमित्तानन्तरकालाभावेन तदनवच्छिन्नायास्तीर्थप्राप्तेर्निमित्तत्वापायाच्छ्राद्धलोप इत्यपास्तम् । अनन्तरकालस्य कालान्तरवन्निमित्तविशेषणत्वाभावात्तथात्वे निमित्तपर्यवसानाभावेनानन्तरकालस्यैव निर्वक्तुमशक्यत्वात् । अतस्तीर्थप्राप्तेर्निमित्तस्य दिनान्तरे सत्त्वेन न श्राद्धलोप इति सिद्धम् । यदि तु दैवादकृतश्राद्ध एव तीर्थान्निर्य्याति तदा देशान्तरेऽपि श्राद्धं कार्य्यं निमित्तस्य वृत्तत्वात् इत्येके । देशान्तरे तच्छ्राद्धं न कार्यं निमित्तभूततीर्थरूपदेशाभावात् पुत्रनाशप्रागभावानव-

च्छिन्नपुत्रत्वनिमित्ताभावाज्जातेष्टिलोपवदिति तु युक्तम्। तिथि-नक्षत्रादिनिषेधोऽपि न तीर्थश्राद्धमाक्रामति।

न वारं न च नक्षत्रं न कालस्तत्र कारणम्।
यदैव दृश्यते तीर्थं तदा पर्वसहस्रकम्॥

इति प्रभासखण्डात्। निषेधस्तु—

भारते,

नक्षत्रे च न कुर्वीत यस्मिन् जातो भवेन्नरः।
न प्रौष्ठपदयोः कार्य्यं न चाग्नेये च भारत॥
दारुणेषु च सर्वेषु प्रत्यरौ च विवर्जयेत्।
ज्योतिषे यानि प्रोक्तानि तानि सर्वाणि वर्जयेत्॥

प्रौष्ठपदयोरिति प्रोष्ठपदाभाद्रपदाद्विनक्षत्रत्वात् द्विवचनम्। आग्नेयं कृत्तिका। दारुणमुक्तम्—

ज्योतिषे,

दारुणं चोरगं रौद्रमैन्द्रं नैर्ऋतमेव च। इति।

उग्रनक्षत्रपरतया त्वस्य व्याख्यानमसङ्गतम्।

नक्षत्राणि तथैवात्र दारुणोग्राणि वर्ज्जयेत्।

इति विष्णुधर्मोत्तरवचने भेदेनोपन्यासात्। ज्योतिषे यानि प्रोक्तानि, निषिद्धतया भरण्यादीनि।

तथा,

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि।
अत्र श्राद्धं न कुर्वीत पुत्रदारधनक्षयात्॥

अतश्च एतद्वचनजातं व्रीहियवपाकादिनिमित्तसावकाश-श्राद्धविषयमिति केचित्। दाक्षिणात्यास्तु—

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्प्पणम्॥

तथा,

नन्दाश्वकामरव्यारभृग्वग्निपितृकालभे ।

गण्डे वैधृतिपाते च पिण्डास्त्याज्याः सुतेप्सुभिः ॥

अश्वः सप्तमी । कामस्तु त्रयोदशी । अग्निपितृकालभानि कृत्तिकामघाभरण्यः ।

कार्ष्णाजिनिः,

विवाहव्रतचूडासु वर्षमर्द्धं तदर्द्धकम् ।

पिण्डदानं मृदा स्नानं न कुर्य्यात्तिलतर्प्पणम् ॥

वृद्धिमात्रे तथान्यत्र पिण्डदाननिराक्रिया ।

कृता गर्गादिभिर्मुख्यैर्मासमेकं तु कर्मिणाम् ॥

इति वचनैकवाक्यतया महालयादौ पिण्डदाननिषेधकमेवेत्याहुः । अन्ये त्वतिक्रान्तप्रेतश्राद्धविषयमित्याहुः । वस्तुतोऽतिक्रान्तनैमित्तिकश्राद्धमात्रविषयमिदम् । अतस्तीर्थश्राद्धमप्यतिक्रान्तमनिषिद्धदिन एव युक्तं जातेष्टिवत् । मलमासे तीर्थश्राद्धं न कार्य्यम् ।

मलमासेऽप्यनावृत्तं तीर्थस्नानं विवर्जयेत् ।

इत्यनेन स्नाननिषेधेन तदुत्तरभाविनः श्राद्धस्य सुतरामपास्तत्वात् इति । वस्तुतस्तु स्नाननिषेधस्य तीर्थाधिकरणकस्नानपरतया व्याख्यातत्वात्तीर्थनिमित्तकस्नानस्य दैवान्मलमासे तीर्थप्राप्तौ कर्त्तव्यतायाः साधितत्वात् ।

नित्यनैमित्तिके कुर्य्यात् प्रयतः सन् मलिम्लुचे ।

तीर्थश्राद्धं गजच्छायां प्रेतश्राद्धं तथैवच ॥

इति वचनाच्च । दैवान्मलिम्लुचे तीर्थप्राप्तौ श्राद्धं कार्य्यमेव न तु बुद्धिपूर्वकं प्राप्तौ कार्यम् । एवमाशौचेऽपि ।

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि ।

न तत्र सूतकं तद्वत् कर्म यज्ञादि कारयेत् ॥

इति पैठीनसिवचनात् । केचित्तु भुक्तवता रात्रौ सन्ध्यायां मलमासे तीर्थप्राप्तौ च आमान्नेन श्राद्धं कृत्वा पक्वान्नेन परदिने शुद्धमासेऽपि कार्य्यम् ।

यौगादिकं मासिकं च श्राद्धं चाऽऽपरपाक्षिकम् ।

मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपिच ॥

इति वचनात् इत्याहुः । तन्न । यदि तीर्थे पक्वान्नेन श्राद्धं विहितं तदा रात्रावपि कार्यमेव विशेषाश्रवणात् । वस्तुत आमेनैव तीर्थश्राद्धमिति प्रागेव प्रपञ्चितम् । तैर्थिकस्योभयत्र कर्त्तव्यतावचनं तु यदैव शुद्धे मले वा तीर्थप्राप्तिस्तदैव श्राद्धं कुर्यादिति व्यवस्थया द्रष्टव्यम् । अस्तु वा एतद्वचनबलात्तैर्थिकस्योभयत्रकर्त्तव्यता । आमादिव्यवस्था प्रमाणिकीतिदिक् ।

अथ तीर्थश्राद्धे जीवत्पितृकस्याप्यधिकारः ।

उद्वाहे पुत्रजनने पित्रेष्ट्यां सौमिके मखे ।

तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥

इति मैत्रायणीयगृह्यपरिशिष्टात् । उद्वाहे, द्वितीयादौ । प्रथमे तु पितुरेवाधिकारात् । पुत्रजनने, तन्निमित्ते वृद्धिश्राद्धे । पित्रेष्ट्यां, चातुर्मास्यान्तर्गतायाम् । सौमिके मखे, तार्तीयसवनिकैः पुरोडाशखण्डैः स्वचमसाधस्तात् पिण्डदाने । ब्राह्मण आयाते, त्रिनाचिकेताद्युत्तमब्राह्मणप्राप्तौ । जीवतः पितुः, पुत्रस्य एते श्राद्धकालाः षडित्यर्थः । अत एव जीवत्पितृकस्य गयाश्राद्धनिषेधः सङ्गच्छते ।

लौगाक्षिः,

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपाक्षिकम् ।

न जीवत्पितृकः कुर्यात् तिलैः कृष्णैश्च तर्पणम् ॥

अस्यापवादं पठन्ति—

आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं सुतः कुर्य्यात् पितर्य्यपि च जीवति ॥ इति ।

प्रसङ्गाद्गयाप्राप्तौ मातृश्राद्धं कुर्यान्न तु बुद्धिपूर्वकं गयां गच्छेदिति केचित् व्यवस्थापयन्ति । वस्तुतस्तु वचनद्वयेऽपि गयाश्राद्धपदं प्रसिद्धगयाश्राद्धपरं न तु तीर्थश्राद्धपरं तस्य तत्र शक्त्यभावात् । न च गयासम्बन्धित्वादुपस्थितिः, तथा सति गयाधिकरणकस्य वृद्धिश्राद्धादेरप्युपस्थितिः स्यात्तथा च तस्यापि जीवत्पितृकं प्रति निषेधापत्तेः । तेन गयाश्राद्धपदं प्रसिद्धगयाश्राद्धपरमिति तत्रैव निषेधापवादौ । तीर्थश्राद्धं तु जीवत्पितृकस्य सर्वत्र भवत्येवेति सिद्धम् । एवं च—

सपितुः पितृकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादितिश्रुतेः ॥

इति कात्यायनवचनमुक्तषट्श्राद्धातिरिक्तपरम् ।

अथ तीर्थे नानाश्राद्धसमवाये निर्णयः ।

एकदा काशीगङ्गामणिकर्णिकानां प्राप्तौ तन्त्रेणैकमेव श्राद्धं कार्यम् । तत्र च काशीमणिकर्णिकागङ्गाप्राप्तिनिमित्तकं श्राद्धं करिष्ये, काशीगङ्गामात्रप्राप्तौ तु काशीगङ्गानिमित्तकं श्राद्धमितिवाक्यम् । परे तु काशीप्राप्तिनिमित्तके श्राद्धे मणिकर्णिकारूपदेशोऽङ्गत्वेन विधीयते तेन तत्रैवं तत्कार्य्यम् । असम्भवे तु नैमित्तकत्वेनावश्यकत्वान्मणिकर्णिकान्यदेशेऽपि देशरूपाङ्गविकलमेव कार्यमित्याहुः । ननु प्रयाजाद्यङ्गेष्वेव तन्त्रता दृष्टा न प्रधानेष्वपीति चेत्, न । युगपदनेकगृहदाहादिनिमित्तकक्षा-

मवत्यादीष्टीनां. यमलपुत्रजन्मनि जातेष्ट्योश्च तन्त्रेणानुष्ठानात्। अत एवामावास्यासङ्क्रान्तिनिमित्तकश्राद्धयोरपि तन्त्रता। अङ्गेषु तन्त्रतोपपादकयुक्तेर्लाघवस्य नानानिमित्तसन्निपातिश्राद्धेषु सत्त्वाच्च। यत्र तु क्रमेणानेकतीर्थप्राप्तिस्तत्र श्राद्धं क्रमेणैव। "नैकः श्राद्धद्वयं कुर्य्यात्" इति वचनं तु फलभूमाभ्रान्त्या प्राप्तश्राद्धद्वयनिरासार्थम्। उपवासस्तु तन्त्रम् अगृह्यमाणविशेषत्वात्, मुण्डनं च, आवृत्त्या कर्तुमशक्यत्वात्। गयातिरिक्ततीर्थश्राद्धं षड्दैवतमेव कार्य्यं गयायां तु नवदैवतम्।

नान्दीमुखेऽष्टकाश्राद्धे गयायां च मृतेऽहनि।
पितामह्यादिभिः सार्द्धं मातुः श्राद्धं समाचरेत्॥

इति शातातपवचनात्।

अष्टकासु च वृद्धौ च गयायां च क्षयाहनि।
मातुः श्राद्धं पृथक् कुर्यादन्यत्र पतिना सह॥

इतिवायुपुराणाच्च। स्मृतिरत्नावलीकारादीनामप्ययनुमतोऽयमर्थः। अत्रापि गयापदं गयायां प्रसिद्धश्राद्धपरम्। अतो गयायामपि तीर्थश्राद्धं षड्दैवतमित्यन्ये। अन्ये तु तीर्थसामान्यश्राद्धमुपक्रम्य—

हविःशेषात्ततो मुष्टिमादायैकैकमादृतः।
क्रमशः पितृपत्नीनां पिण्डनिर्वपणं चरेत्॥

इति वचनात्तीर्थमात्रे मातृपार्वणमपीच्छन्ति। स्मृत्यर्थसारकृता तु तत्र मातृश्राद्धं पृथक् प्रशस्तमितिवदता कृताकृतत्वमुक्तम्। अत्र च यदा मातृश्राद्धं पृथक् तदा सपत्नमातृसंपत्नपितामहीसपत्नप्रपितामहीभ्योऽपि दद्यात्। सर्वाः पितृपत्न्यो

मातर इतिस्मरणात् । विशेषस्तु—

अनेका मातरो यस्य तीर्थे चापरपाक्षिके ।
अन्नदानं पृथक् कुर्य्यात् पिण्डदानं तु निर्वपेत् ॥

इति देवलवचनादेक एव पिण्डः । अशक्तपरमिदं शक्तेन पृथक् पिण्डो देय इति वृद्धाः । अन्ये तु श्राद्धहेमाद्रौ—

केचिदिच्छन्ति नारीणां पृथक्श्राद्धं महर्षयः ।

इति लिखितवचने नारीसामान्यान्मातामहीनामपीच्छन्ति। अत्रान्वारोहणादौ श्राद्धव्यवस्था तु श्राद्धप्रकाशे द्रष्टव्या । यदि तीर्थप्राप्तिदिने वार्षिकं स्यात्तदा तीर्थप्राप्तिनिमित्तकं कृत्वा तत्कार्यम् । वार्षिकस्य तीर्थश्राद्धस्य च विरुद्धधर्मकत्वेन तन्त्रताऽसम्भवात् । न चैवमपि प्रसङ्गेन सिद्धिर्भवतु प्रसङ्गस्थलेऽन्यार्थेनैवोपकारसिद्धौ 'विरुद्धधर्मान्तरस्य चमसादिवदनङ्गत्वादिति वाच्यम् । तन्त्रमध्ये पाठस्य पातस्य चाभावेन प्रसङ्गासम्भवात् । तेनात्र क्रम एव युक्तः । तत्र पराह्णपूर्वकाले तीर्थप्राप्तौ तु यथोक्त एव क्रमः एकस्य प्राप्त्युत्तरकालमेव कर्त्तव्यत्वात् इतरस्य चापराह्णे कार्यत्वात् । यदा तु अपराह्ण एव प्राप्तिस्तदा "विलम्बो नैव कर्त्तव्य" इत्यादिवाक्यात्तीर्थश्राद्धं कृत्वा वार्षिकं कार्यम् । तत्कालस्यापराह्णादेः सत्त्वात्। एवमपराह्णोत्तरमपि तीर्थप्राप्तौ तीर्थश्राद्धोत्तरम्। वार्षिकस्य गौणकालानुवृत्तौ स एव क्रमः तदननुवृत्तौ तु वार्षिकस्य निषिद्धे सायङ्कालादौ कर्त्तुमशक्तेर्विपरीतक्रमः । न चेयं तीर्थश्राद्धेऽप्यशक्तिस्तुल्येतिवाच्यम् । तत्र रात्र्यादिनिषेधस्यापोदितत्वेन निषिद्धकालेऽपि कर्तुं शक्यत्वात्। एवं दर्शश्राद्धादिपातेऽपि द्रष्टव्यम् । अत्र च द्विमासोनसंवत्सरोत्तरं पुनस्तीर्थप्राप्तौ तीर्थश्राद्धं कार्यम् ।

इति वचनस्थचकारेण तस्यापि समुच्चयात् युक्तितौल्याच्च। यस्तु वेतनेन परार्थं गतः स प्रथमं यजमानपित्रादिश्राद्धं कुर्य्यात्। यजमानपितृपितामहप्रपितामहानामित्युल्लेखः कार्य्य इति श्राद्धकल्पहेमाद्रौ विस्तरेणेदमुक्तम्।

आदौ गत्वा गयाशीर्षे प्रेतराजस्य पिण्डकम्।
स मुदा बन्धुभिः सार्द्धं स्वपितृभ्यस्ततो ददौ॥

इति वायुपुराणे प्रेतवेतनप्रेरितेन वणिजा प्रथमं प्रेतपिण्डदानश्रवणाच्च। वामनपुराणेऽपीयमेव कथा वचनं चेदृशम्।

अथ प्रकीर्णकम्।

तीर्थे स्नानश्राद्धादिकं कृत्वा तीर्थदेवताः पश्येत्।

स्कन्दपुराणे,

दानादिकं यथाशक्ति विप्रे दद्यात् सुसंयतः।
पश्चात्तु कारयेच्छ्राद्धं न्यायागतधनादिभिः॥
ततो मङ्गलपूर्वाद्यैस्तैर्थिकानवलोकयेत्।
तिष्ठेत्पश्चात्सतां मध्ये त्यजेत्सर्वाः शिवाः क्रियाः॥

दानमत्र देयम्। कारयेत् कुर्यात्। न्यायागतेत्यादि दानादिष्यन्वेति। तैर्थिकान्, तीर्थस्थान् देवान्। एवं चादौ स्नानतर्पणं जलात्मकतीर्थे। दानं तु जलभूमिरूपोभयतीर्थसाधारणम्। तेन यथाशक्ति दानश्राद्धतीर्थदेवावलोकनानि क्रमेण कुर्यात् पश्चात् साधुजनसमाजे तिष्ठेत् निषिद्धं च वर्जयेदित्यर्थः। देवताप्रणामे त्वयं विशेषो—

नारदीये,

यः शूद्रेणार्चितं लिङ्गं विष्णुं वा प्रणमेन्नरः।
न तस्य निष्कृतिर्दृष्टास्ति प्रायश्चित्तशतैरपि॥

नमेद्यः शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा ।
स सर्वयातनाभोगी यावदाचन्द्रतारकम् ॥
एवम्—
योषिद्भिः पूजितं लिङ्गं विष्णुं वापि नमेत्तु यः ।
स कोटिकुलसंयुक्त आकल्पं रौरवं वसेत् ॥
अनादिलिङ्गादौ तु नायं दोषः ।
अदृश्यान्यपि दृश्यानि दुरवस्थान्यपि प्रिये ।
भग्नान्यपि च कालेन तानि पूज्यानि सुन्दरि ॥
इति स्कान्दात् । दुरवस्थानि, अस्पृश्यस्पृष्टानि । अत एव—
यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि ।
तदाप्रभृति शूद्रश्च योषिद्वापि न संस्पृशेत् ॥
इत्युक्तम् ।
स्कान्दे,
स्त्रीणामनुपनीतानां शूद्राणां च नरेश्वर ।
स्थापने नाधिकारोऽस्ति विष्णोर्वा शङ्करस्य च ॥
ब्राह्मणद्वारा स्थापने न दोष इति वदन्ति । स्पर्शने नाधिकारोऽस्तीति नारदीये पाठः । एतदनन्तरम्—
शूद्रो वाऽनुपनीतो वा स्त्रियो वा पतितोऽपि वा ।
केशवं वा शिवं वापि स्पृष्ट्वा नरकमाप्नुयुः ॥
इतिवचनं दृश्यते ।
देवलः,
तर्पणं पितृदेवानां श्राद्धदानं सदक्षिणम् ।
तीर्थे तीर्थे च गोदानं नियतः प्राकृतो विधिः ॥
विशिष्टख्यातलिङ्गेषु वृषदानं विधीयते ।
स्नानं विलेपनं पूजां देवतानां समाचरेत् ॥

संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि।
मुण्डनं चोपवासं च ततो यत्नेन कारयेत्॥
ब्राह्मणानां भूमिदानं देवपूजाकराय च।
सर्वत्र देवयात्रायां विधिरेष प्रवर्त्तते॥

तथा,

देवानां दर्शनं पुण्यं दर्शनात्स्पर्शनं वरम्।
स्पर्शनादर्चनं श्रेष्ठं घृतस्नानमतः परम्॥
अष्टकृत्वो मन्त्रजपः सुप्रभूतसुगन्धिभिः।
प्राहुर्गङ्गाजलैः स्नानं घृतस्नानसमं बुधाः॥

घृतग्रहणं पञ्चामृतोपलक्षणम्। अर्चने तु ब्रह्मविष्णुशिवादित्यादीनां गन्धपुष्पाद्युपचारादौ विशेषाः पूजाप्रकाशादवगन्तव्याः। प्रदक्षिणायां तु विशेषः।

एकां चण्ड्या रवेः सप्त तिस्रो दद्याद्विनायके।
चतस्रो विष्णवे देयाः शिवस्यार्द्धप्रदक्षिणा॥

तथा,

शिवं प्रदक्षिणं कुर्वन् सोमसूत्रं न लङ्घयेत्।
अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे॥
जपहोमनमस्कारान्न कुर्याद्देवतालये।
अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः॥
वामभागे भवेन्नाशो दक्षिणे सर्वकामदः।
यशः पशुपतेरग्रे दण्डवत् पततो भुवि॥
पतन्ति पातकाः सर्वे नोत्तिष्ठन्ति तदा सह।
इति वचनात् शिवस्याग्रेऽपि नमस्कारः कार्यः।

शिवपुराणे,

यस्तु शङ्करनिर्माल्यं पादेनाक्रमते नरः ।
षष्टिवर्षसहस्राणि तिर्यग्योनिषु जायते ॥

पाद्मे,

द्रव्यमन्नं फलं तोयं शिवस्वं न स्पृशेत् क्वचित् ।
लङ्घयेन्नैव निर्माल्यं कूपे सर्वं विनिक्षिपेत् ॥
मक्षिकापादमात्रं यः शिवस्वमुपजीवति ।
लोभान्मोहात् स पच्येत कल्पान्तं नरके नरः ॥

कल्पतरौ स्कान्दे,

निर्माल्यं यो हि मे भक्त्या शिरसा धारयिष्यति ।
अशुचिर्भिन्नमर्यादो नरः पापसमन्वितः ॥
नरके पच्यते घोरे तिर्यग्योनौ च जायते ।
ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत् ।
तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते ॥ इति ।

एवं च—

स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा जलमाविशेत् ।
इतिवचनमपि विहितेतरस्पर्शविषयम् ।

ब्रह्मपुराणे,

शङ्कर उवाच ।

अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलालग्नं सर्वं याति पवित्रताम् ॥

लग्नं, सम्बद्धम् । तेन शालग्रामशिलायां यच्छिवपूजनं तन्नैवेद्याद्यदुष्टमिति प्रामाणिकाः । शालग्रामयुक्तलिङ्गार्चननैवेद्याद्यदुष्टमित्यपरे । शालग्रामसम्बन्धिनैवेद्याद्दुष्टमित्यन्ये । अन्ये तु तत्तद्देवभक्तेन तत्तन्नैवेद्यं भोक्तव्यमिति वदन्ति ।

ब्राह्मे तु,

ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवं च प्रदापयेत्।
रुद्राङ्गलग्नमग्नौ च दहेत्सर्वं च तत्क्षणात्॥
अन्येभ्यस्त्वथ देवेभ्यो यत्तद्दीनेषु निक्षिपेत्।

इत्याद्यन्यत्र विस्तरः। तीर्थे प्रतिग्रहो न कार्य्यः।

मात्स्ये,

तीर्थे न प्रतिगृह्णीयात्पुण्येष्वायतनेषु च।
निमित्तेषु च सर्वेषु चाप्रमत्तो भवेन्नरः॥
यस्तीर्थे प्रतिगृह्णाति पुण्येष्वायतनेषु च॥
निमित्तेषु च सर्वेषु क्षेत्रेषु च तथैव च।
निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते॥

निमित्तेषु,सङ्क्रान्तिग्रहणादिषु। तत्तीर्थमिति। यत्र प्रतिग्रहः कृतः तद्धनं यावद्भुङ्क्ते तावत्तत्तीर्थं तीर्थप्रयुक्तविशिष्टफलदं न भवतीत्यर्थः। पापक्षयादिकं तु सामान्यफलं भवतीति वदन्ति। “यावत्तद्धनमश्नुते”इति वचनाद्धनान्तरमुपभुञ्जानस्य फलं भवत्येव। यावत्तद्धने स्वत्वं तावन्न भवति तत्त्यागे तु भवतीति-कल्पतरुः, तन्न। कृतप्रतिगृहीतवित्तव्ययस्य तदवशिष्टधान्यमुष्टिसत्त्वे वित्तान्तरेण वर्त्तयतोऽपि तत्तीर्थफलं न स्यादिति महद्वैशसम्।

पातालखण्डे,

गृही चेद्धर्मनिरतो बहिरर्जितवित्तभुक्।
व्यवहारोपयोग्यत्र गृह्णीयात्तवनिमलं बहु॥ इति।

पाद्मे,

यस्तु लौल्याद्द्विजः क्षेत्रे प्रतिग्रहरुचिर्भवेत्।
नैव तस्य परो लोको नायं लोको दुरात्मनः॥

महादानानि ये विप्रा गृह्णन्ति ज्ञानदुर्बलाः ।
वृक्षास्ते द्विजरूपेण जायन्ते ब्रह्मराक्षसाः ॥
न वेदबलमाश्रित्य प्रतिग्रहरुचिर्भवेत् ।
अज्ञानाद्वा प्रमादाद्वा दह्यते कर्म नेतरत् ॥
स्थितो वै नृपतेर्द्वारि न कुर्याद्वेदविक्रयम् ।
हत्वा गावं वरं मांसं भक्षयीत द्विजाधमः ॥

द्विजरूपेण विशिष्टास्ते वृक्षा ब्रह्मराक्षसाश्च भवन्तीत्यर्थः । द्विजरूपिणो ब्रह्मराक्षसा एव ते वृक्षा भवन्तीति वार्थः ।

तथा,

यदन्यत्र कृतं पापं तीर्थे तद्याति लाघवम् ।
न तीर्थकृतमन्यत्र क्वचित्पापं व्यपोहति ॥

गारुडे,

सेवितेऽपि महातीर्थेऽप्यन्यत्र म्रियते यदि ।
शुभे देशे कुले धीमान स भवेद्वेदविद्द्विजः ॥
गृहे तु यत् कृतं पापं तीर्थस्नानैर्विशुद्ध्यति ।
तत्र दानानि दत्त्वा च अक्षय्याणि सदा खग ॥
कुरुते तत्र पापं चेद्वज्रलेपसमं हि तत् ।
क्लिश्येत् स नात्र सन्देहो यावच्चन्द्रार्कतारकम् ॥

जलात्मकतीर्थे तीरेऽपि प्रतिग्रहादिनिषेधो जपश्राद्धादिविधानं च । तीरं च यावत् तीरत्वेन व्यवहारस्तावदेव । गङ्गायां दर्शनात् सार्धहस्तशतमित्यन्ये ।

ब्रह्मपुराणे,

ब्राह्मणः प्रतिगृह्णीयाद्वृत्त्यर्थं साधुतस्तथा ।
अव्यश्वमाषिमातङ्गतिललौहांश्च वर्जयेत् ॥
कृष्णाजिनप्रतिग्राही न भूयः पुरुषो भवेत् ।

शय्यालङ्कारवस्त्रादि प्रतिगृह्य मृतस्य च ॥
नरकान्न निवर्तन्ते धेनुं तिलमयीं तथा ।
अप्यश्वेतिरत्नाकरादौ पाठः ।
स्कान्दे,
अजिनं मृतशय्यां च मेषीं चोभयतोमुखीम् ।
कुरुक्षेत्रे च सङ्गृह्य न भूयः पुरुषो भवेत् ॥
हेमाद्रौ आग्नेये,
कुरुक्षेत्रे च यद्दानं चण्डालात्पतितात्तथा ।
मासिके च नरः श्राद्धे भुञ्जन् प्रेतत्वमाप्नुयात् ॥
पाद्मे,
न तीर्थे पातकं कुर्यात्त्यजेत्तीर्थोपजीवनम् ।
तीर्थे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः ॥
तथा,
ब्रह्महत्यांसुरापानमपि स्तेयं तरिष्यति ।
आतुराद्यत्प्रगृहीतं तु तत् कथं वै तरिष्यति ॥
राजप्रतिग्रहो निषिद्धः ।
यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः ।
स पर्यायेण यातीमान्नरकानेकविंशतिम् ॥
इति वचनात् । लुब्धस्य ब्राह्मणादेरपि । यत्तु—
राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।
इति, तदापद्विषयं सद्वृत्तराजविषयं वा । तदा च लुब्धस्येत्यादि राजविशेषणं बोध्यम् ।
महाभारते,
अपि पापकृतो राज्ञः प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनीं जननीं यथा ॥

भूमिप्रतिग्रहस्तु स्वर्गफलकोऽपि ।

भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।

उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ ॥

इति मिताक्षरादिधृतवचनात् ।

याज्ञवल्क्यः,

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।

गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥

अधो नरकम् ।

विष्णुः,

एतानि यदि गृह्णाति स्वेच्छयाऽभ्यर्थितो न तु ।

तस्मै दाने न दोषोऽस्ति यस्त्वात्मानं तु तारयेत् ॥

एतेनानिच्छवे गर्हितदाने दोष इति सूचितम् । तारयेत्, जपादिना प्रतिग्रहपापमपनुदेत् । तारणप्रकारमाह—

हारीतः, मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत् पञ्च मध्यमे दशोत्तमे द्वादशरात्रं पयोव्रतः शतसहस्रमसत्प्रतिग्रहेष्विति ।

अष्टसहस्रम्, अष्टाधिकं सहस्रम् । असत्प्रतिग्रहेषु, उभयतोमुख्यादिप्रतिग्रहेषु ।

आदिपर्वणि,

किं करिष्यत्यसौ मूढो गृह्णन्नुभयतोमुखीम् ।

सहस्रं वारुणाः पाशाः क्षुरधाराग्निसन्निभाः ॥

पूर्णे वर्षसहस्रे च पाश एकः प्रमुच्यते ।

एकादशाहदेयशय्याधिकारे—

ब्रह्मपुराणम्,

तेन कृष्णा तु सा शय्या न ग्राह्या द्विजसत्तमैः ।

गृहीतायां तु तस्यां स पुनः संस्कारमर्हति ॥
वेदेषु च पुराणेषु शय्या सर्वत्र गर्हिता । इति ।
एवं चान्यत्रापि शय्यानिषेधस्तत्पर एव ।

याज्ञवल्क्यः,

प्रतिग्रहसमर्थो हि नादत्ते यः प्रतिग्रहम् ।
ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥

अपवादमाह स एव,

कुशाः शाकपयोमत्स्या गन्धाः पुष्पं दधि क्षितिः ।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च ॥

चकाराद्गृहादि ।

शय्यां गृहान् कुशान् गन्धानपः पुष्पं मणीन् दधि ।
मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्णुदेत् ॥

मणीन्, विषादिनिवारकान्

तथा,

एधोदकं फलं मूलमन्नमभ्युद्धृतं च यत् ।
सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् ॥

अभ्युद्धृतम्, अभ्यर्थ्य दत्तम् । अभयदक्षिणाम्, अभयदानम् ।

मनुः,

अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ।
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥

एतद्वचनं याज्ञवल्कीयमिति मिताक्षराकुल्लूकभट्टमाधवाचार्याः । मनोरिति शूलपाणिः । इदं तीर्थेऽप्यपवादकम् । तीर्थभिन्ने इत्यन्ये ।

भरद्वाजः,

अयाचितोपपन्नेषु नास्ति दोषः प्रतिग्रहे ।
अमृतं तद्विदुर्देवास्तस्मात्तन्नैव निर्णुदेत् ॥

अपवादान्तरमाह—

स एव,

देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव च ।
सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥

भृत्या, भरणीया भार्यापुत्रादयः । आत्मवृत्त्यर्थं जीवनमात्रार्थम् "न तु तृप्येत् स्वयं ततः" इति मनुस्मृतेः ।

मनुः,

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥

दायः, सम्बन्धिनाशाभिव्यङ्ग्यस्वत्वास्पदम् । लाभो निध्यादेः । जयः सङ्ग्रामादौ । प्रयोगः कुसीदम् । कर्मयोगः कृषिवाणिज्यपुत्रकन्यादिः ।

मनुः,

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् ॥

प्रयोगसारे,

प्रतिग्रहं न गृह्णीयादात्मभोगाविधित्सया ।
देवतातिथिपूजार्थं यत्नाद्धनमुपार्जयेत् ॥

हेमाद्र्यादौ अङ्गिराः,

कुटुम्बार्थे हि सद्भावात् प्रतिग्राह्यमयाचितम् ।
कृत्स्वर्थमात्मने चैव न हि याचेत कर्हिचित् ॥

व्यासः,

योऽसद्भ्यः प्रतिगृह्यापि पुनः सद्भ्यः प्रयच्छति ।

आत्मानं सङ्क्रमं कृत्वा परांस्तारयते हि सः॥
स्कान्दे तु
धनस्वामिनमात्मानं सन्तारयति दुस्तरम्।
इति शेषार्द्धं दृश्यते।
मनुः,
वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः।
अवृत्तिकर्षितः सीदन्निमं धर्म्मं समाचरेत्॥
सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः।
पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते॥
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलनार्कसमा हि ते॥
ज्वलनाम्बुसमा इत्यपपाठः शिष्टैरपरिग्रहात्।
तथा,
जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
आकाशमिव पङ्केन न स पापेन लिप्यते॥
अजीगर्त्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः।
न चालिप्यत पापेन क्षुत्प्रतीघातमाचरन्॥
श्वमांसमिच्छन्नार्त्तोऽत्तुं धर्माधर्मविचक्षणः।
प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान्॥ इत्यादि।
स्कान्दे,
दुर्भिक्षे दारुणे प्राप्ते कुटुम्बे सीदति क्षुधा।
असतः प्रतिगृह्णीयात् प्रतिग्रहमतन्द्रितः॥
तथा मनुः,
याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनाम्।
प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मनः॥

जपहोमैरपैत्येनो याजनाध्यापनैः कृतम् ।
प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च ॥

**तथा तत्रैव,**

प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि ।
प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः ॥

**धर्मविवृतौ,**

उपवासो व्रतं होमस्तीर्थयात्राजपादिकम् ।
विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तत्फलम् ॥

पठन्ति च—

अम्बुमध्ये गवां गोष्ठे तीर्थेष्वपि च पर्वसु ।
राहोर्दर्शनकाले च सूतकं नैव विद्यते ॥

त्वरयान्यत्र गमनसम्भावनायां दानादिविषयकमिदमिति वदन्ति ।

गृहे दशगुणं दानं गोष्ठे शतगुणं भवेत् ।
पुण्यतीर्थेषु साहस्रमनन्तं शिवसन्निधौ ॥

तथा,

येषु तीर्थेषु ये देवा येषु तीर्थेषु ये द्विजाः ।
येषु तीर्थेषु यत्तोयं विचिकित्सेन्न तत्र तु ॥

एषूपहतेष्वपि न दोष इत्याशयः । अत एव

यस्मिन् देशे च यत्तोयं या भूमिर्या च मृत्तिका ॥
सैव तत्र प्रशस्ता स्यात्तत्र स्नानादिको विधिः ।

इत्यन्यत्रोक्तम् ।

तथा,

न देवः पर्वताग्रेषु न देवो विष्णुसद्मनि ।
देवश्चिदानन्दमयो हृदि भावेन दृश्यते ॥

यत्र यत्र यदा भक्तिर्दृढा यस्य महात्मनः ।
तत्र तस्य महादेवः प्रसादमुपगच्छति ॥

देवलः,

न नदीषु नदीं ब्रूयात् पर्वतेषु न पर्वतम् ।
नान्यत्प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च ॥
यत्र स्थाने तु यत्तीर्थं नदी पुण्यतमाऽथ वा ।
तां ध्यायेन्मनसा वापि अन्यत्रेच्छाविचिन्तनम् ॥

इदं स्नानविषयम् । नदीमिति गङ्गातिरिक्तपरम् ।

स्नानकालेऽन्यतीर्थेषु जप्यते जाह्नवी जनैः ।
विना विष्णुपदीं कान्यत् समर्थमघशोधनम् ॥ इति स्कान्दात् ।

देवलः,

अरण्यं देवतास्थानं तीर्थान्यायतनानि च ।
तस्मात्तेषु वसन् लोकात् याति लोकं दिवौकसाम् ॥

तीर्थयात्रादिफलं सर्वं श्रीकृष्णे समर्पणीयम् । तदुक्तम्—

ब्राह्मे,

यानि यानि च तीर्थानि दानव्रततपांसि च ।
तानि सर्वाणि सिद्ध्यन्ति विष्णोः पादार्पणेन वै ॥
नार्पयन्ति हरौ लोके पुण्यानि विविधानि च ।
विफलानि भवन्तीह श्रम एव फलं भवेत् ॥

ब्रह्मवैवर्ते,

राजोवाच ।

किं तत्पुण्यं महाभाग येन श्रद्धातिनिर्मला ।
जायते वर्द्धते वापि यया साक्षाद्भवेद्धरिः ॥

कामकलोवाच ।

श्रुतिस्मृतिपुराणोक्तं क्रियते कर्म यच्छुभम् ।

ब्रह्मार्पणधिया सर्वं कर्तव्यं विष्णुवल्लभम् ॥

उक्तं च भागवते,

कायेन वाचा मनसेन्द्रियेण बुद्ध्यात्मना वाऽनुसृतस्वभावात् ।
करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥

कौर्म्ये,

ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः ।
प्रसन्नेनैव कुर्वाणो याति तत् परमं पदम् ॥
ब्रह्मणा दीयते देयं ब्रह्मणे सम्प्रदीयते ।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥

इदं च सर्वकर्मसु क्रियायाः कारकाणां च ब्रह्मभावनोपलक्षकम् ।

## अथ तीर्थवासनफलम् ।

काशीखण्डे,

स्वयं वस्तुमशक्तोऽपि वासयेत्तीर्थवासिनम् ।
अप्येकमपि मूल्येन स वस्तुः फलभाग्भवेत् ॥

यद्यपीदं काशीमधिकृत्योक्तं तथापि तीर्थसामान्यपदबलादन्यत्राप्येवमिति वदन्ति ।

अथ सामान्यतस्तीर्थयात्राद्यनुष्ठानक्रमो लिख्यते ।

तत्र कस्मिंश्चिद्दिने एकभक्तादि कृत्वा तत्परदिने मुण्डनमुपवासं च विधाय तत्परदिने कृतनित्यक्रियो गणेशं ग्रहानिष्टदेवतां चाभ्यर्च्य बहुसर्पिःसमन्वितं यात्रार्थं श्राद्धं कृत्वा ब्राह्मणत्रयं सम्पूज्य हिरण्यादिना परितोष्य ॐअद्येत्यादि प्रतिपदमश्वमेधजन्यफलसमफलप्राप्तिकामस्तीर्थयात्रामहं करिष्ये इति सङ्कल्प्य मुद्राकङ्कणकषायवस्त्रच्छत्रोपानद्दण्डधारणरूपकार्पटीवेषं विधाय वसत्यवच्छिन्नं ग्रामं गृहं वा प्रदक्षिणी-

कृत्य क्रोशाभ्यन्तरग्रामं गत्वाऽसम्भवे ततोऽधिकमपि गत्वा श्राद्धशेषघृतादिना सह पारणं कुर्यात्। उपानद्धारणं तु मिश्रमतेन। वस्तुन उपानद्धारणे यात्रायाः पादफलह्रास उपानच्छून्यस्य पूर्णं फलमिति। श्राद्धं चेदं पार्वणविधिकम्। वृद्धिश्राद्धरूपमित्यन्ये। श्राद्धं चेदं षड्दैवतं सर्वेषाम्। छन्दोगभिन्नानां नवदैवतमिति कश्चित्। ततो दिनान्तरे कृतस्नानादिर्गृहीतकार्पटीवेषः पूर्वाह्णे तीर्थाभिमुखं गच्छेत्। वेषधारणं च गमनकाल एव नत्वाह्निकभोजनादिकालेऽपि प्रमाणाभावात्। वस्तुतो भोजनादिकाले तत्सत्त्वेऽपि न क्षतिः धातुरक्तस्य स्वभावशुद्धत्वादिति। भोजनकाले चौदने तीर्थनामाष्टवारं जपेत्। पथि ब्रह्मचर्य्यादिकं कार्य्यम्। यथाशक्ति पथ्यपि देयम्। एवं तीर्थात्प्रत्यावृत्तः स्वग्रामसमीपे ग्रामान्तरमागत्य देवान् ग्रहादीन् सम्पूज्य तीर्थयात्रासमाप्तिनिमित्तकं बहुसर्पिःसमन्वितं पार्वणं कृत्वा पूर्ववत् ब्राह्मणत्रयं सम्पूज्य स्वग्रामं प्राप्य पूर्ववत् प्रदक्षिणीकृत्य स्वगृहं प्रविश्य कार्पटीवेषं त्यक्त्वा श्राद्धशेषघृतादिना सह भोजनं कुर्य्यात्। अत्रापि पूर्वदिने स्वग्रामसमीपग्रामे उपवासं कृत्वा परदिने श्राद्धादि कृत्वा प्रविशेदिति कश्चित्। दाक्षिणात्यास्तु सर्पिःप्रधानकं यात्राश्राद्धम् अतो नानानामगोत्राद्युच्चार्य्य एतत्स्वोपकरणं घृतमित्यादिवाक्यं कार्य्यमित्याहुः।

अथ तीर्थप्राप्तिदिनकृत्यम्।

तत्र यानादिना गतोऽपि तीर्थसमीपे यथाशक्ति कियद्दूरं केवलपद्भ्यां गत्वा तीर्थे दृष्टिपथं गते साष्टाङ्गं प्रणमेत्। तीर्थाय नमः पुष्पाञ्जलिं दद्यात्। यथाशक्त्युपढौकनं स्थापयेत् आचारात्। ततः प्रथमं प्रणवेन तीर्थं स्पृष्ट्वा ततः सचैलमवगाहेत्। दाक्षिणत्यास्तु—

सागरस्वननिर्घोष दण्डहस्तासुरान्तक ।
जगत्स्रष्टर्जगन्मर्दिन्नमामि त्वां सुरेश्वर ॥
तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥

इति प्रार्थनामन्त्रं पठित्वा स्नायादिति वदन्ति । प्रथममेव मुण्डनं कृत्वा ततः स्नानादिकं कार्यमित्येके । स्नानश्राद्धानन्तरं मुण्डनमित्यपरे । स्नानतर्पणादिकं च स्वगृह्योक्तविधिना कार्य्यम् । गृह्योक्तविधिना वा पौराणिकविधिना वा । यत्पुराणीयं स्नानं तत्पुराणीयं तर्पणं कार्यम् । शूद्रेण तु पौराणिकमेव कार्य्यं मन्त्रस्थाने च नमः शब्दः प्रयोज्यो ब्राह्मणेन मन्त्रः पठनीय इति । पौराणिकमन्त्राः शूद्रेणापि पठनीया इत्यन्ये । ततः श्राद्धं कुर्यात् । तत् षड्दैवतं छन्दोगानाम् । अन्येषां गयायां नवदैवतम् । तीर्थान्तरेऽपि नवदैवतमित्यन्ये । श्राद्धं चामेनैव अशक्तौ हेम्ना-पि गुडेन वा । शूद्रस्याप्येवम् । अर्घावाहनवर्जितं श्राद्धं कार्य्यम् । श्वकाककाकादीनां दृष्ट्यापि नोपहतं भवति । सक्त्वादिना पिण्डदानं पिण्याकेन गुडेन वा । असक्तौ पिण्डदानमात्रमपि कार्य्यम् । तीर्थश्राद्धं जीवत्पितृकेणापि पितामहादीनुद्दिश्य कार्य्यम् । साग्निकेनैवेत्यपरे । गयाश्राद्धं तु जीवत्पितृकेण न कार्य्यम् । प्रसङ्गागतेन तु मृतमातृकेण मातृश्राद्धं गयायां कार्य्यं न तु सति पितरि तदुद्देशेन गन्तव्यम् । दाक्षिणात्यास्तु विधवानामपि तीर्थश्राद्धमाहुः । तीर्थे श्राद्धं कृत्वा गयायां वक्ष्यमाणरीत्या षोडशीकर्म कार्य्यम् । ततः श्राद्धं कृत्वा तीर्थदेवान् पश्येत् । देवानां दर्शनं पुण्यं ततोऽपि स्पर्शनं ततोऽप्यर्चनं तच्च षोडशभिः पञ्चभिरुपचारैर्वा ।

आसनं स्वागतं पाद्यमर्घमाचमनीयकम् ।

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाश· जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् —श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) २

(१८) अद्वैतसिद्धिसिद्धान्तसार· । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्योः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्मामृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकरणे श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्रीश्रीपुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्य-
व्याख्यासमलङ्कृतमिताक्षरासहिता । व्य-
वहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रव-
र्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्व-
चिन्तामण्या श्रीरघुनाथतार्किकशिरोमणि-
विरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणि-
ता । रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्या-
ख्यव्याख्यया सहिता तर्कपाद । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहो-
पाध्याय-श्रीनागेशभट्टविरचिता ।
श्रीमद्दुर्बलाचार्य बालम्भट्टाभ्यां विर-
चितकुञ्जिकाकलाटीकाद्वयसंवलिता । १०

(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय
विश्वेश्वरसूरिविरचितः । ६

(४८) वीरमित्रोदयः । लक्षणप्रकाशः ।
महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ७

(४९) बृहदारण्यकवार्तिकसारः श्रीमाद्विद्यारण्यस्वा-
मिविरचितः । महेश्वरतीर्थकृतयालघुसं-
ग्रहाख्यया टीकया समलंकृतः । ४

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महा-
महोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्म-
हामहोपाध्याय पं० रामकृष्णभट्टाचार्य-
विरचिता परिशिष्टाधिकरणनिरूपणपूर्व-
कं टिप्पण्या परिष्कृता । १

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र क-
णादरहस्यम् । श्रीशंकरमिश्रविरचितम् १

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय
काश्मीरिककेशवभट्टविरचिता । विद्यावि-
नोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेता २

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महा-
महोपाध्याय श्रीमित्रमिश्रविरचितः । १

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,
चौखम्बा बनारस सिटी







THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 240.

# वीरमित्रोदयः ।

## तीर्थप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः ।

# VÎRAMITRODAYA,

TIRTH-PRAKÂSA

BY

MAHÂMAHOPÂDHÂYA PANDITA MITRA MIŚRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. X.

FASCICULUS II

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE, BENARES.
AGENTS:-
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.

*Price Rupee one.*




॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२४०

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्रा ७ आनकाः ८
अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ " ०

५ डाकव्ययः पृथग् नास्ति । ... ... ... ... ... ... ...

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १२
(३) श्लोकवार्त्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) ३
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचितः । तर्कपादः (मीमांसा) २
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा (मीमांसा) ... २
(८) ब्रह्मसूत्रभाष्यम् बादरायणप्रणीतब्रह्मसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णम् । (वेदान्तः) ६
(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा २
(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्रीश्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम् वेदान्तः १
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः । सम्पूर्णः (न्यायः) ... ... ... ... ५
(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् (मीमांसा) ... २
(१४) न्यायसुधा (तन्त्रवार्त्तिकटीका) भट्टसोमेश्वरविरचिता । (मीमांसा) ११

मधुपर्कश्चाचमनं स्नानं वासोविभूषणम् ॥
गन्धं पुष्पं धूपदीपौ नैवेद्यं वन्दना तथा ।

इति षोडशोपचाराः । गन्धपुष्पधूपदीपनैवेद्यानि पञ्चोपचाराः ।.अभावे गन्धपुष्पाभ्यामपि । घृतेन देवस्नानं महाफलम् । सुगन्धिगङ्गाजलैः स्नानं घृतस्नानसमम् । पञ्चामृतस्नानमपि महाफलम् । शक्तौ प्रतितीर्थं गोदानं कार्य्यम् । विशिष्टख्यातलिङ्गेषु वृषदानं कार्य्यम् । अवस्थानेऽधिकं फलम् । सर्वं तीर्थफलं श्रीकृष्णाय समर्पयेदिति ।

इति तीर्थसामान्यप्रघट्टकम् ।

अथ तीर्थानामुद्देशः क्रियते ।

विष्णुपुराणे,

पराशर उवाच ।

मैत्रेय श्रूयतामेतत् सङ्क्षेपाद्गदतो मम ।
नास्य वर्षशतेनापि वक्तुं शक्योऽतिविस्तरः ॥
जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज ।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥
एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥
जम्बूद्वीपः समस्तानामेतेषां मध्यमः स्थितः ।
तस्यापि मेरुर्मैत्रेय मध्ये कनकपर्वतः ॥
चतुराशीतिसाहस्रो योजनैरस्य चोच्छ्रयः ।
प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥
मूले षोडशसाहस्रो विस्तारस्तस्य भूभृतः ।
भूपद्मस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः ॥

हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे ।
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥
लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथाऽपरे ।
सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥

द्वौ, निषधनीलौ। अपरे हेमकूटश्वेतादयो यथाक्रमं दशदश-योजनसहस्रहीनाः । निषधमपेक्ष्य हेमकूटो दशहीनः तं चापेक्ष्य हिमवान् दशहीनः । एवं नीलमपेक्ष्य श्वेतः तञ्चापेक्ष्य शृङ्गीति ।

तथा,

भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् ।
हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥
रम्यकं चोत्तरं वर्षं तथैवानु हिरण्मयम् ।
उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥
नवसाहस्रमेकैकमेतेषां द्विजसत्तम ।
इलावृतं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥
मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् ।
इलावृतं महाभाग चत्वारश्चात्र पर्वताः ॥
विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः ।
पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ॥
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः ।
कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च ॥
एकादशशतायामाः पादपा गिरिकेतवः ।
जम्बूद्वीपस्य सा जम्बूर्नामहेतुर्महामुने ॥
महागजप्रमाणानि जम्ब्वास्तस्याः फलानि वै ।
पतन्ति भूभृतः पृष्ठे शीर्यमाणानि सर्वतः ॥
रसेन तेषां प्रख्याता तत्र जम्बूनदीति वै ।

सरित्प्रवर्तते सा च पीयते तन्निवासिभिः ॥
न स्वेदो न च दौर्गन्ध्यं न जरा नेन्द्रियक्षयः।
तत्पानसुस्थमनसां जनानां तत्र जायते ॥
तीरमृत्तद्रसं प्राप्य सुखवायुविशोषिता।
जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम् ॥

रम्यकं चोत्तरमिति मेरोरुत्तरमित्यर्थः । यथा वै भारतमिति। यथा भारतं धनुराकृति तथेत्यर्थः। नवसाहस्रमिति। एतेषां भारतादीनां मध्ये एकैकं वर्षं नवनवसहस्रयोजनप्रमाणमित्यर्थः। किञ्चात्रेलावृते चत्वारः पर्वता विष्कम्भा धारकाः कीलका ईश्वरेण रचिताः । अन्यथा मूर्ध्नि विस्तारात् पतनं स्यात्। तेषु मन्दरादिषु पूर्वादिक्रमेण कदम्बादयश्चत्वारः पादपा एकादशशतयोजनोच्छ्राया गिरिकेतवो ध्वजा इव रचिताः। नामहेतुः, नामप्रवृत्तिहेतुः। मेरोः पूर्वपश्चिमवर्षद्वयादिकमाह—

मेरोः पूर्वेण भद्राश्वं केतुमालं च पश्चिमे।
वर्षे द्वे तु मुनिश्रेष्ठ तयोर्मध्यमिलावृतम् ॥
वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनम्।
वैभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम् ॥
अरुणोदं महाभद्रमसितोदं समानसम्।
सरांस्येतानि चत्वारि देवभोग्यानि सर्वदा ॥
शीतान्तश्चक्रमुञ्जश्च कुररी माल्यवांस्तथा।
वैकङ्कप्रमुखा मेरोः पूर्वतः केसराचलाः ॥
त्रिकूटः शिशिरश्चैव पतङ्गो रुचकस्तथा।
निषधादयो दक्षिणतस्तस्य केसरपर्वताः ॥
शिखिवासाः सवैदूर्यः कपिलो गन्धमादनः।

जारुधिप्रमुखास्तद्वत् पश्चिमे केसराचलाः ॥
मेरोरनन्तराङ्गेषु जठरादिष्ववस्थिताः ।
शङ्खकूटोऽथ ऋषभो हंसो नागस्तथा परः ॥
कालञ्जराद्याश्च तथा उत्तरे केसराचलाः ।

वनमित्यादि । मन्दरादिचतुर्षु पर्वतेषु चैत्ररथादिचत्वारि वनानीत्यर्थः । मेरोः कर्णिकास्थानीयत्वात् शीतान्तादयः केसरस्थानीयाः । अनन्तराङ्गेषु, अतिसमीपेषु । अत एव जठरादिषु, जठरादितुल्यदेशेषु ।

तथा,

चतुर्दशसहस्राणि योजनानां महापुरी ॥
मेरोरुपरि मैत्रेय ब्रह्मणः प्रथिता दिवि ।
तस्याः समन्ततश्चाष्टौ दिशासु विदिशासु च ॥
इन्द्रादिलोकपालानां प्रख्याताः प्रवराः पुरः ।
विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् ॥
समन्तात् ब्रह्मणः पुर्य्यां गङ्गा पतति वै दिवः ।
सा तत्र पतिता दिक्षु चतुर्द्धा प्रतिपद्यते ॥
शीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात् ।
पूर्वेण शैलाच्छीता तु शैलं यात्यन्तरिक्षगा ॥
ततश्च पूर्ववर्षेण भद्राश्वेनैति साऽर्णवम् ।
तथैवालकनन्दापि दक्षिणेनैत्य भारतम् ॥
प्रयाति सागरं भूत्वा सप्तभेदा महामुने ।

तथैवेति केसराचलादिक्रमेण निषधहेमकूटाद्यतिक्रमेणेत्यर्थः । सप्तभेदेति । तत्र—

मत्स्यः,

स्रोतांसि त्रिपथायास्तु प्रत्यपद्यन्त सप्तधा ।

नलिनी ह्लादिनी चैव पावनी चैव प्राच्यगाः ॥
शीता चक्षुश्च सिन्धुश्च तिस्रस्ता वै प्रतीच्यगाः ।
सप्तमी त्वन्वगाद्गङ्गा दक्षिणेन भगीरथम् ॥
इत्याह । अलकनन्दामुक्त्वा चक्षुमाह—
चक्षुश्च पश्चिमगिरीनतीत्य सकलांस्ततः ।
पश्चिमं केतुमालाख्यं वर्षं गत्वैति सार्णवम् ॥
भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून् ।
अतीत्योत्तरमम्भोधिं समभ्येति महामुने ॥
आनीलनिषधायामौ माल्यवद्गन्धमादनौ ।
तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः ॥
भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ।
पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः ॥
जठरो देवकूटश्च मर्यादापर्वतावुभौ ।
तौ दक्षिणोत्तरायामावानीलनिषधायतौ ।
गन्धमादनकैलासौ पूर्वपश्चायतावुभौ ॥
अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ ।
निषधः पारियात्रश्च मर्यादापर्वतावुभौ ॥
मेरोः पश्चिमदिग्भागे यथा पूर्वौ तथा स्थितौ ।
तौ दक्षिणोत्तरायामावानीलनिषधायतौ ॥
त्रिशृङ्गो जारुधिश्चैव उत्तरौ वर्षपर्वतौ ।
पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ ॥
इत्येते मुनिवर्य्योक्ता मर्य्यादापर्वतास्तव ।
जठराद्याः स्थिता मेरोर्येषां द्वौ द्वौ चतुर्दिशम् ॥
सप्त वर्षाणि मर्य्यादागिरिभिः सहोक्त्वा—
भद्राश्वं पूर्वतो मेरोः केतुमालं च पश्चिमे ।

इत्युक्तयोर्वर्षयोर्मर्य्यादापर्वतावाह आनीलेति। उत्तरो नीलः दक्षिणो निषधः तत्पर्यन्त आयामो ययोस्तौ। तत्र पश्चिमे माल्यवान् पूर्वस्मिन् गन्धमादनः। "तथैवेलावृतमपरेण पूर्वेण च माल्यवद्गन्धमादनावानीलनिषधायामौ" इति शुकोक्तेः।

पूर्वेण माल्यवान् शैलः तत्प्रमाणः प्रकीर्तितः।

इति वायुपुराणं कल्पभेदेन नेयम्। लोको जम्बूद्वीपं तदेव पद्मं तस्य पत्राणि। भारतकुरुवर्षयोर्भद्राश्वकेतुमालयोश्च परस्परं समानत्वादाभिमुख्येनावस्थानाच्च। पत्रसादृश्याच्च पत्राणीत्युक्तम्। मर्य्यादाशैला गन्धमादनहिमवन्माल्यवच्छृङ्गिणस्तेषां बाह्यतः स्थिताः। मेरोश्चतुर्दिक्षु द्वौ द्वौ परिधिपर्वतावाह जठर इत्यादिपञ्चभिः। इलावृतवर्ष एवावान्तरविभागहेतुत्वान्मर्य्यादापर्वता इत्युक्तम्। जठरदेवकूटौ दक्षिणोत्तरायतौ मेरोः पूर्वतः, गन्धमादनकैलासौ पूर्वपश्चिमायतौ दक्षिणतः, निषधपारियात्रौ दक्षिणोत्तरायतौ पश्चिमतः, त्रिशृङ्गजारुधी पूर्वपश्चिमायतावुत्तरत इति।

तथा,

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः॥
नवयोजनसाहस्रो विस्तारोऽस्य महामते।
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्॥
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः।
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः॥
अतः सम्प्राप्यते स्वर्गो मुक्तिमस्मात्प्रयान्ति च।
तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा मुने॥
इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते।

न खल्वन्यत्र मर्त्यानां कर्म भूमौ विधीयते ॥
भारतस्यास्य वर्षस्य नव भेदान्निशामय ।
इन्द्रद्वीपः कशेरूमांस्ताम्रवर्णो गभस्तिमान् ॥
नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः ।
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥
योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरात् ।
पूर्वे किराता यस्य स्युः पश्चिमे यवनाः स्मृताः ॥
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः ।
इज्यायुद्धवणिज्याद्यैर्वर्त्तयन्तो व्यवस्थिताः ॥
वेदस्मृतिमुख्याश्चान्याः पारियात्रोद्भवा मुने ।
नर्मदासुरसाद्याश्च नद्यो विन्ध्यविनिर्गताः ॥
तापीपयोष्णीकावेरीप्रमुखा ऋक्षसम्भवाः ।
गोदावरीभीमरथीकृष्णवेण्यादिकास्तथा ॥
सह्यपादोद्भवा नद्यः स्मृताः पापप्रणाशनाः ।
कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः ॥
त्रिसामाऋषिकुल्याद्या महेन्द्रप्रभवाः स्मृताः ।
ऋषिकुल्याकुमाराद्या शुक्तिमत्पादसम्भवाः ॥
शतद्रुचन्द्रभागाद्या हिमवत्पादनिःसृताः ।
आसां नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः ॥
तास्विमे कुरुपाञ्चालमध्यदेशादयो जनाः ।
पूर्वदेशादिकाश्चैव कामरूपनिवासिनः ॥

मध्यश्चेत्यादि । मध्यो भूर्लोकः, अन्तो नरकादिः । इन्द्रद्वीपाद्याः समुद्रमारभ्य हिमवदन्ता मध्ये मध्ये सगरसुतखातान्तरिताः सहस्रयोजनविस्तारा भारतवर्षान्तरद्वीपा नवैव सामान्यतो ज्ञेयाः ।

भारताख्यस्य वर्षस्य नव भेदान्निबोधत ।
सागरान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ॥

इतिवायुपुराणोक्तेः । अयं तु कुरुपाञ्चालाद्यवच्छिन्नो देशो भारताख्यस्तेषां नवम इति सम्बन्धः । तुशब्दादन्योऽपि सागरान्तरितः सहस्रयोजनात्मकश्चेत्यर्थः ।

ब्रह्मपुराणे,

तच्छृणुध्वं प्रवक्ष्यामि तीर्थान्यायतनानि च ।
सङ्क्षेपेण मुनिश्रेष्ठाः पृथिव्यां यानि कानि वै ॥
विस्तरेण न शक्येत वक्तुं वर्षशतैरपि ।
प्रथमं पुष्करं तीर्थं नैमिषारण्यमेव च ॥
पुण्यं च सगरारण्यं दण्डकारण्यमेव च ॥
गया प्रभासं श्रीतीर्थं दिव्यं कनखलं तथा ।
भृगुतुङ्गं हिरण्याक्षं भीमारण्यं कुशस्थलम् ॥
लोहार्गलं सकेदारं मन्दरारण्यमेव च ।
महावनं कोटितीर्थं सर्वपापहरं तथा ॥
रूपतीर्थं शूकरं च चक्रतीर्थं महाफलम् ।
योगतीर्थं सोमतीर्थं तीर्थं साखोटकं तथा ॥
तीर्थं कोकामुखं पुण्यं बदरीशैलमेव च ।
सोमतीर्थं तुङ्गकूटं तीर्थं स्कन्दाश्रमस्तथा ॥
कोटितीर्थं चाग्निसरस्तीर्थं पञ्चशिखं तथा ।
सूर्यप्रभं धनुःसरः सप्तसामुद्रकं तथा ॥
कर्णोद्भवं कोटितीर्थं तीर्थं चाघप्रणाशनम् ।
गङ्गाद्वारं पञ्चकुञ्जं मध्यकेशवमेव च ॥
चक्रप्रभं मतङ्गं च कुशकुण्डं च विश्रुतम् ।
दंष्ट्राकुण्डं विष्णुतीर्थं सार्वकामिकमेव च ॥

तीर्थं सत्सलिलं चैव बदरी सुप्रभं तथा ।
ब्रह्मकुण्डं वह्निकुण्डं तीर्थं सत्यपदं तथा ॥
चतुःस्रोतश्चतुःशृङ्गं शैलं द्वादशधारकम् ।
मानसं स्थूलशृङ्गं च स्थूलदण्डं तथोर्वशी ॥
लोकपालं मेरुधरं सोमाद्रिः शैलमेव च ।
सदाप्रभं मेरुकुण्डं तीर्थं सोमाभिषेचनम् ॥
महासोमं कोटरकं पञ्चधारं त्रिधारकम् ।
सप्तधारैकतीर्थं च तीर्थं चामरकण्टकम् ॥
शालग्रामं चक्रतीर्थं कोटिद्रुममनुत्तमम् ।
बिल्वप्रभं देवह्रदं तीर्थं विष्णुप्रभं तथा ॥
शङ्खप्रभं देवकुण्डं तीर्थं वज्रायुधं तथा ।
अग्निप्रभं सपुन्नागं देवप्रभमनुत्तमम् ॥
विद्याधरं सगान्धर्वं श्रीतीर्थं ब्राह्मणीह्रदम् ।
तीर्थं च लोकपालाख्यं मणिपूरगिरिस्तथा ॥
कन्याश्रमो वायुकुण्डं जम्बूमार्गं तथोत्तमम् ।
गभस्तितीर्थं तु तथा ययातिपतनं शुचि ॥
कोटितीर्थं भद्रवटं महाकालवनं तथा ।
नर्मदा परमं तीर्थं तीर्थवर्यं तथार्बुदम् ॥
पिङ्गुतीर्थं सवासिष्ठं तीर्थं च पिगसङ्गमम् ।
तीर्थं दौर्वासिकं नाम तथा पिञ्जरकं शुभम् ॥
ऋषितीर्थं ब्रह्मतुङ्गं वसुतीर्थं कुलाम्बिका ।
शक्रतीर्थं पञ्चनदं रेणुकातीर्थमेव च ॥
पितामहं च विमलं रुद्रपादं तथोत्तमम् ।
मणिमन्तं च कामाख्यं कृष्णतीर्थं कुमारिणम् ॥
यजनं याजनं चैव तथैव ब्रह्मवालकम् ।

पुष्पन्यासं पुण्डरीकं मणिपूरं तथोत्तरम् ॥
दीर्घसत्रं हंसपदं तीर्थं चानसनं तथा ।
गङ्गोद्भेदं शिवोद्भेदं नर्मदोद्भेदमेव च ॥
गणपारं महातीर्थं कुमारीकोटिरेव च ।
रुद्रकोटिः शङ्कमणिस्तीर्थं सत्रावनामितम् ।
स्यमन्तपञ्चकं तीर्थं पारिप्लवपृथूदकम् ॥
कोटितीर्थं पञ्चनदं वाराहं यक्षिणीह्रदम् ।
पुण्डरीकं सोमतीर्थं मुञ्जवाटं तथोत्तमम् ॥
बदरीवनमासीनं रत्नमूलकमेव च ।
लोकोद्धारं च श्रीतीर्थं कपिलातीर्थमेव च ॥
सूर्यतीर्थं शङ्खिनी च भवाभवनमेव च ।
तीर्थं च यक्षराजस्य ब्रह्मावर्त्तं सुतीर्थकम् ॥
कामेश्वरं मातृतीर्थं तीर्थं शीतवनं तथा ।
स्नानलोपायनं चैव मानसं गलकं तथा ॥
दशाश्वमेधं केदारं ब्रह्मोदुम्बरमेव च ।
सप्तर्षिकुण्डं च तथा तीर्थं देव्याः सुजम्बुकम् ॥
ईहास्पदं कोटिकूटं किन्दानं किंजपं तथा ।
कारण्डवं च विन्ध्यं च त्रिपिष्टपमथापरम् ॥
पाणिख्यातं मिश्रकं च मधूवटमनोजवौ ।
कौशिकी देवतीर्थं च तीर्थं च ऋणमोचनम् ॥
दिव्यं च तृणधूमाख्यं तीर्थं विष्णुपदं तथा ।
अमराणां ह्रदं पुण्यं कोटितीर्थं तथाऽपरम् ॥
श्रीकुञ्जं शालितीर्थं च नैमिषेयं च विश्रुतम् ।
ब्रह्मस्थानं सोमतीर्थं कन्यातीर्थं तथोत्तमम् ॥
ब्रह्मतीर्थं मनस्तीर्थं तीर्थं चैकाननं तथा ।

सौगन्धिकवनं चैव मणितीर्थं सरस्वती ॥
ईशानतीर्थप्रवरं पालनं पञ्चयज्ञियम् ।
त्रिशूलधारा माहेन्द्रं देवस्थानं कृतालयम् ॥
शाकम्भरी देवतीर्थं सुवर्णाख्यं कलिह्रदम् ।
क्षीरस्रवं विश्वपाख्यं भृगुतीर्थं कुलोद्भवम् ॥
ब्रह्मतीर्थं ब्रह्मयोनि नीलपर्वतमेव च ।
कुब्जाम्रकं भद्रवटं वसिष्ठपदमेव च ॥
धूमावर्तं तथा मेरुं वारुणं कापिलं च यत् ।
स्वर्गद्वारं प्रजाद्वारं कालिप्ताश्रम एव च ॥
रुद्रावर्तं सुगन्धाश्वं कपिलावनमेव च ।
भद्रकर्णह्रदं चैवं शङ्कुकर्णह्रदं तथा ॥
सप्तसारस्वतं चैव तीर्थमौशनसं तथा ।
कपालमोचनं चैवमवकीर्णं च काम्यकम् ॥
चतुःसामुद्रिकं चैव शतिकं च सहस्रिकम् ।
रेणुकं पञ्चवटकं विमोचनमथौजसम् ॥
विश्वेश्वरं वामनकं कूपं नारायणाश्रमम् ।
गङ्गाह्रदसरश्चैव बदरीपाचनं तथा ॥
इन्द्रमार्गमकरात्रं क्षीरिकाराममेव च ।
सोमतीर्थं दधीचं च श्रुततीर्थं च भो द्विजाः ॥
कन्याश्रमं सन्निहितं कोटितीर्थं च पुण्यदम् ।
कोटितीर्थस्थली चैव भद्रकालीह्रदं तथा ॥
अरुन्धतीवनं चैव ब्रह्मावर्त्तं तथोत्तमम् ।
अश्वदेवी कुब्जवनं यमुनाप्रभवं तथा ॥
वीरप्रमोक्षं सिन्धूत्थं शमीकुल्या सकृत्तिका ।
उर्वशीक्रमनं चैव मायाविद्योद्भवं तथा ।

महाश्रमो वेतसिकारूपं सुन्दारिकाश्रमम् ॥
ब्राह्मणीतीर्थवैश्रामं गङ्गोद्भेदं सरस्वती ।
अरुणास्पदं दामकं च शुक्रतीर्थं सवालुकम् ॥
तीर्थं वै वारिमुख्याख्यं नीलकण्ठह्रदस्तथा ।
स्वर्गद्वारं किंपुलिका कोटितीर्थं तथैव च ॥
पिशाचमोचनं चैव सुभद्राह्रद एव च ।
कुण्डं विशसनं तस्यां तीर्थं चण्डेश्वरस्य च ॥
ज्येष्ठस्थानह्रदं चैव हरिकेशवनं तथा ।
अजामुखसरश्चैव घण्टाकर्णह्रदं तथा ॥
पुण्डरीकह्रदं चैव वापी कर्कोटकस्य च ।
कुण्डं घर्घरिकायाश्च विनायकह्रदं तथा ॥
कूपं सिन्धुभवं चैव पुण्यं ब्रह्मसरस्तथा ।
रुद्रावासं तथा तीर्थं नारीतीर्थं सुलोमकम् ॥
ब्रह्मावर्त्तं कुशावर्त्तं दधिकर्णोपपादकम् ।
शृङ्गतीर्थं महातीर्थं तीर्थं श्रेष्ठं महानदी ॥
दिव्यं ब्रह्मसरः पुण्यं गयाशीर्षाक्षयं वटम् ।
दक्षिणं चोत्तरं चैव गोमयं रूपशान्तिदम् ॥
कपिलाह्रदं गृध्रवटं सावित्रीह्रदमेव च ।
प्रभापणं शीतवनं योनिद्वारं च धेनुकम् ॥
रम्यकं कोकिलाख्यं च मतङ्गह्रदमेव च ।
पितृकूपं सङ्गतीर्थं शक्रतीर्थं सुभालिनम् ॥
ब्रह्मस्थानं सप्तकुण्डं मणिरत्नह्रदं तथा ।
मुद्गलस्याश्रमश्चैव सुकन्याह्रदमेव च ॥
तीर्थं जनत्रहूपाख्यं पुण्यं विनशनं तथा ।
आज्यं विनाशतीर्थं च धारा माहेश्वरी तथा ॥

देवपुष्करिणी रम्या पर्य्यङ्कं कूपमेव च।
जातिस्मरं वामनकं वटेश्वरह्रदं तथा॥
कौशाग्र्यं भारतं चैव तीर्थं ज्येष्ठालिका तथा।
विश्वेश्वरं पुण्यशतं कन्यासंवेश्यमेव च॥
वाराहतीर्थं कोटितीर्थं कुमारं सर्वतीर्थकम्।
वीराश्रमो ब्रह्मसरो वीरवीरा च कापिली॥
कुमारधारा श्रीधारा गौरीशिखरमेव च।
कुम्भकर्णह्रदं चैव कौशिकीह्रदमेव च॥
धर्मतीर्थं कामतीर्थं तीर्थं मुद्गलिकं तथा।
दण्डाली मालिनीतीर्थं तीर्थं चैव लवेडिका॥
सन्ध्यातीर्थं कारतोयं कपिलं लोहितार्णवम्।
शोणोद्भवं वंशगुल्ममृषभं कालतीर्थकम्॥
पुण्यावतीह्रदं तीर्थं तीर्थं बदरिकाश्रमम्।
रामतीर्थं पितृवनं विरजातीर्थमेव च॥
मार्कण्डेयवनं चैव कृष्णतीर्थं तथावटम्।
रोहिणीकूपमवरामिन्द्रद्युम्नसरश्च यत्॥
सानुगर्भं समाहेन्द्रं श्रीतीर्थं श्रीनदं तथा।
इषुतीर्थं चार्षभं च कौवेरह्रदमेव च।
कन्यातीर्थं च गोतीर्थं गोमतीस्थानमेव च।
सम्वर्तवापिनीस्थानं सप्तगोदावरीह्रदम्॥
बदरीह्रदमन्यच्च ब्रह्मस्थूणं विकर्त्तनम्।
जातीह्रदं देवह्रदं कुशश्रवणमेव च॥

---

१ औद्दालकमिति मु० ब्र० पु० पाठः।
२ च वनचण्डिका इति मु० ब्र० पु० पाठः।
३ कुशप्रथनमिति मु० ब्र० पु० पाठः।

सर्वदेवह्रदं चैव कन्याश्रमह्रदं तथा ।
तथान्यं बालखिल्यानां सप्तर्षीणां तथाऽपरम् ॥
तथान्यच्च महर्षीणामखण्डितह्रदं तथा ।
तीर्थेष्वेतेषु विधिवत् सम्यक् श्रद्धासमन्वितः ॥
स्नानं करोति यो मर्त्यः सोपवासो जितेन्द्रियः ।
देवान् ऋषीन् मनुष्यांश्च पितॄंश्चान्यांश्च तर्पयेत् ॥
अभ्यर्च्य देवतास्तत्र स्थित्वा च रजनीत्रयम् ।
पृथक्पृथक्फलं तेषु प्रतितिष्ठंश्च भो द्विजाः ॥
प्राप्नोति हयमेधस्य नरो नास्त्यत्र संशयः ।
यस्त्विदं शृणुयान्नित्यं तीर्थमाहात्म्यमुत्तमम् ॥
पठेच्च शृणुयाच्चैव सर्वपापैः प्रमुच्यते ।

देवलः,

कृत्वा पापमविज्ञातं भ्रूणहत्यादि तत् पुनः ।
विनश्यति महायज्ञैरथवा तीर्थचर्य्यया ॥

अथ सरस्वती गङ्गा यमुना नर्मदा विपाशा वितस्ता कौशिकी नन्दावरी चन्द्रभागा शरयूः उत्पलावती सिन्धुः अर्जुनी पर्णाशा शोणस्तापी पारावती पाषाणतीर्था गोमती गण्डकी बाहुदा रम्या देविका गोदावरी कावेरी ताम्रपर्णी चर्मण्वती वेत्रवती चक्षुर्वरणी चेति महानद्यः पुण्यतमाः । गङ्गाद्वारं कनखलं शौकरं प्रयागो गङ्गासागर इति गङ्गायास्तीर्थानि । प्लक्षप्रस्रवणं वृद्धकन्याकं सारस्वतमादित्यतीर्थं कौबेरं वैजयन्तं पृथूदकं नैमिषं विनशनं वंशोद्भेदं प्रभासमिति सारस्वतानि । पुष्करमुर्वशी गया गयाशिरः कुरुक्षेत्रं प्रयाग इति क्षेत्राणि । वाराणसी महाभैरवं देवदारुवनं केदारं मध्यमं रुद्रमहालयं त्रस्तावतारं छगलं विष्णुशिवं महाकालं कालञ्जरं जम्बूमार्गं चैत्यायतनानि । हिम-

वान् सह्यो विदूरो महेन्द्रो हरिश्चन्द्रः शतशृङ्गो देवपर्वतो विन्ध्यपर्वतश्चेति पर्वतानां नामानि। एवमेतान्यन्यान्यपि क्षेत्रायतनपर्वताश्रमतीर्थानि पुण्यतमानि तदर्थमभिगम्य व्रतोपवासनियमयुक्तस्त्र्यहमवगाहमानस्त्रिरात्रमुषित्वा सर्वपापैः प्रमुच्यते स्वस्तिमांश्च भवतीति। तत्र श्लोकौ—

अभिसङ्क्रम्य तीर्थानि पुण्यान्यायतनानि च।
ततः प्रमुच्यते पापाद्ब्राह्मणांश्च तपस्विनः॥
सर्वाः समुद्रगाः पुण्याः सर्वे पुण्या नगोत्तमाः।
सर्वमायतनं पुण्यं सर्वे पुण्या वनाश्रमाः॥

-नरसिंहपुराणे,

मन्दरस्थं हरिं देवं ब्रह्मा पृच्छति केशवम्।
भगवन् देवदेवेश शङ्खचक्रगदाधर॥
केषु केषु च क्षेत्रेषु द्रष्टव्योऽसि मया प्रभो।
भक्तैश्चान्यैः सुरश्रेष्ठ मुक्तिकामैर्विशेषतः॥
यानि ते गुह्यनामानि क्षेत्राणि च जगत्पते।
तान्यहं श्रोतुमिच्छामि त्वत्तः पद्मायतेक्षण॥
किं जपंस्तु गतिं याति नरो नित्यमतन्द्रितः।
त्वद्भक्तानां हितार्थाय तन्मे वद सुरेश्वर॥

भगवानुवाच।

शृणुष्वावहितो ब्रह्मन् गुह्यनामानि मेऽधुना।
क्षेत्राणि चैव गुह्यानि तव वक्ष्यामि तत्त्वतः॥
कोकामुखे च वाराहं मन्दारे मधुसूदनम्।
अनन्तं कपिलद्वीपे प्रभासे दैत्यसूदनम्॥
मात्स्योदपाने वैकुण्ठं महेन्द्रे तु नृपान्तकम्।
ऋषभे तु महाविष्णुं द्वारकायां तु भूपतिम्॥

पाण्डिसह्ये तु देवेशं वत्सकुण्डे जगत्पतिम् ।
भल्लीवने महायोगं चित्रकूटे नराधिपम् ॥
नैमिषे पीतवासं च गवां निष्क्रमणे हरिम् ॥
शालग्रामे तपोवासमचिन्त्यं गन्धमादने ।
कुब्जाम्रके हृषीकेशं गङ्गाद्वारे पयोधरम् ॥
गरुडध्वजं वसुकोणे गोविन्दं नागसाह्वये ।
वृन्दावने तु गोपालं मथुरायां स्वयम्भुवम् ॥
केदारे माधवं विद्यात् वाराणस्यां तु केशवम् ।
पुष्करे पुष्कराक्षं तु धृष्टद्युम्नं जयध्वजे ॥
तृणबिन्दुवने वीरमशोकं सिन्धुसागरे ।
कुशीवटे महाबाहुममृतं तैजसे वने ॥
विशाखयूपे विश्वेशं नारसिंहं महावने ।
लौहार्गले रिपुहरं देवशाले त्रिविक्रमम् ॥
पुरुषोत्तमं कुशवने कुब्जके वामनं विदुः ।
विद्याधरं वितस्तायां वाराहे धरणीधरम् ॥
देवदारुवने गुह्यं कावेर्यां नागशायिनम् ।
प्रयागे योगमूर्त्तिं च पयोष्ण्यां सुन्दरं विदुः ॥
कुमारतीर्थे कौमारं लौहित्यां हयशीर्षकम् ।
उज्जायिन्यां विक्रमं विद्यात् लिङ्गस्फोटे चतुर्भुजम् ।
हरिहरं तुङ्गभद्रायां दृष्ट्वा पापात् प्रमुच्यते ॥
विश्वरूपं कुरुक्षेत्र अग्निकुण्डे हलायुधम् ।
लोकतारमयोध्यायां कुण्डले रुक्मिणीपतिम् ॥
भाण्डीरे वासुदेवं च चक्रतीर्थे सुदर्शनम् ।
आद्यं विष्णुपदे विद्यात् शूकरे शूकरं विदुः ॥
ब्रह्मेशं मानसे तीर्थे दण्डके शोमलं विदुः ।

यशस्करं विपाशायां माहिष्मत्यां कुलाशनम् ॥
क्षीराब्धौ पद्मनाभं च विमले तु सनातनम् ।
शिवनद्यां शिवकरं गयायां च जनार्दनम् ॥
सर्वत्र परमात्मानं यः पश्यति स मुच्यते ।
अष्टषष्टिस्तु नामानि कीर्तितानि मया तव ॥
क्षेत्राणि चैव पुण्यानि कथितानि विशेषतः ।
एतानि मम नामानि रहस्यानि प्रजापते ॥
यः पठेत्प्रातरुत्थाय शृणुयाद्वापि नित्यशः ।
गवां शतसहस्रस्य दत्तस्य फलमश्नुते ॥
दिने दिने शुचिर्भूत्वा क्षेत्राण्येतानि यः स्मरेत् ।
दुःस्वप्नं न भवेत्तस्य मत्प्रसादान्न संशयः ॥
अष्टषष्टिस्तु नामानि त्रिकालं यः पठेन्नरः ।
विमुक्तः सर्वपापेभ्यो मम लोके स मोदते ॥
द्रष्टव्यानि यथाशक्त्या क्षेत्राण्येतानि मानवैः ।
वैष्णवैस्तु विशेषेण तेषां मुक्तिं ददाम्यहम् ॥
हरिं समभ्यर्च्य तदग्रतः स्थितो हरिं स्मरन् विष्णुदिने विशेषतः ।
इमं स्तवं यः पठते सदा नरः प्राप्नोति विष्णोरमृतात्मकं पदम् ॥

तथा,

उपविश्य स्तववरं ब्रह्मणे भगवान् हरिः ।
पुनरप्याह तीर्थानि यानि तानि निबोध मे ॥
गङ्गा तु प्रथमा पुण्या यमुना गोमती पुनः ।
सरयूः सरस्वती चैव चन्द्रभागाथ चर्म्मिला ॥
कुरुक्षेत्रं गया चैव पुष्कराणि तथा पुनः ।
नर्मदा च महापुण्या तीर्थान्येतानि चोत्तरे ॥
तापी पयोष्णी पुण्ये द्वे तत्सङ्गं तीर्थमुत्तमम् ।

गोदावरी महापुण्या सर्वत्र द्विजसत्तम ॥
तुङ्गभद्रा महापुण्या यत्राहं कमलोद्भव ।
देवदेवेशनाम्ना तु त्वया ब्रह्मन् सदाऽर्चितः ॥
तत्र तीर्थान्यनेकानि सर्वपापहराणि वै ।
येषु स्नात्वा च पीत्वा च पापं मुञ्चति मानवः ॥
इत्येवं कथयित्वा तु तीर्थानि मधुसूदनः ।
ब्रह्मणे गतवान् ब्रह्मन् ब्रह्मापि स्वपुरं गतः ॥

देवीपुराणे,

अरण्यानि प्रवक्ष्यामि तथा चैवोपराणि च ।
सैन्धवं दण्डकारण्यं नैमिषं कुरुजाङ्गलम् ॥
उत्पलावर्त्तकारण्यं जम्बूमार्गं च पुष्करम् ।
हिमवान् सह्यकोऽरण्यमित्येतत्परिकीर्त्तितम् ॥
नवस्वेतेष्वरण्येषु यस्तु प्राणान् परित्यजेत् ।
ब्रह्मलोकेऽतिथिर्भूत्वा स याति परमं पदम् ॥
कालिकाशिखराख्ये च कालिकालालयेऽपि वा ।
कालञ्जरे महाकाले तुल्यं चैतेषु यत्फलम् ॥

कालिकाशिखर इत्यादिना देवीपुराणे
एतान्येवोपराण्युक्तानि । अन्यत्रान्यान्यपि ।

तथा,

रेणुका शूकरः काशी काली कालवटेश्वरौ ।
कालञ्जरो महाकाल ऊषरा नव कीर्त्तिताः ॥

कालीशब्देन कालिकालयकालिकाशिखरावुच्येते । यथा शास्त्रेऽदृष्टशब्देन धर्माधर्मौ । ग्रामास्तु त्रयः ।

शालग्रामशिलायोगः शम्भलं हरिमन्दिरम् ।
नन्दिग्रामस्त्रयो ग्रामा मोक्षदाः परिकीर्त्तिताः ॥

गुह्यानि चतुर्दश।

कोकः कुब्जाम्रकश्चैव मणिकुण्डवटस्तथा।
शालग्रामश्च शुक्लाख्यो मथुरा च मम प्रिया॥
वृन्दावनं गोकुलं च तथा लोहार्गलं स्मृतम्।
गोदावरी सिन्धुक्षेत्रं कनखलं बदरिकाश्रमम्॥
द्वारका चेति गुह्यानि कथितानि चतुर्दश॥ इति।

काशीखण्डे,

काशी काञ्ची च मायाख्या त्वयोध्या द्वारवत्यपि।
मथुराऽवन्तिका चैताः सप्त पुर्योऽत्र मोक्षदाः॥

—अयोध्यादिसप्तपुरीषु शालग्रामशम्भलग्रामनन्दिग्रामेषु त्रिपु सैन्धवारण्यादिषु नवसु अरण्येषु रेणुकाशूकरक्षेत्रकाशीवटेश्वरकालिकाशिखरकालिकालयकालञ्जरमहाकालेषु नवोपरेषु स्नानदानादि महाफलम्। पठन्ति च—

सप्त पुर्यस्त्रयो ग्रामा नवारण्यं नवोपराः।
चतुर्दशैव गुह्यानि मोक्षद्वाराणि भूतले॥ इति।

ब्रह्मपुराणे,

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः।
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः॥
तेषां सहस्रशश्चान्ये भूधरा ये समीपगाः।
कोलाहलः सवैभ्राजो मन्दरो दर्दुराचलः॥
वातन्धमो दैवतश्च मैनाकः स्वरसस्तथा।
तुङ्गप्रस्थो नागगिरिर्गोधनः पाण्डवाचलः॥
पुष्पगिरिर्वैजयन्तो रैवतोऽर्बुद एव च।
ऋष्यमूकः सगोमन्थः कूटशैलः कृताचलः॥
श्रीपर्वतश्चकोरश्च शतशोऽन्ये च पर्वताः।

तैर्विमिश्रा जनपदा म्लेच्छाद्याश्चैव भागशः ॥
तैः पीयन्ते सरिच्छ्रेष्ठास्ता बुद्ध्यध्वं द्विजोत्तमाः ।
गङ्गा सरस्वती सिन्धुश्चन्द्रभागा तथाऽपरा ॥
यमुना शतद्रूर्विपाशा वितस्तैरावती कुहूः ।
गोमती धूतपापा च बाहुदा च दृषद्वती ॥
विपाशा देविका चक्षुर्निष्ठीवा गण्डकी तथा ।
कौशिकी चापरा चैव हिमवत्पादनिःसृताः ॥
वेदस्मृतिर्वेतसिनी[1] वृत्रघ्नी सिन्धुरेव च ।
वेणा सानन्दिनी चैव सदानीरा मही तथा ॥
पारा[2] चर्मण्वती लूपी विदिशा वेत्रवत्यपि ।
सिप्रा द्रवन्ती च तथा पारियात्राश्रयाः स्मृताः ॥
शोणा महानदी चैव नर्मदा सुरसा क्रिया ।
मन्दाकिनी दशार्णा च चित्रकूटा तथाऽऽपगा ॥
चित्रोत्पला वेत्रवती करमोदा पिशाचिका ।
तथान्यापि लघुश्रोणी विपाशा चैरणा[3] नदी ॥
सुमेरुजा शुक्तिमती शकुनी त्रिदिवा क्रतुः ।
ऋक्षपादसृता[4] चैव शिनीवाली कुमुद्वती ॥
तोया चैव महागौरी दुर्गा चान्तःशिला तथा ।
विन्ध्यपादप्रसूतास्ता नद्यः पुण्यजलास्तथा ॥
गोदावरी भीमरथी कृष्णवेणा तथाऽपरा ।

---

१ देवस्मृतिर्देववती वातघ्नी सिन्धुरेव च । इति मुद्रितब्रह्मपुराणे पाठः ।

२ चर्मण्वती वृषी चैव इति मु० ब्र० पु० पाठः ।

३ शैवला इत्यपि पाठः ।

४ ऋक्षपादप्रसूता वै तथाऽन्या वेगवाहिनी । इत्यपि पाठः ।

तुङ्गभद्रा सुप्रयोगा तथान्या पापनाशिनी ॥
सह्यपादविनिष्क्रान्ता इत्येताः सरितां वराः।
कृतमाला ताम्रपर्णी पुष्पजम्बूत्पलावती ॥
मलयाद्रिसमुद्भूताः पुण्याः शीतजलास्त्विमाः।
पितृसोमर्षिकुल्या च इक्षुरा त्रिदिवालया ॥
लाङ्गलिनी वंशकरा महेन्द्रप्रभवाः स्मृताः।
ऋषिकाला कुमारी च मन्दगा मन्दवाहिनी ॥
क्षया पलाशिनी चैव शुक्तिमत्प्रभवाः स्मृताः।
सर्वाः पुण्याः सरस्वत्यः सर्वा गङ्गाः समुद्रगाः।
विश्वस्य मातरः सर्वाः सर्वपापहराः स्मृताः ॥
अन्याः सहस्रशः सन्ति क्षुद्रनद्यो द्विजोत्तमाः।
प्रावृट्कालवहा याश्च सदाकालवहाश्च याः ॥ इति।
हेमाद्रौ,
गङ्गा च नर्मदा चैव सिन्धुश्चाथ सरस्वती।
एवमादिनदीरूपैः प्राणिनां मुक्तिसिद्धये ॥
ब्राह्मी शक्तिः पुरा प्रोक्ता प्रत्यक्षं सैव वर्त्तते।
नद्यादिलक्षणमाह—
एकायनः,
कुल्याः षड्योजनं यान्ति द्वादश क्षुद्रसंज्ञिताः।
प्रवहन्ति नदीसंज्ञाश्चतुर्विंशतियोजनम् ॥
प्रवहन्त्यस्ततोऽप्यूर्द्ध्वं महानद्यः प्रकीर्त्तिताः।
छन्दोगपरिशिष्टे,
धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते।
न ता नदीशब्दवहा गर्तास्ते परिकीर्त्तिताः ॥

१ वञ्जुला त्रिदिवा च या इत्यपि पाठः।

धनुःप्रमाणमाह—

**विष्णुधर्मोत्तरे प्रथमकाण्डम्,**

द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयं तु शयः स्मृतः ।
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रिकः ॥

शयो हस्तः ।

**हेमाद्रौ कालिकापुराणे,**

शोणो नैरञ्जनो घोणो घर्घरोऽथ मरीचकः ।
मणिपुष्पो महावर्त्तो नदास्त्वेते महेश्वरात् ॥

**नारदीये,**

लौहित्यो मणिमांश्चैव स्वर्णविन्दुरकल्ककः ।
ऐरावतश्च पञ्चैत नदाः परमपावनाः ॥

**देवलः,**

शोणसिन्धुहिरण्याक्षकोकलोहितघर्घराः ।
शतद्रूश्च नदाः सप्त पावना ब्रह्मणः सुताः ॥

**हेमाद्रौ स्कन्दपुराणे,**

सरसां मानसं श्रेष्ठं मन्दमच्छोदसंज्ञितम् ।
लोहितं वशिलोदं च तथा बिन्दुसरः शुभम् ॥
ऐन्द्रद्युम्नं विष्णुपदं तथा चोत्तरमानसम् ।
मधुमन्तं पयोदं च सरः पुण्यतमं स्मृतम् ॥

ऐन्द्रद्युम्नम्, इन्द्रद्युम्नसरः पुरुषोत्तमक्षेत्रे प्रसिद्धम् ।

**विष्णुपुराणे,**

आकाशगङ्गासलिलं तथाऽऽदाय गभस्तिमान् ।
अनभ्रं गतमेवोर्व्यां सद्यः क्षिपति रश्मिभिः ॥
तस्य संस्पर्शनिर्धूतपापपङ्को द्विजोत्तमः ।
न याति नरकं मर्त्यो दिव्यं स्नानं हि तत् स्मृतम् ॥

दृष्टसूर्य्यं हि यद्वारि पतत्यभ्रैर्विना दिवः।
आकाशगङ्गासलिलं तद्गोभिः क्षिप्यते रवेः॥
कृत्तिकादिषु ऋक्षेषु विषमेष्वम्बु यद्दिवः।
दृष्टार्कं पतति ज्ञेयं तद्गाङ्गं दिग्गजेक्षितम्॥
युग्मर्क्षेषु च यत्तोयं पतत्यर्केक्षितं दिवः।
तत् सूर्यरश्मिभिः सद्यः समादाय निरस्यते॥
उभयं पुण्यमत्यर्थं नृणां पापहरं द्विज।
आकाशगङ्गासलिलं दिव्यं स्नानं महामुने॥
यत्तु मेघैः समुत्सृष्टं वारि तत् प्राणिनां द्विज।
पुष्णात्योषधयः सर्वा जीवनायामृतं हि तत्॥
तेन वृद्धिं परां नीतः सकलेनोषधीगणः। इति।

**माहेश्वरोत्तरे,**

तत्र नद्यः प्रतिष्ठाप्या गङ्गाद्याः सर्वतः शुभाः।
स्त्रीरूपा द्विभुजाश्चैव तथा कलशपाणिकाः॥
दिव्याम्बरधरा दिव्या दिव्यमाल्यानुलेपनाः।
वर्जयित्वा वितस्तां तु कुमारी सा हि नित्यदा॥
अन्याश्च यमुनाद्या वै स्मर्त्तव्या नित्यमेव हि।
योषिद्रूपा महाभागा वाहनं स्वं स्वमास्थिताः॥

**हेमाद्रौ भविष्यपुराणे,**

चण्डेश्वरः पुरा प्रोक्तः सिता गङ्गा सुयौवना।
यमुना श्यामलाङ्गी स्यान्मही पीताथ नर्मदा॥
नीला मणिनिभा सिन्धुर्भारती स्फटिकप्रभा।
तापी हेमनिभा नीला पयोष्णी सर्वभूषणा॥
पद्मस्था मकरस्था वा कुन्तचामरपाणयः।
भारती सरस्वती।

मयसङ्ग्रहे,

तथा शिवनौ स्रवन्त्यश्च जले जलजसंस्थिताः ।
तरुण्यो भूषिताः पूर्णकलशाम्बुजपाणयः ॥
गङ्गा मकरगा देवी कालिन्दी कूर्मसंस्थिता ।

विष्णुधर्मोत्तरे,

सरितश्च यथा यानैः सर्वा लोकस्य मातरः ।
मकरेण ययौ गङ्गा कालिन्दी कच्छपेन च ॥
सारसेनापि सरयूः शिशुमारेण गोमती ।
गोदावरी वराङ्गेण मयूरेण सरस्वती ॥
ककुद्मिना शतद्रूश्च विपाशा तुरगेण च ।
चन्द्रभागा च सिंहेन दन्तिनैरावती तथा ॥
सिन्धुर्व्याघ्रेण मत्स्येन वितस्ता च तथा ययौ ।
देविका चैवं हंसेन पुरुषेण तु गण्डकी ॥
महिषेण पयोष्णी च कावेरी वृषभेण च ।
हिरण्वती सुपर्णेन वकेनेक्षुमती नदी ॥
भुजगेन च पर्णाशा वराङ्गेण च कौशिकी ।
वेदस्मृतिर्मयूरेण सारङ्गेण च नर्मदा ॥
जीवञ्जीवकमारूढा सीता च प्रययौ नदी ।
ह्रादिनीं च समारूढा ह्रादिनी नृपमेव च ॥
पावनी शशकेनापि लोहिनी गर्दभेन च ।
गौधेरगतया चक्षुः शीता चाजेन राघव ॥
गौतमी कुक्कुटेनापि मेषेण च दृषद्वती ।
स्वैः स्वैर्यानैः समारूढाः प्रययुर्निम्नगा हरिम् ॥

वराङ्गो मातङ्गः ।

अथ ग्रहणादौ तीर्थविशेषाणां पुण्यतमत्वमभिधीयते।

देवीपुराणे,

गङ्गाद्वारं कुरुक्षेत्रं नर्मदाऽमरकण्टकम्।
यमुनासङ्गमं पुण्यं विदिशा वेत्रवत्यपि॥
सरयूः कौशिकी विन्ध्यः गण्डकी च सरस्वती।
चन्द्रभागा नदी पुण्या नदी गोदावरी तथा॥
कावेरी-गोमती देवी देविका वरणा तथा।
एताः पुण्यतमा नद्यो ग्रहणादिषु कीर्त्तिताः॥
अन्याश्च बह्व्यः पुण्याः स्युः सर्वकालेषु पुण्यदाः।
अयने विषुवे ख्याता व्यतीपाते तथैव च॥
दिनच्छिद्रे तथा दर्शे ब्राह्मणानां च सङ्गमे।
सम्मोदेषु समाजेषु एकार्थे सप्तपञ्च च॥

दिनच्छिद्रे, तिथिक्षये। सम्मोदेषु, उत्सवेषु। समाजेषु, सभासु। एकार्थे, एकस्मिन् प्रयोजने। सप्तपञ्च च यदा तीरे विप्रा मिलिता भवन्ति तदा पूर्वोक्ता नद्यः पुण्यतमाः। तर्पणं च तत्र सर्वकामप्रदमिति कल्पतरुः।

एवं पर्वसु सर्वेषु चन्द्रे सर्वकलासु च॥
तृतीयायां तु वैशाख्यामष्टम्यां कुजवासरे।
चतुर्दश्यां च कृष्णायां भौमाह्ने पितृतर्पणम्॥
कर्त्तव्यं सर्वकामानां-पूरणाय द्विजोत्तमैः।
अमावास्यां च सङ्क्रान्तौ शिवादित्यौ च यो नरः॥
यजते भक्तिमान् पूतः स पूतो भवते मुने।
कार्त्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसङ्गमे॥
मार्गे तु ग्रहणं पुण्यं देविकायां महामुने।
पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा॥

फाल्गुने वरणा ख्याता चैत्रे पुण्या सरस्वती ।
वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ॥
ज्येष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी ।
श्रावणे सिन्धुनामा च भाद्रमासे च गण्डकी ॥
आश्विने सरयूश्चैव भूयः पुण्या तु नर्मदा ।
गोदावरी महापुण्या चन्द्रे राहुसमन्विते ॥
सूर्य्ये चैव शशिग्रस्ते तमोभूते महामुने ।
नर्मदातोयसंस्पर्शात् कृतकृत्या भवन्ति ते ॥
ये सूर्ये सैंहिकेयेन ग्रस्ते रेवांजलं नराः ।
स्पृशन्ति चावगाहन्ते न ते प्रकृतिमानवाः ॥
स्पृष्ट्वा शतक्रतुफलं दृष्ट्वा गोदानजं फलम् ।
स्नात्वाऽश्वमेधतुल्यं च पीत्वा सौत्रामणिं लभेत् ॥
रविचन्द्रोपरागे तु अयने चोत्तरे तथा ।
एवं गङ्गापि द्रष्टव्या तद्वदेव सरस्वती ॥

तथा,

शिवादित्यफलं यच्च मण्डले समुदाहृतम् ।
सग्राहमण्डले यागे तदत्र प्राप्नुयान्नरः ॥

शिवादित्ययोर्मण्डले क्षेत्रे तयोर्यत्फलं तत् राहुग्रस्ते शशिसूर्य्यमण्डले यागे पूजायां प्राप्नोतीत्यर्थः ।

अरण्ये तूपरे क्षेत्रे पुण्यं यत्समुदाहृतम् ।
तदेतत्कालमाहात्म्यादुपरागेऽधिकं भवेत् ॥
ये च आहृत्य तोयेन स्नानं कुर्युर्गृहेऽपि वा ।
समन्त्रेणैव पूतेन तेषां पुण्यं ततोऽधिकम् ॥
आत्मवित्तानुसारेण पात्रे तैजसपार्थिवे ।
इष्टकाशैलकाष्ठैर्वा फलं प्राप्नोत्यनिन्दितम् ॥

ये चैव मृत्तिकां तस्मात्तीर्थादाहृत्य भोमुने ।
प्रातः प्रातः समुत्थाय वन्दयन्ति नरोत्तमाः ॥
ते सर्वपापनिर्मुक्ता भवन्ति विगतामयाः ।
फलपुष्पोपहारेण यो वा तस्मिन् हरीश्वरौ ॥
स्नात्वा सम्पूजयेद्विप्रः स भवेद्विगतामयः ।
मन्त्रपूतेन तोयेन कुम्भैः पुण्यजलान्वितैः ॥
सफलैर्विधिना स्नात्वा सर्वकामांल्लभेत्तु सः ।
तदेतत्कथितं पुण्यं मया पुण्यमुखाच्छ्रुतम् ॥
तत्समग्रं भवेत्तस्य अरण्येपूषरेषु च । इति ।
शिवपुराणे,

व्यास उवाच ।

अष्टषष्टिस्तु ये प्रोक्ता शिवस्य परमात्मनः ।
तानहं श्रोतुमिच्छामि तत्त्वेन कथयस्व मे ॥

सनत्कुमार उवाच ।

मन्दरस्थं सुखासीनं ब्रह्मा पृच्छति शङ्करम् ।
केषु केषु च स्थानेषु द्रष्टव्योऽसि मया प्रभो ॥

महेश्वर उवाच ।

वाराणस्यां महादेवं प्रयागे तु महेश्वरम् ।
नैमिषे देवदेवं तु गयायां प्रपितामहम् ॥
कुरुक्षेत्रे विदुः स्थाणुं प्रभासे शशिभूषणम् ।
पुष्करे तु अयोगन्धिं विश्वं च विमलेश्वरे ॥
विश्वं विश्वेश्वरे तथा इति क्वचित्पाठः ।
अट्टहासे महानादं महेन्द्रे तु महाव्रतम् ।
उज्जयिन्यां महाकालमाकोटे च महोत्कटम् ॥
मरुकोटे इति क्वचित्पाठः ।

शङ्कुकर्णे महातेजं गोकर्णे तु महानलम् ।
रुद्रकोट्यां महायोगं महालिङ्गं स्थलेश्वरे ॥
हर्षं हर्षपथे चैव सर्वं मध्यमकेश्वरे ।
केदारे देवमीशानं रुद्रं रुद्रमहालये ॥
सुवर्णाख्ये सहस्राक्षं वृषे च वृषभध्वजम् ।
भैरवे भैरवाकारं भवं वस्त्रापथे विदुः ॥
उग्रं कनखले चैव भद्रकर्णह्रदे शिवम् ।
देवदारुवने दण्डिं चण्डीशं कुरुजाङ्गले ॥
ऊर्ध्वरेतं दुरण्डे तु छागलाण्डे कपर्दिनम् ।
कृत्तिवासे तु वरदं सूक्ष्ममाम्रातिकेश्वरे ॥
कालञ्जरे नीलकण्ठं श्रीकण्ठं मण्डलेश्वरे ।
ध्यानयोगेश्वरे योगं गायत्र्यां चोत्तरेश्वरम् ॥
मम लिङ्गे विदुः कालं कपालीं करवीरके ।
कामावरोहणे नन्दिं देविकायामुमापतिम् ॥
हरिश्चन्द्रे हरिश्चैव पुरिश्चन्द्रे तु शङ्करम् ।
जटिं वाणेश्वरे विद्यात् सौम्यं कुक्कुटकेषु च ॥
त्र्यम्बकं चापि सन्ध्यायां विरजायां त्रिलोचनम् ।
जल्पीश्वरे त्रिशूलीं तु श्रीशैले त्रिपुरान्तकम् ॥
नेपाले वै पशुपतिं दीप्तमङ्गेश्वरे विदुः ।
गङ्गासागरे ह्यमरमोङ्कारममरकण्टके ॥
सप्तगोदावरे भीमं पाताले हाटकेश्वरम् ।
कर्णिकारे गणाध्यक्षं कैलाशे तु गणाधिपम् ॥
हेमकूटे विरूपाक्षं भूर्भुवं गन्धमादने ।
सिद्धेश्वरं तु आकाशे जाजलिङ्गे जलप्रियम् ॥
भूतेश्वरे भस्मगात्रं कैरातं च किरातके ।

भिक्षुकं कुविकायां तु वाराहं विन्ध्यपर्वते ॥
गङ्गाह्रदे हिमस्थाने अनलं वडवामुखे ।
श्रेष्ठं कोटीश्वरीतीर्थे वरेष्ठं त्रिष्टकापथे ॥
श्रीकुसुमपुरे महासं लङ्कायामलकेश्वरम् ।
अष्टषष्टिस्तु नामानि देवदेवस्य चाश्रमान् ॥
पुराणे चोपगीतानि ब्रह्मणा च महात्मना ।
यः शुचिः प्रयतो भूत्वा उभे सन्ध्ये पठेन्नरः ॥
दशानामश्वमेधानां फलं प्राप्नोति मानवः ।
मत्स्यपुराणे देव्या गुह्यतीर्थानि गुह्यनामानि चोक्तानि ।
यथा,

ऋषय ऊचुः ।

कस्माद्दाक्षायणी पूर्वं ददाहात्मानमात्मना ।
हिमवद्दुहिता तद्वत् कथं जाता महीतले ॥
संहरन्ती किमुक्ता वा स्तुता वा ब्रह्मसूनुना ।
दक्षेण लोकजननी सूत विस्तरतो वद ॥

सूत उवाच ।

दक्षस्य यज्ञे वितते प्रभूतवरदक्षिणे ।
समाहूतेषु देवेषु प्रोवाच पितरं सती ॥
किमर्थं तात भर्त्ता मे यज्ञेऽस्मिन्न निमन्त्रितः ।
अयोग्य इति तां प्राह दक्षो यज्ञेषु शूलभृत् ॥
उपसंहारकृद्रुद्रस्तेनामङ्गलभागयम् ।
प्रकोपाच्च सती तस्मिंस्त्यक्ष्ये देहं त्वदुद्भवम् ॥
वंशानां त्वं च भविता पितॄणामेकपुत्रकः ।
क्षत्रियात्वे ऽश्वमेधश्च रुद्राद्वै नाशमेष्यति ॥
इत्युक्त्वा योगमास्थाय स्वदेहोद्भवतेजसा ।

निर्दहन्ती तदात्मानं सदेवासुरकिन्नरैः ॥
किमेतदिति प्रोक्ता सा गन्धर्वगणगुह्यकैः ।
उपगम्याब्रवीद्दक्षः प्रणिपत्याथ दुःखितः ॥
त्वमस्य जगतो माता जनसौभाग्यदेवता ।
दुहितृत्वं गता देवि ममानुग्रहकाम्यया ॥
न त्वया रहितं किञ्चिद्ब्रह्माण्डेऽस्ति चराचरम् ।
प्रसादं कुरु धर्म्मज्ञे न मां त्यक्तुमिहार्हसि ॥
प्राह देवी यदारब्धं तत्कार्य्यं मे न संशयः ।
किन्त्ववश्यं त्वया मर्त्ये हतयज्ञेन शूलिना ॥
प्रसादलोकतृप्त्यर्थं तपः कार्य्यं ममान्तिके ।
प्रजापतिस्त्वं भविता दशानामङ्गजोऽप्यलम् ॥
मदंशेनाङ्गनाः षष्टिर्भविष्यन्त्यङ्गजास्तव ।
मत्सन्निधौ तपः कुर्वन् प्राप्स्यसे योगमुत्तमम् ॥
एवमुक्तोऽब्रवीद्दक्षः केषु केषु मयाऽनघे ।
तीर्थेषु चासि द्रष्टव्या स्तोतव्या कैश्च नामभिः ॥

देव्युवाच ।

सर्वगा सर्वभूतेषु द्रष्टव्या सर्वतो भुवि ।
सर्वलोकेषु यत्किञ्चिद्रहितं न मया विना ॥
तथापि येषु स्थानेषु द्रष्टव्या सिद्धिमीप्सुभिः ।
स्मर्त्तव्या भूतिकामेन तानि वक्ष्यामि तत्त्वतः ॥
वाराणस्यां विशालाक्षी नैमिषे लिङ्गधारिणी ।
प्रयागे ललितादेवी कामुकी गन्धमादने ॥
मानसे कुमुदानाम विश्वकामा तथेश्वरे ।
गोमन्ते गोमतीनाम मन्दारे कामचारिणी ॥
मदोत्कटा चैत्ररथे जयन्ती हस्तिनापुरे ।

कान्यकुब्जे तथा गौरी रम्भा मलयपर्व्वते ॥
स्थानेश्वरे भवानी तु विश्वा विश्वेश्वरे विदुः।
पुष्करे पुरुहूतेति केदारे मार्गदायिनी ॥
नन्दा हिमवतः पृष्ठे गोकर्णे भद्रकर्णिका।
स्थानेश्वरे भवानी तु विल्वके विल्वपत्रिका ॥
श्रीशैले माधवीनाम भद्रा भद्रेश्वरे तथा।
जया वराहशैले तु कमला कमलालये ॥
रुद्रकोट्यां तु रुद्राणी काली कालञ्जरे तथा।
महालिङ्गे तु कपिला सांकोटे कपिलाम्बरा ॥
शालग्रामे महादेवी शिवलिङ्गे जनप्रिया।
मायापुर्य्यां कुमारी तु सन्ताने ललिता तथा ॥
उत्पलाक्षी सहस्राक्षे कनकाक्षे तथोत्पला।
गयायां मङ्गलानाम विमला पुरुषोत्तमे ॥
विपाशायाममोघाक्षी पिङ्गला पुण्ड्रवर्द्धने।
नारायणी सुपार्श्वे तु त्रिकूटे रुद्रसुन्दरी ॥
विपुले विपुलानाम कल्याणी मलयाचले।
कोटरा कोटितीर्थेषु सुगन्धा मागधे वने ॥
गोदाश्रये त्रिसन्ध्या तु गङ्गाद्वारे रतिप्रिया।
शिवकुण्डे शिवानन्दा नन्दिनी देविकातटे ॥
रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने।
देवकी मथुरायां तु पाताले परमेश्वरी ॥
चित्रकूटे तथा सीता विन्ध्ये विन्ध्याधिवासिनी।
सह्याद्रावेकवीरा तु हरिश्चन्द्रे तु चण्डिका ॥
रमणा रामतीर्थे तु यमुनायां मृगावती।
करवीरे महालक्ष्मी रमादेवी विनायके ॥

अरोगा वैद्यनाथे तु महाकाले महेश्वरी ।
अभया दन्दुतीर्थे तु मूका वा विन्ध्यकन्दरे ॥
माण्डव्ये मण्डुकानाम स्वाहा माहेश्वरे पुरे ।
छागलण्डे प्रचण्डा तु चण्डिकाऽमरकण्टके ॥
सोमेश्वरे वरारोहा प्रभासे पुष्करावती ।
देवमाता सरस्वत्यां पारा पारातटे मता ॥
महालये महाभागा पयोष्ण्यां पिङ्गलेश्वरी ।
सिंहिका कृतशौचे तु कार्त्तिकेये तु शाङ्करी ॥
उत्पलावर्त्तके लोला सुभद्रा शोणसङ्गमे ।
माता सिद्धवने लक्ष्मीरनङ्गा भरताश्रमे ॥
जलेश्वरे विश्वमुखी तारा किष्किन्ध्यपर्वते ।
देवदारुवने सृष्टिर्मेध्या काश्मीरमण्डले ॥
भीमादेवी हिमाद्रौ तु तुष्टिर्वस्त्रेश्वरे तथा ।
कपालमोचने शुद्धिर्माता कायावरोहणे ॥
शङ्खोज्ज्वले धूलिर्नाम धृतिः पिण्डारके तथा ।
काली तु चन्द्रभागायामच्छोदे शिवचारिणी ॥
रेखायाममृतानाम बदर्य्यामुर्वशी तथा ।
ओषधी चोत्तरकुरौ कुशद्वीपे कुशोदका ॥
मन्मथा हेमकूटे तु कुमुदे सत्यवादिनी ।
अश्वत्थे बदरिका तु निधिर्वैश्रवणालये ॥
गायत्री वेदवदने पार्वती शिवसन्निधौ ।
देवलोके तथेन्द्राणी ब्रह्मास्येषु सरस्वती ॥
सूर्य्यबिम्बे प्रभानाम मातॄणां वैष्णवी तथा ।
अरुन्धती सतीनां तु रामासु च तिलोत्तमा ॥
चित्ते ब्रह्मकलानाम शक्तिः सर्वशरीरिणाम् ।

एतदुद्देशतः प्रोक्तं नामाष्टशतमुत्तमम् ॥
अष्टोत्तरं च तीर्थानां शतमेतदुदाहृतम् ।
यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ।
एषु तीर्थेषु यः कृत्वा स्नानं पश्यति मानवः ॥
सर्वपापविनिर्मुक्तः कल्पं शिवपुरे वसेत् ।
यस्तु मत्परमः स्थानं करोत्येतेषु मानवः ॥
स भित्त्वा ब्रह्मसदनं पदमभ्येति शाङ्करम् ।
मन्नामाष्टशतं यस्तु श्रावयेच्छिवसन्निधौ ॥
तृतीयायामथाष्टम्यां बहुपुत्रो भवेन्नरः ।
गोदाने श्राद्धदाने वा अहन्यहनि वा पुनः ॥
देवार्चनविधौ विद्वान् पठन् ब्रह्माधिगच्छति ।
एवं वदन्ती सा तत्र ददाहात्मानमात्मना ॥
स्वायम्भुवोऽपि कालेन दक्षः प्राचेतसोऽभवत् ।
पार्वती चाभवद्देवी शिवदेहार्द्धधारिणी ॥
मेनागर्भे समुत्पन्ना भुक्तिमुक्तिफलप्रदा ।
अरुन्धती जयन्त्येतत् तदाप्ता योगमुत्तमम् ॥
पुरूरवाश्च राजर्षिर्लोकेषु जयतामगात् ।
ययातिः पुत्रलाभं च धर्मलाभं च भार्गवः ॥
तथान्ये देवदैत्याश्च ब्राह्मणाः क्षत्रियास्तथा ।
वैश्याः शूद्राश्च बहवः सिद्धिमीयुर्यथेप्सितम् ॥
यत्रैतल्लिखितं तिष्ठेत् पूज्यते देवसन्निधौ ।
न तत्र शोको दौर्गत्यं कदाचिदपि जायते ॥ इति ।

अथ कृत्रिमतीर्थम् ।

पूजारत्नाकरे,

शालग्रामशिला यत्र तत्र सन्निहितो हरिः ।

तत्सन्निधौ त्यजन् प्राणान् याति विष्णोः परं पदम् ॥

लिङ्गपुराणे,

शालग्रामसमीपे तु क्रोशमात्रं समन्ततः ।
कीकटेऽपि मृतो याति वैकुण्ठभवनं नरः ॥

कीकटो मगधः ।

वैष्णवामृते व्यासः,

तुलसीकानने जन्तोर्यदि मृत्युर्भवेत् क्वचित् ।
स निर्भर्त्स्य यमं पापी लीलयैव हरिं विशेत् ॥
प्रयाणकाले यस्यास्ये दीयते तुलसीदलम् ।
निर्वाणं याति पक्षीन्द्र पापकोटियुतोऽपि सः ॥

प्रयाणकाले, मरणकाले ।

अथ सामान्यतो नदीस्नानफलम् ।

त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरिताम्पतिः ॥

त्रिरात्रफलदाः त्रिरात्रस्नानस्य फलदा इत्यर्थः । एवं पक्षस्येत्यादावपि ज्ञेयम् । अन्ये तु त्रिरात्रफलदाः त्रिरात्रोपवासस्य फलदा इत्यर्थः । एवं पक्षस्येत्यादावूह्यमित्याहुः ।

ब्रह्मपुराणे,

नद्यां प्रत्येकशः स्नाने भवेद्गोदानजं फलम् ।
गोप्रदानैश्च दशभिस्तासां पुण्यं तु सङ्गमे ॥

तेन नद्यां स्नाने गोदानजन्यफलप्राप्तिकाम इति वाक्यम् । नद्योः सङ्गमस्नाने तु दशगोदानजन्यफलसमफलप्राप्तिकाम इति । नदीविशेषाणां तीर्थविशेषाणां च यथासम्भवं फलविशेषानग्रे वक्ष्यामः ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजित-

चरणकमल—
श्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजाधिराज-
मधुकरसाहसूनु—
श्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरी-
कविकासदिनकर—
श्रीवीरसिंहदेवोद्योजित—
श्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनु—
सकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारी-
न्द्रविद्वज्जनजीवातु—
श्रीमन्मित्रमिश्रकृते
वीरमित्रोदयाभिधनिबन्धे
तीर्थप्रकाशे सामान्यतस्तीर्थधर्माः॥



काशीपरिच्छेदः ।

लोकस्य शोकवसतेः कलिकालरूढं
गूढं प्रकाशमपि चाघमलं-निरोद्धुम् ।
मुक्त्वा शिवैकसदनं शिवराजधानीं
जानीमहे जगति नापरमस्ति वस्तु ॥
धीरं प्रवीरं पतितं प्रवीणं
श्वानं युवानं तरुभिः समानम् ।
राशीकृता कापि कृपेव नूनं
काशी महाशीविषभूषणस्य ॥

अथ वाराणसीमाहात्म्यम् ।

हेमाद्रौ जाबालोपनिषदि, अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति तस्मादविमुक्तमेव निषेवेताविमुक्तं न विमुञ्चेदेवमेवैतद्याज्ञवल्क्य ।१। अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामिति । स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति । वरणायां नाश्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नाशीति सर्वानिन्द्रियकृतान् दोषान् वारयति तेन वरणा भवति सर्वानिन्द्रियकृतान् पापान् नाशयति तेन नाशी भवतीति । कतमच्चास्य स्थानं भवतीति । भ्रुवोः घ्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति । एतद्वै सन्धिं सन्ध्यां ब्रह्मविद उपास-

स इति । सोऽविमुक्त उपास्य इति । सोऽविमुक्तं ज्ञानमाचष्टे । यो वै तदेवं वेदेति ।

शारीरकभाष्ये, आमनन्ति चैनमस्मिन् परमेश्वरं मूर्द्धचिबुकान्तराले जाबालाः—'य एषोऽनन्तोऽव्यक्त आत्मा' इत्यादिनोक्तम् । तस्मादुपपन्ना परमेश्वरे प्रादेशमात्रश्रुतिरिति चोक्तम् । "प्रदेशेषु वा हृदयादिषु उपलब्धिस्थानेषु विशेषेणाभिव्यज्यते अतः परमेश्वरेऽपि प्रादेशमात्रश्रुतिरुपपद्यते" इति यत् प्रागुक्तं तस्यायमुपसंहारो भाष्ये कृतः ।

श्रुतेरर्थस्तु वरणा भ्रूर्नासी घ्राणम् । नियम्यजीवाधिष्ठानत्वद्वारेण नियन्तुरीश्वरस्याधिष्ठानत्वात् नासाभ्रुवोः पाप्मवारकत्वोपपत्तिः । नासाभ्रुवोर्मध्येऽपि स्थानविशेषजिज्ञासया प्रश्नः कतमं चेति । उत्तरं भ्रुवोरिति । घ्राणस्य नासिकास्थितस्य । स च सन्धिर्द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलोकस्य सन्धित्वेनोपास्य इति वाचस्पत्यकल्पतरौ व्याख्यातः ।

रामतापनीये,

श्रीरामचन्द्रस्य मनुं जजाप वृषभध्वजः ।
मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः ॥
ततः प्रसन्नो भगवान् श्रीरामः प्राह शङ्करम् ।
वृणीष्व यदभीष्टं तद्दास्यामि परमेश्वर ॥ इति सहोवाच
मणिकर्णिक्यां वा क्षेत्रे वा गङ्गायां वा तटे पुनः ।
म्रियते देहि तज्जन्तोर्मुक्तिं नातो वरान्तरम् ॥ इत्यथ
सहोवाच श्रीरामः
क्षेत्रेऽत्र तव देवेश यत्र कुत्रापि वा मृताः ।
कृमिकीटादयोऽप्याशु मुक्ताः सन्तु न चान्यथा ॥

१ आमनन्ति चैनमस्मिन् १ । २ । ३२ इति सूत्रभाष्ये ।

अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये ।
अहं सन्निहितस्तत्र पाषाणप्रतिमादिषु ॥
क्षेत्रेऽस्मिन् योऽर्चयेद्भक्त्या मन्त्रेणानेन मां शिव ।
ब्रह्महत्यादिपापेभ्यो मोक्षयिष्यामि मा शुचः ॥
त्वत्तो वा ब्रह्मणो वापि ये लभन्ते षडक्षरम् ।
जीवन्तो मन्त्रसिद्धाः स्युर्मुक्ता मां प्राप्नुवन्ति ते ॥
मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् ।
उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिव ॥

इतिरामचन्द्रेणोक्तम् । योऽविमुक्तं पश्यति स जन्मान्तरितान् दोषान्नाशयतीति ।

कूर्मपुराणे,

देव्युवाच ।

देवदेव महादेव भक्तानामार्तिनाशन ।
कथं त्वां पुरुषो देवमचिरादेव पश्यति ॥
साङ्ख्यं योगस्तथा ध्यानं कर्मयोगोऽथ वैदिकः ।
आयासबहुला लोके यानि चान्यानि शङ्कर ॥
येन विभ्रान्तचित्तानां योगिनां कर्मिणामपि ।
दृश्यो हि भगवन् सूक्ष्मः सर्वेषामथ देहिनाम् ॥
एतद्गुह्यतमं ज्ञानं गूढब्रह्मादिसेवितम् ।
हिताय सर्वभक्तानां ब्रूहि कामाङ्गनाशन ॥

ईश्वर उवाच ।

अवाच्यमेतद्विज्ञानं ज्ञानमज्ञैर्बहिष्कृतम् ।
वक्ष्ये तव यथातत्त्वं यदुक्तं परमर्षिभिः ॥
परं गुह्यतमं क्षेत्रं मम वाराणसी पुरी ।
सर्वेषामेव भूतानां संसारार्णवतारिणी ॥

तत्र भक्ता महादेवि मदीयं व्रतमाश्रिताः ।
निवसन्ति महात्मानः परं निश्चयमास्थिताः ॥
उत्तमं सर्वतीर्थानां स्थानानामुत्तमं च तत् ।
ज्ञानानामुत्तमं ज्ञानमविमुक्तं परं मम ॥
स्थानान्तरं पवित्राणि तीर्थान्यायतनानि च ।
श्मशानसंस्थितान्येव दिव्यभूमिगतानि च ॥
भूर्लोके नैव सँल्लग्रमन्तरिक्षे ममालयम् ।
अमुक्तास्तत्र पश्यन्ति मुक्ताः पश्यन्ति चेतसा ॥
श्मशानमेतद्विख्यातमविमुक्तमितिश्रुतम् ।
कालो भूत्वा जगदिदं संहराम्यत्र सुन्दरि ॥
देवीदं सर्वगुह्यानां स्थानं प्रियतमं मम ।
मद्भक्तास्तत्र गच्छन्ति मामेव प्रविशन्ति ते ॥
दत्तं जप्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् ।
ध्यानमध्ययनं ज्ञानं सर्वं तत्राक्षयं भवेत् ॥
जन्मान्तरसहस्रेषु यत् पापं पूर्वसञ्चितम् ।
अविमुक्तं प्रविशतस्तत्सर्वं व्रजति क्षयम् ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये वर्णसङ्कराः ।
स्त्रियो म्लेच्छाश्च ये चान्ये सङ्कीर्णाः पापयोनयः ॥
कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः ।
कालेन निधनं प्राप्ता अविमुक्ते वरानने ॥
चन्द्रार्द्धमौलयस्त्र्यक्षा महावृषभवाहनाः ।
शिवे मम पुरे देवि जायन्ते तत्र मानवाः ॥
नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ।
ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम् ॥
मोक्षं सुदुर्लभं मत्वा संसारं चातिभीषणम् ।

अश्मना चरणौ हत्वा वाराणस्यां वसेन्नरः ॥
दुर्लभा तपसा चैव पूतस्य परमेश्वरि ।
यत्र तत्र विपन्नस्य गतिः संसारमोक्षणी ॥
प्रसादाज्जायते ह्येतन्मम शैलेन्द्रनन्दिनि ।
अप्रबुद्धा न पश्यन्ति मम मायाविमोहिताः ॥
अविमुक्तं न सेवन्ति मूढा ये तमसावृताः ।
विण्मूत्ररेतसां मध्ये ते वसन्ति पुनः पुनः ॥
हन्यमानोऽपि यो विद्वान्वसेद्विघ्नशतैरपि ।
स याति परमं स्थानं यत्र गत्वा न शोचति ॥
जन्ममृत्युजरामुक्तं परं याति शिवालयम् ।
अपुनर्मरणानां हि सा गतिर्मोक्षकाङ्क्षिणाम् ॥
यां प्राप्य कृतकृत्यः स्यादिति मन्यन्ति पण्डिताः ।
न दानैर्न तपोभिश्च न यज्ञैर्नापि विद्यया ॥
प्राप्यते गतिरुत्कृष्टा याऽविमुक्ते तु लभ्यते ।
नानावर्णा विवर्णाश्च चण्डालाश्च जुगुप्सिताः ॥
किल्बिषैः पूर्णदेहा ये विशिष्टैः पातकैस्तथा ।
भेषजं परमं तेषामविमुक्तं विदुर्बुधाः ॥
अविमुक्तं परं ज्ञानमविमुक्तं परं पदम् ।
अविमुक्तं परं तत्त्वमविमुक्तं परं शिवम् ॥
कृत्वा वै नैष्ठिकीं दीक्षामविमुक्ते वसन्ति ये ।
नैष्ठिकीं दीक्षाम्, आमरणं न त्याज्यामिति सङ्कल्पम् ।
तेषां तत् परमं ज्ञानं ददाम्यन्ते परं पदम् ।
प्रयागं नैमिषं पुण्यं श्रीशैलोऽथ महालयः ॥
केदारं भद्रकर्णं च गया पुष्करमेव च ।
कुरुक्षेत्रं रुद्रकोटिर्नर्मदाऽऽम्रातकेश्वरम् ॥

शालग्रामं च कुब्जाम्रं कोकामुखमनुत्तमम् ।
प्रभासं विजयेशानं गोकर्णं भद्रकर्णकम् ॥
एतानि पुण्यस्थानानि त्रैलोक्ये विश्रुतानि तु ।
नऽयास्यन्ति परं मोक्षं वाराणस्यां यथा मृताः ॥
वाराणस्यां विशेषेण गङ्गा त्रिपथगामिनी ।
प्रविष्टा नाशयेत्पापं जन्मान्तरशतैः कृतम् ॥
अन्यत्र सुलभा गङ्गा श्राद्धं दानं तपो जपः ।
व्रतानि सर्वमेवैतद्वाराणस्यां सुदुर्लभम् ॥
यजेत जुहुयान्नित्यं दद्याभ्यर्चयतेऽमरान् ।
वायुभक्षश्च सततं वाराणस्यां स्थितो नरः ॥
यदि पापो यदि शठो यदि वा धार्मिको नरः ।
वाराणसीं समासाद्य पुनाति सकलं नरः ॥
वाराणस्यां महादेवं येऽर्चयन्ति स्तुवन्ति च ।
सर्वपापविनिर्मुक्तास्ते विज्ञेया गणेश्वराः ॥
अन्यत्र योगज्ञानाभ्यां संन्यासादथ वाऽन्यतः ।
प्राप्यते तत् परं स्थानं सहस्रेणैव जन्मनाम् ॥
ये भक्ता देवदेवेशे वाराणस्यां वसन्ति वै ।
ते विन्दन्ति परं मोक्षमेकेनैव तु जन्मना ॥
यत्र योगस्तथा ज्ञानं मुक्तिरेकेन जन्मना ।
अविमुक्तं तदासाद्य नान्यं गच्छेत्तपोवनम् ॥
यतो मया न मुक्तं तदविमुक्तं ततः स्मृतम् ।
तदेव गुह्यं गुह्यानामेतद्विज्ञाय मुच्यते ॥
ज्ञानाज्ञानातिनिष्ठायां परमानन्दमिच्छताम् ।
या गतिर्विहिता सुभ्रु साऽविमुक्ते मृतस्य तु ॥
यानि चैवाविमुक्तस्य देहे तूक्तानि कृत्स्नशः ।

पुरी वाराणसी तेभ्यः स्थानेभ्यो ह्यधिका शुभा ॥
यत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः ।
व्याचष्टे तारकं ब्रह्म तत्रैव ह्यविमुक्तकम् ॥
यत्तत् परतरं तत्त्वमविमुक्तमिति श्रुतम् ।
एकेन जन्मना देवि वाराणस्यां तदाप्नुयात् ॥
भ्रूमध्ये नाभिमध्ये च हृदयेन च मूर्द्धनि ।
यथा ऽविमुक्तमादित्ये वाराणस्यां व्यवस्थितम् ॥
वरुणायास्तथा चास्या मध्यं वाराणसी पुरी ।
तत्रैव संस्थितं तत्त्वं नित्यमेवाविमुक्तकम् ॥
वाराणस्याः परं स्थानं न भूतं न भविष्यति ।
यथा नारायणाद्देवो महादेवाद्दिवेश्वरः ॥
तत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ।
उपासते मां सततं देवदेवं पितामहम् ॥
महापातकिनो ये च ये तेभ्यः पापकृत्तमाः ।
वाराणसीं समासाद्य ते यान्ति परमां गतिम् ॥
तस्मान्मुमुक्षुर्नियतो वसेद्वै मरणान्तिकम् ।
वाराणस्यां महादेवात् ज्ञानं लब्ध्वा विमुच्यते ॥
किन्तु विघ्ना भविष्यन्ति पापोपहतचेतसः ।
ततो नैवाचरेत्पापं कायेन मनसा गिरा ॥
एतद्रहस्यं देवानां पुराणानां च सुव्रते ।
अविमुक्ताश्रयं ज्ञानं न कश्चिद्वेत्ति तत्त्वतः ॥
देवतानामृषीणां च शृण्वतां परमेष्ठिनि ।
देव्यै देवेन कथितं सर्वपापप्रणाशनम् ॥
यथा नारायणः श्रेष्ठो देवानां पुरुषोत्तमः ।
यथेश्वराणां गिरिशः स्थानानां चैतदुत्तमम् ॥

यैः समाराधितो रुद्रः सर्वस्मिन्नेव जन्मनि ।
ते विदन्ति परं क्षेममविमुक्तं शिवालयम् ॥
कलिकल्मषसम्भूता येषामुपहता मतिः ।
न तेषां विदितुं शक्यं स्थानं तत्परमेष्ठिनः ॥
ये स्मरन्ति सदा कालं वदन्ति च पुरीमिमाम् ।
तेषां विनश्यति क्षिप्रमिहामुत्र च पातकम् ।
यानि चेह प्रकुर्वन्ति पातकानि कृतालयाः ॥
नाशयेत्तानि सर्वाणि देवः कालतनुः शिवः ।
आगच्छध्वमिदं स्थानं सेवितं मोक्षकाङ्क्षिणाम् ॥
मृतानां च पुनर्जन्म न भूयो भवसागरे ।
तस्मात्सर्वप्रयत्नेन वाराणस्यां वसेन्नरः ॥
योगी वाप्यथवाऽयोगी पापी वा पुण्यकृत्तमः ।
न वेदवचनात् पित्रोर्नैव गुरुवादतः ।
मतिरुत्क्रमणीया स्यादविमुक्तगतिं प्रति ॥

सूत उवाच ।

इत्येवमुक्त्वा भगवान् व्यासो वेदविदाम्वरः ।
सहैव शिष्यप्रवरैर्वाराणस्यां चकार ह ॥

कल्पतरौ मत्स्यपुराणे,

ईश्वर उवाच ।

वाराणसीति भुवनत्रयसारभूता
रम्या सदा मम पुरी गिरिराजपुत्रि ।
अत्रागता विविधदुष्कृतिकारिणोऽपि
पापक्षयाद्विरजसः प्रतिभान्ति मर्त्याः ॥
एवं स्मृतं प्रियतमं मम देवि नित्यं
क्षेत्रं विचित्रतरुगुल्मलतासुपुष्पम् ।

अस्मिन्मृतास्तनुभृतः पदमाप्नुवन्ति
मोक्षाख्यमेव मनसापि न संशयोऽत्र ॥

तथा

इदं गुह्यतमं क्षेत्रं सदा वाराणसी मम ।
सर्वेषामेव जन्तूनां हेतुर्मोक्षस्य सर्वदा ॥
अस्मिन् सिद्धाः सदा देवि मदीयव्रतमाश्रिताः ।
नानालिङ्गधरा नित्यं मम लोकाभिकाङ्क्षिणः ॥
अभ्यस्यन्ति परं योगं मुक्तात्मानो जितेन्द्रियाः ।

नानालिङ्गधराः, मेखलाजिनादिलिङ्गधारिणश्चत्वार आश्रमिण इत्यर्थः ।

तथा,

मन्मना मम भक्तश्च मयि सर्वार्पितक्रियः ।
यथा मोक्षमिहाप्नोति अन्यत्र न तथा क्वचित् ॥

तथा,

विमुक्तं न मया यस्मान्मोक्ष्यते वा कदाचन ।
महत्क्षेत्रमिदं तस्मादविमुक्तमिति स्मृतम् ॥
नैमिषे च कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे ।
स्नानात्संसेवनाद्वापि न मोक्षः प्राप्यते यतः ॥
इह सम्प्राप्यते येन तत एव विशिष्यते ।
प्रयागे वा भवेन्मोक्षो महाकालेऽथ वा प्रिये ॥
अमरकण्टके तद्वत्तथा कायावारोहणे ।
कालञ्जरे महाभाग इह वा मत्परिग्रहात् ॥
प्रयागादपि तीर्थाग्र्यादिदमेव महत्स्मृतम् ।

विमुक्तं न मयेति । यद्यपि मन्दराद्रिगतेन शम्भुना चिरं तत्क्षेत्रं त्यक्तं तथापि लिङ्गरूपेण तदापि न त्यक्तमित्याशयः ।

अत एव काशीखण्डे,

मन्दराद्रिगतेनापि क्षेत्रं नैतत् पिनाकिना ।
विमुक्तं लिङ्गरूपेण अविमुक्तं ततः स्मृतम् ॥

इदमेव महत्स्मृतमिति अल्पायसेनैवात्र मोक्षप्राप्तेः ।

तथा,

ध्यायतस्तत्र मां नित्यं योगाग्निर्दीप्यते भृशम् ।
कैवल्यं परमं याति देवानामपि दुर्लभम् ॥
अव्यक्तलिङ्गैर्मुनिभिः सर्वसिद्धान्तवादिभिः ।
इह सम्प्राप्यते मोक्षो दुर्लभोऽन्यत्र कर्हिचित् ॥
तेभ्यश्चाहं प्रयच्छामि योगैश्वर्य्यमनुत्तमम् ।
आत्मनश्चैव सायुज्यमीप्सितं स्थानमेव वा ॥
कुबेरस्तु महायक्षस्तथा सर्वार्पितक्रियः ।
क्षेत्रसंसेवनादेव गणेशत्वमवाप ह ॥
संवर्त्तो भविता यश्च सोऽपि भक्त्या ममैव तु ।
इहैवाराध्य मां देवि सिद्धिं यास्यत्यनुत्तमाम् ॥
पराशरसुतो योगी ऋषिर्व्यासो महातपाः ।
धर्मयुक्तो भविष्यंश्च वेदसंस्थाप्रवर्त्तकः ॥
वत्स्यते सोऽपि पद्माक्षि क्षेत्रेऽस्मिन्मुनिपुङ्गवः ।
ब्रह्मा देवर्षिभिः सार्द्धं विष्णुर्वायुर्दिवाकरः ॥
देवराजस्तथा शक्रस्तथान्ये त्रिदिवौकसः ।
उपासते महात्मानः सर्वे मामिह सुव्रताः ॥
अन्ये च योगिनः सिद्धाश्छन्नरूपा महाव्रताः ।
अनन्यमनसो भूत्वा मामिहोपासते सदा ॥
अलर्कश्च पुरीमेतां मत्प्रसादादवाप्स्यते ।

१ रंस्यते इत्यपि पाठः ।

स चैनां पूर्ववत्कृत्वा चतुर्वर्णाश्रमाकुलाम् ॥
स्फीतां जनपदाकीर्णां भुक्त्वा च सुचिरं नृपः ।
मयि सर्वार्पितप्राणो मामेव प्रतिपत्स्यते ॥
ततः प्रभृति चार्वङ्गि येऽपि क्षेत्रनिवासिनः ।
गृहिणो लिङ्गिनो वापि मद्भक्ता मत्परायणाः ॥
मत्प्रसादाद्गमिष्यन्ति मोक्षं परमदुर्लभम् ।
विषयासक्तचित्तोऽपि त्यक्तधर्मरतिर्नरः ॥
इह क्षेत्रे मृतः सोऽपि संसारे न विशेत्पुनः ।
ये पुनर्निर्ममा धीराः सत्त्वस्था विजितेन्द्रियाः ॥
व्रतिनश्च निरारम्भाः सर्वे ते मयि भाविताः ।
देहभेदं समासाद्य दीप्यन्ते सङ्गवर्जिताः ॥
गता एव परं मोक्षं प्रसादान्मम सुव्रते ।
जन्मान्तरसहस्रेषु युञ्जन योगी यदाप्नुयात् ॥
तमिहैव परं मोक्षं मरणादधिगच्छति ।
एतत् सङ्क्षेपतो देवि क्षेत्रस्यास्य महत्फलम् ॥
अविमुक्तस्य कथितं मया ते गुह्यमुत्तमम् ।
इहैव, जन्मनीतिशेषः

तथा,

अविमुक्ते परा सिद्धिरविमुक्ते परा गतिः ।
जप्तं दत्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् ॥
ध्यानमध्ययनं दानं सर्वं भवति चाक्षयम् ।
जन्मान्तरसहस्रेण यत्पापं पूर्वसञ्चितम् ॥
अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् ।
अविमुक्ताग्निना दग्धमग्नौ तूलमिवाहितम् ॥

---

१ धीमन्त इत्यपि पाठः । २ योगमवाप्नुयात् इत्यपि पाठः ।

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वै वर्णसङ्कराः ।
कृमिम्लेच्छाश्च ये चान्ये सङ्कीर्णाः पापयोनयः ॥
कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः ।
कालेन निधनं प्राप्ता अविमुक्ते शृणु प्रिये ॥
चन्द्रार्द्धमौलिनः सर्वे ललाटाक्षा वृषध्वजाः ।
शिवे मम पुरे देवि जायन्ते तत्र मानवाः ॥
अकामो वा सकामो वा अपि तिर्य्यग्गतोऽपि वा ।
अविमुक्ते त्यजन् प्राणान् मम लोके महीयते ॥
अविमुक्तं यदा गच्छेत् कदाचित्कालपर्य्ययात् ।
अश्मना चरणौ भित्त्वा तत्रैव निधनं व्रजेत् ॥
तथा,
यानि तीर्थानि श्रूयन्ते त्रिषु लोकेषु सुव्रते ।
अविमुक्तस्य पादे तु नित्यं सन्निहितानि वै ॥
तथा,
यस्तत्र निवसेद्विप्रोऽसंयुक्तात्माऽसमाहितः ।
त्रिकालमपि भुञ्जानो वायुभक्षसमो भवेत् ॥
निमेषमात्रमपि यो ह्यविमुक्ते तु भक्तिमान् ।
ब्रह्मचर्य्यसमायुक्तः स परं प्राप्नुयात्तपः ॥
योऽत्र मासं वसेद्धीरो लघ्वाहारो जितेन्द्रियः ।
सम्यक्तेन व्रतं चीर्णं दिव्यं पाशुपतं महत् ॥
जन्ममृत्युभयं तीर्त्वा स याति परमां गतिम् ।
नैःश्रेयसीं गतिं पुण्यां तथा योगगतिं व्रजेत् ॥
न हि योगगतिर्लभ्या जन्मान्तरशतैरपि ।
प्राप्यते क्षेत्रमाहात्म्यात् प्रभावाच्छङ्करस्य तु ॥
नैःश्रेयसी गतिः, मोक्षानुकूला विशिष्टदेहप्राप्तिः ।

ब्रह्महा योऽभिगच्छेत अविमुक्तं कदाचन ।
तस्य क्षेत्रस्य माहात्म्याद्ब्रह्महत्या निवर्तते ॥

तथा,

मेरोः शक्या गुणा वक्तुं द्वीपानां च तथैव च ।
समुद्राणां च सर्वेषां नाविमुक्तस्य शक्यते ॥
अन्तकाले मनुष्याणां छिद्यमानेषु मर्मसु ।
वायुना प्रेर्यमाणानां स्मृतिर्नैवोपजायते ॥
अविमुक्ते ह्यन्तकाले भक्तानामीश्वरः स्वयम् ।
कर्मभिः प्रेर्य्यमाणानां कर्णजापं प्रयच्छति ॥
ईश्वरप्रेषितो याति दुष्प्रापमकृतात्मभिः ।
अशाश्वतमिदं ज्ञात्वा मानुष्यं बहुकिल्बिषम् ॥
अविमुक्तं निषेवेत संसारभयमोचनम् ।
भोगमोक्षप्रदं दिव्यं बहुपापविनाशनम् ॥

तथा,

सदा यजति सत्रेण सदा दानं प्रयच्छति ।
सदा तपस्वी भवति अविमुक्ते स्थितो नरः ॥
यो मां पूजयते नित्यं तस्य तुष्याम्यहं प्रिये ।
सर्वदानानि यो दद्यात् सर्वयज्ञेषु दीक्षितः ॥
सर्वतीर्थाभिषेकी च स प्रपद्येत मामिह ।

तथा,

अविमुक्तं गता ये वै महापुण्यकृतो नराः ।
अक्षया ह्यजराश्चैव अदेहाश्च भवन्ति ते ।
मत्प्रसादाद्वरारोहे मामेव प्रविशन्ति ते ॥

तथा,

शाकपर्णाशिनो दान्ताः सम्प्रक्षाला मरीचिपाः ।

दन्तोलूखलिनश्चैव अस्मकुट्टास्तथापरे ॥
सम्प्रक्षालाः, सद्यःप्रक्षालकाः श्वस्तनभक्ष्यरहिताः ।
मासि मासि कुशाग्रेण जलमास्वादयन्ति ये ।
वृक्षमूलनिकेताश्च शिलाशय्यास्तथा परे ॥
आदित्यवपुषः सर्वे जितक्रोधा जितेन्द्रियाः ।
एवं बहुविधैर्धर्मैरन्यत्र चरितव्रताः ॥
त्रैकाल्यमपि भुञ्जाना येऽविमुक्तनिवासिनः ।
तपश्चरन्ति वान्यत्र कलां नार्हन्ति षोडशीम् ॥
येऽविमुक्ते वसन्तीह स्वर्गे प्रतिवसन्ति ते ।
मत्समः पुरुषो नास्ति त्वत्समा नास्ति योषिताम् ॥
अविमुक्तसमं क्षेत्रं न भूतं न भविष्यति ।
अविमुक्ते परो योगो ह्यविमुक्ते परा गतिः ॥
अविमुक्ते परो मोक्षः क्षेत्रे नैवास्ति तादृशम् ।
तथा,
चतुर्मूर्त्तिः सदा धर्मस्तस्मिन् सन्निहितः प्रिये ।
चतुर्णामपि वर्णानां गतिस्तु परमा स्मृता ॥
तथा,
परं गुह्यं समाख्यातं श्मशानमिति संज्ञितम् ।
अविमुक्तं न सेवन्ते वञ्चितास्ते नरा भुवि ॥
अविमुक्ते स्थितैः पुण्यैः पांशुभिर्वायुनेरितैः ।
स्पृष्टा दुष्कृतकर्माणो यास्यन्ति परमां गतिम् ॥
अविमुक्तगुणा वक्तुं देवदानवमानवैः ।
न शक्यन्ते ह्यमेयत्वात् स्वयं यत्र भवः स्थितः ॥
नानाहिताग्निर्नायज्वा, नाशुचिस्तस्करोऽपि वा ।
अविमुक्ते वसेद्यस्तु स वसेदीश्वरालये ॥

न तत्रापुण्यकृत् कश्चित्प्रभावादीश्वरस्य तु ।
अज्ञानाज्ज्ञानतो वापि स्त्रिया वा पुरुषेण वा ॥
यत्किञ्चिदशुभं कर्म कृतं मानुषबुद्धिना ।
अविमुक्ते प्रविष्टस्य तत्सर्वं भस्मसाद्भवेत् ॥
तथा,
दृष्ट्वैतान् दीनकृपणान् पापान् दुष्कृतकारिणः ।
देवोऽनुकम्पया सर्वान्नयत्याशु परां गतिम् ॥
भक्तानुकम्पी भगवान् तिर्यग्योनिगतानपि ।
भगवांस्तत्र नयति यत्र यान्ति न याज्ञिकाः ॥
तथा,
न सा गतिः कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे ।
या गतिर्विहिता पुंसामविमुक्तनिवासिनाम् ॥
तिर्यग्योनिगताः सत्त्वा येऽविमुक्ते कृतालयाः ।
कालेन निधनं प्राप्तास्तेऽपि यान्ति परां गतिम् ॥
मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ।
अविमुक्तं समासाद्य तत्सर्वं व्रजति क्षयम् ॥
श्मशानमितिविख्यातमविमुक्तं शिवालयम् ।
तद्गुह्यं देवदेवस्य तत्तीर्थं तत्तपोवनम् ॥
तत्र ब्रह्मादयो देवा नारायणपुरोगमाः ।
योगिनश्च तथा साध्या भगवन्तं सनातनम् ॥
उपासते शिवं भक्ता मद्भक्ता मत्परायणाः ।
या गतिर्ज्ञानतपसां या गतिर्यज्ञयाजिनाम् ॥
अविमुक्ते मृतानां तु सा गतिर्विहिता शुभा ।
तथा,
आदित्योपासनं कृत्वा विप्राश्चामरतां गताः ।

अन्येऽपि तत्र ये वर्णा भवभक्ताः समाहिताः ॥
अविमुक्ते विमुक्तास्ते यास्यन्ति परमां गतिम् ।
अष्टौ मासा विहारस्य यतीनां संयतात्मनाम् ॥
एकत्र चतुरो मासानर्धं वा निवसेत्पुनः ।
अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ॥
न दोषोऽभिभवेत्तत्र दृष्टं शास्त्रे पुरातने ।
मोक्षोप्यसंशयस्तत्र पञ्चत्वं तु गतस्य वै ॥
स्त्रियः पतिव्रता याश्च भवभक्ताः समाहिताः ।
अविमुक्ते विमुक्तास्ता यास्यन्ति परमां गतिम् ॥
परमा गतिर्मोक्षः ।
यत्र योगश्च मोक्षश्च प्राप्यते दुर्लभो नरैः ।
अविमुक्तं समासाद्य नान्यद्गच्छेत्तपोवनम् ॥
सर्वात्मना तपः सत्यं प्राणिनां नात्र संशयः ।
अविमुक्ते वसेद्यस्तु मम तुल्यो भवेन्नरः ॥
यतो मया न विमुक्तमविमुक्तं ततः स्मृतम् ।
अविमुक्तं न सेवन्ते मूढा ये तामसा नराः ॥
विण्मूत्ररेतसां मध्ये ते वसन्ति पुनः पुनः ।
कामः क्रोधोऽतिलोभश्च दम्भः स्तम्भोऽतिमत्सरः ।
निद्रा तन्द्रा तथा ऽऽलस्यं पैशुन्यमिति ते दश ॥
अविमुक्ते स्थिता विघ्राः शक्रेण विहिताः स्वयम् ।
विनायकोपसर्गश्च सततं मूर्ध्नि तिष्ठति ॥
पुण्यमेतद्भवेत्सर्वं भक्तानामनुकम्पया ।
परं गुह्यमिति ज्ञात्वा ततः शास्त्रानुदर्शनात् ॥
व्याहृतं देवदेवैस्तु मुनिभिस्तत्त्वदर्शिभिः ।

---

१ सेव्यं ब्राह्मणैरित्यपि पाठः ।

मदसा विप्लुता भूमिरविमुक्तेन वर्ज्जिता ॥
पूता समभवत्सर्वा महादेवेन रक्षिता ।
संस्कारस्तेन क्रियते भूमेरन्यत्र सूरिभिः ॥

दम्भः, कीर्त्यर्थं धर्मानुष्ठानम् । स्तम्भो गर्वः । अतिमत्सरोऽत्यन्तासूया । पैशुन्यं परदोषाविष्करणम् ।

तथा,

तं वै प्राप्य महादेवमीश्वराध्युषितं शुभम् ।
अविमुक्तं कृतार्थोऽस्मीत्यात्मानमुपलक्षयेत् ॥
ऋषिदेवासुरगणैर्जपहोमपरायणैः ।
यतिभिर्मोक्षकामैश्च अविमुक्तं निषेव्यते ॥
नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ।
ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम् ॥

तथा,

भूर्लोके चान्तरिक्षे च दिवि तीर्थानि यानि च ।
अतीत्य वर्त्तते सर्वाण्यविमुक्तं प्रभावतः ॥
ये तु ध्यानं समासाद्य युक्तात्मानः समाहिताः ।
सन्नियम्येन्द्रियग्रामं जपन्ति शतरुद्रियम् ॥
अविमुक्ते स्थिता नित्यं कृतार्थास्ते द्विजातयः ।

तथा,

न दानैर्न तपोभिश्च न यज्ञैर्नापि विद्यया ।
प्राप्यते गतिरिष्टा हि या ऽविमुक्ते तु लभ्यते ॥
नानावर्णा विवर्णाश्च चण्डाला ये जुगुप्सिताः ।
किल्बिषैः पूर्णदेहाश्च प्रकृष्टैः पातकैस्तथा ॥
भेषजं परमं तेषामविमुक्तं विदुर्बुधाः ।
ज्ञात्यन्तरहस्तेषु अविमुक्ते म्रियेत यः ।

भक्तो विश्वेश्वरे देवे न स भूयोऽभिजायते ॥
अत्र चेष्टं हुतं दत्तं तपस्तप्तं कृतं च यत् ।
सर्वमक्षयमेतस्मिन्नविमुक्ते न संशयः ॥
कालेनोपरता यान्ति भवे सायुज्यमक्षयम् ।

तथा,

न हि योगादृते मोक्षः प्राप्यते भुवि मानवैः ।
अविमुक्ते तु वसतां योगो मोक्षश्च सिद्ध्यति ॥
अनेन जन्मनैवेह प्राप्यते गतिरुत्तमा[1] ।
एक एव प्रभावोऽस्ति क्षेत्रस्य परमेश्वरि ॥
एकेन जन्मना देवि मोक्षं यास्यन्त्यनुत्तमम् ।
अविमुक्ते निवसता व्यासेनामिततेजसा ॥
नैव लब्धा क्वचिद्भिक्षा भ्राम्यमाणेन यत्नतः ।
क्षुधाविष्टस्ततः क्रुद्धोऽचिन्तयच्छापमुत्तमम् ॥
मा भूत्त्रैपुरुषी विद्या मा भूत्त्रैपुरुषं धनम् ।
मा भूत्त्रैपुरुषं राज्यं व्यासो वाराणसीं शपत् ॥
अविमुक्ते निवसतां जनानां पुण्यकर्मणाम् ।
विघ्नं सृजामि सर्वेषां येन सिद्धिर्न विद्यते ॥
'व्यासचित्तं तदा ज्ञात्वा देवदेव उमापतिः' ।

इत्यर्धं मात्स्ये दृश्यते ।

---

१ नैतदर्धमात्रं किन्तु 'भीतभीतस्तदा गौरीं तां प्रियां पर्यभाषत । शृणु देवि वचो मह्यं यादृशं प्रत्युपस्थितम् ॥ कृष्णद्वैपायनः कोपाच्छापं दातुं समुद्यतः । देव्युवाच । किमर्थं शपते क्रुद्धो व्यासः केन प्रकोपितः । किं कृतं भगवंस्तस्य येन शापं प्रयच्छति । देवदेव उवाच । अनेन सुतपस्तप्तं बहून् वर्षगणान् प्रिये । मौनिना ध्यानयुक्ते द्वादशाब्दान् वरानने ॥ ततः क्षुधा सु-

व्यासस्य दर्शनं दत्त्वा कृत्वा वेषं तु मानुषम् ।
एह्येहि भगवन् साधो भिक्षां ग्राहय सत्तम ॥
अस्मद्गृहे कदाचित्त्वं नागतोऽसि महामुने ।
एतच्छ्रुत्वा प्रीतमना भिक्षां ग्रहीतुमागतः ॥
भिक्षां दत्त्वा तु व्यासाय षड्रसाममृतोपमाम् ।
अनास्वादितपूर्वा सा भक्षिता मुनिना ततः ॥
भिक्षां व्याससुतो भुक्त्वा चिन्तयन् हृष्टमानसः ।
व्यासः कमलपत्राक्ष इदं वचनमब्रवीत् ॥
देवो देवी नदी गङ्गा मिष्टमन्नं शुभा गतिः ।
वाराणस्यां विशालाक्षि वासः कस्य न रोचते ॥
एवमुक्त्वा ततो व्यासो नगरीमवलोकयन् ।
चिन्तयंश्चापि तां भिक्षां हृदयानन्दकारिणीम् ॥
अपश्यत्पुरतो देवं देवीं च गिरिजां तदा ।
गृहाङ्गणस्थितं व्यासं देवदेवोऽब्रवीदिदम् ॥
इह क्षेत्रे न वस्तव्यं क्रोधनस्त्वं महामुने ।
एवं समयमापन्नो देवं व्यासोऽब्रवीद्वचः ॥

व्यास उवाच ।

चतुर्दश्यां तथाष्टम्यां प्रवेशं दातुमर्हसि ।

---

संजाता भिक्षामटितुमागतः । नैवास्य केनचिद्भिक्षा ग्रासार्धमपि भामिनि ॥ एवं भगवतः काल आसीत्षाण्मासिको मुनेः । ततः क्रोधपरीतात्मा शापं दास्यति सोऽधुना ॥ यावन्नैष शपेत्तावदुपायस्तत्र चिन्त्यताम् । कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रिये ॥ कोऽस्य शापान्न बिभेति ह्यपि साक्षात्पितामहः । अदैवं दैवतं कुर्याद्दैवं चाप्यपदैवतम् ॥ आवां तु मानुषौ भूत्वा गृहस्थाविह वासिनौ । तस्य तृप्तिकरीं भिक्षां प्रयच्छावो वरानने ॥ एवमुक्ता ततो देवी देवेन शम्भुना तदा' । इत्यप्यधिकं मुद्रितमात्स्ये दृश्यते ।

एवमस्त्वित्यनुज्ञाय तत्रैवान्तरधीयत ॥
न तद्गृहं न सा देवी न देवो ज्ञायते क्वचित् ।
एवं त्रैलोक्यविख्यातः पुरा व्यासो महातपाः ॥
ज्ञात्वा क्षेत्रगुणान् सर्वान् स्थितस्तस्यैव पार्श्वतः ।
एवं व्यासं स्थितं ज्ञात्वा क्षेत्रं शंसन्ति पण्डिताः ॥

तथा,

तपांसि यानि पठ्यन्ते व्रतानि नियमाश्च ये ।
सर्वतीर्थाभिषेकं तु सर्वदानफलानि च ॥
सर्वयज्ञेषु यत्पुण्यमविमुक्ते तदाप्नुयात् ।

पाद्मे,

भूरिद्युम्नं प्रति सालङ्कायनवाक्यम् ।
काशीं गच्छ महाराज सर्वपापप्रणोदिनीम् ।
सम्प्राप्य सकलं पापं क्षययिष्यसि सर्वथा ॥
प्रत्ययार्थं च राजेन्द्र नीलीसिचयसम्भवान् ।
अनिशं कञ्चुकान् पञ्च परिधत्स्व महामते ॥
आकाशीदर्शनान्ता हि दृष्टाः स्युश्चन्द्रसन्निभाः ।
कञ्चुका हि यदा नैल्यं जहुः काशीविलोकनात् ॥
तदा त्वं तत्स्वकलुषं क्षयितं वेत्सि सर्वशः ।

ब्रह्मपुराणे,

ब्रह्मोवाच ।

अविमुक्तं च भवतः स्थानं यद्वै पुरातनम् ।
कपालमोचनं तीर्थं तव तत्र भविष्यति ॥
अहं च त्वं स्थितस्तत्र विष्णुश्चापि गमिष्यति ।
दर्शनात् भवतस्तत्र महापातकिनश्च ये ॥
तेऽपि भोगं समश्नन्ति विशुद्धा भवने मम ।

तथा,

विमुक्तो ब्रह्महत्यायास्तिष्ठ रुद्र यथासुखम् ।
अविमुक्ते मया दत्ते तिष्ठ त्वं भार्यया सह ॥

लिङ्गपुराणे,

अन्यच्च ते प्रवक्ष्यामि उपायं ज्ञानसाधनम् ।
यानि तीर्थानि चोक्तानि व्योमतन्त्रे पुरा मया ॥
तेषामत्याधिकं तीर्थमविमुक्तं महामुने ।
सर्वतीर्थानि च मया तस्मिन् स्थाने प्रतिष्ठिताः ॥
न कदाचिन्मया मुक्तं स्थानं च सततं मुने ।
सर्वतीर्थमयं पुण्यं गुह्याद्गुह्यतरं महत् ॥
स्थानानां चैव सर्वेषामादिभूतं महेश्वरम् ।
यत्र सिद्धिं परां प्राप्ता मुनयो मुनिसत्तम ॥
अनेनैव शरीरेण प्राप्तं निर्वाणमुत्तमम् ।
तत्र चैवं तु सम्भूतो ज्ञानं चाप्नोति मानवः ॥
गच्छ वाराणसीं शीघ्रं यत्र देवः सनातनः ।
देवताभिः समस्ताभिस्तत्र देवः पिनाकधृक् ॥
स्तूयते वरदो देवैर्ब्रह्मादिभिरभीक्ष्णशः ।
तत्रासिर्वरणा चैव निम्नगे सिद्धसेविते ॥
बहुजन्माप्तपापानां नष्टानां देहिनां भुवि ।
क्षालनं कुरुते देवी सा नदी तत्र जान्हवी ॥
या दृशा सर्वभूतानां या स्वर्गः सरितां वरा ।
या माता सर्वभूतानां सा गङ्गा यत्र निम्नगा ॥

दृशा दृष्टिः। एतमेव वचनप्रचयं प्रायशो हेमाद्रिरपि लिखति स्म ।

काशीखण्डे,

प्रयागतोऽपि तीर्थेशात् सर्वेषु भुवनेष्वपि ।

अनायासेन वै मुक्तिः काश्यां देहावसानतः।
प्रयागादपि वै रम्यमविमुक्तं न संशयः॥
यत्र विश्वेश्वरः साक्षात् स्वयं समधितिष्ठति।
अविमुक्तान्महाक्षेत्राद्विश्वेशसमाधिष्ठितात्॥
न च किञ्चित्क्वचिद्रम्यमिह ब्रह्माण्डगोलके।
अविमुक्तमिदं क्षेत्रमपि ब्रह्माण्डमध्यगम्॥
ब्रह्माण्डमध्ये न भवेत् पञ्चक्रोशप्रमाणतः।
यथा यथा हि वर्द्धेत जलमेकार्णवस्य च॥
तथा तथोन्नयेदीशस्तत् क्षेत्रं प्रलयादपि।
क्षेत्रमेतत् त्रिशूलाग्रे शूलिनस्तिष्ठति द्विज॥
अन्तरिक्षे न भूमिष्ठं नेक्षन्ते मूढबुद्धयः।
सदा कृतयुगं चात्र महापर्व सदात्र वै॥
न ग्रहास्तोदयकृतो दोषो विश्वेश्वरालये।
सदा सौम्यायनं तत्र सदा तत्र महोदयः॥
सदैव मङ्गलं तत्र यत्र विश्वेश्वरस्थितिः।
यथा भूमितले विप्र पुर्य्यः सन्ति सहस्रशः॥
तथा काशी न मन्तव्या कापि लोकोत्तरा त्वियम्।
मया सृष्टानि विप्रेन्द्र भुवनानि चतुर्दश॥
अस्याः पुर्य्या विनिर्माता स्वयं विश्वेश्वरः प्रभुः।
पुरा यमस्तपस्तप्त्वा बहुकालं सुदुश्चरम्॥
त्रैलोक्याधिकृतिं प्राप्तस्त्यक्त्वा वाराणसीं पुरीम्।
चराचरस्य सर्वाणि यानि कर्माणि तानि च॥
गोचरे चित्रगुप्तस्य काशीवासकृतादृते।
प्रवेशो यमदूतानां न कदाचिद्द्विजोत्तम॥
तथा,

अद्य प्रातः परश्वो वा मरणं प्राप्तमेव च ।
यावत्कालं विलम्बोऽस्ति तावत् काशीं समाश्रयेत् ॥
तथा,
दूरं मे मरणं युवाऽहमधुना धार्य्यं न चित्ते त्विति
श्रोतव्यो निभृतं कृतान्तमहिषग्रैवेयघण्टारवः ।
नैकव्यात्मकटोत्कटश्रुतिपुटीं सम्प्राप्य हित्वा द्रुतं
जीर्णां पर्णकुटीं ततः पटुमतिर्गच्छेत् पुरीं धूर्जटेः ॥
पातालखण्डे;

मुनय ऊचुः ।

इत्थं मुक्तिप्रदायिन्यां सत्यां काश्यां भृगो भुवि !
ऋषयो मुनयश्चान्ये किमर्थं मुक्तिसाधने ॥
क्लिश्यन्ति श्रवणे ध्याने मनने वीतकल्मषाः ।

ततो भृगुवाक्यम् ।

श्रूयतामृषिशार्दूला यद्वक्ष्यामि तु तत्त्वतः ।
संशयो नेह कर्त्तव्यो युष्माभिर्द्धर्मबुद्धिभिः ॥
विचित्ररुचयो लोका बद्धश्रद्धाः कचित्कचित् ।
यथेष्टं हि विचेष्टन्ते स्वतन्त्रास्तत्र तत्र ह ॥
इत्युक्त्वा—
अनेकोपायलभ्यं हि यत्फलं भवति द्विजाः ।
प्रवृत्तिः स्वेच्छया तत्र सर्वलोके हि दृश्यते ॥
यथा कश्चित् प्रसूनार्थी समानासु लतासु च ।
समानश्रमगम्यासु समानकुसुमासु च ॥
विद्यमानासु कस्यां चित् प्रवर्त्तेत न सर्वतः ।
यथा लोका यथाकामं श्रयन्ते मोक्षसाधनम् ॥
इत्युक्तम् । काशीपदनिरुक्तिरपि—

काशीखण्डे,

काशते यत्र यज्ज्योतिस्तदनाख्येयमीश्वर ।
अतो नामापरं चास्तु काशीति प्रथितं विभो ॥

तथा,

काशो ब्रह्मेति व्याख्यातं तद्ब्रह्म प्राप्यतेऽत्र हि ।
तस्मात्काशीगुणान् सर्वे तत्र तत्र वदन्ति हि ॥

तथा,

काशो ब्रह्मेति व्याख्यातं तद्विवर्त्ते जगद्भ्रमः ।
अविमुक्तं तदेवाहुः काशीति ब्रह्मवादिनः ॥

तथा,

श्मशब्देन शवः प्रोक्तः शानं शयनमुच्यते ।
निर्वचन्ति श्मशानार्थं मुने शब्दार्थकोविदाः ॥
महान्त्यपि च भूतानि प्रलये समुपस्थिते ।
शेरते ऽत्र शवा भूत्वा श्मशानं च ततो भवेत् ॥
असिश्च वरणा चैव क्षेत्ररक्षाकृते कृते ।
वाराणसीतिविख्याता तदारभ्य महामुने ॥

लैङ्गे,

अविशब्देन पापं तु कथ्यते वेदवादिभिः ।
तेन पापेन तत् क्षेत्रं वर्जितं वरवर्णिनि ॥

अतोऽविमुक्तमित्यर्थः ।

मात्स्ये तु,

न विमुक्तं मया यस्मान्मोक्ष्यते वा कदाचन ।
महत्क्षेत्रमिदं तस्मादविमुक्तमिति स्मृतम् ॥

इत्युक्तम् ।

पाद्मे,

आनन्दकाननं तद्धि शङ्करस्यातिवल्लभम् । इति ।

अथ काशीनाममाहात्म्यम् ।

नारदीये,

बहुनात्र किमुक्तेन वाराणस्या गुणान् प्रति ।
नामापि गृणतां काश्याश्चतुर्वर्गो न दूरतः ॥

एतेन चतुर्वर्गप्राप्तिकामः काशीनामग्रहणमहं करिष्य इतिवाक्यं सिद्ध्यति ।

स्कान्दे,

काशीकाशीतिकाशीति रसना रससंयुता ।
यस्य कस्यापि भूयाच्चेत् स रसज्ञो न चेतरः ॥

पाद्मे,

काशीतिवर्णद्वितयं स्मरंस्त्यजति पुद्गलम् ।
यत्र क्वापि भवेत्तस्य कैलासे वसतिः स्फुटा ॥

पुद्गलं शरीरम् । पूर्य्यते गलति चेतिव्युत्पत्तेः ।

तथा,

ब्रह्महत्यादिपापानि यस्या नाम्नोऽपि कीर्त्तनात् ।
त्यजन्ति पापिनं काशी सा केनेहोपमीयते ॥

तथा,

वाराणसीति काशीति महामन्त्रमिमं जपन् ।
यावज्जीवं त्रिसन्ध्यं तु जन्तुर्जातु न जायते ॥

अथ काशीस्मरणमाहात्म्यम् ।

लिङ्गपुराणे,

देवदेव उवाच ।

ये स्मरिष्यन्ति मत्स्थानमविमुक्तं सदा नराः
निर्धूतसर्वपापास्ते भविष्यन्ति गणोपमाः ॥

तेन सर्वपापक्षयकाम इति प्रयोज्यम् ।

काशिखण्डे,

योजनानां शतस्थोऽपि योऽविमुक्तं स्मरेद्धृदि ।
बहुपातकपूर्णोऽपि न स पापैः प्रबाध्यते ॥
मम प्रियस्य क्षेत्रस्य योऽविमुक्तस्य संस्मरेत् ।
प्राणप्रयाणसमये दूरगोऽप्यघवानपि ॥
स पापपूगमुत्सृज्य स्वर्गभोगान् समश्नुते ।
काशीस्मरणपुण्येन स्वर्गाद्भ्रष्टो हि जायते ॥
पृथिव्यामेकराड् भूत्वा भुक्त्वा भोगाननेकशः ।
माध्याविमुक्तं तत्पुण्यान्निर्वाणपदभाग्भवेत् ॥ इति ।

अथ काशीदर्शनमाहात्म्यम् ।

काशीमधिकृत्य लिङ्गपुराणे,

आगमिष्यन्ति यां द्रष्टुं ये जना योजनेन तु ।
ते ब्रह्महत्यां मोक्ष्यन्ति भविष्यन्ति ममानुगाः ॥

तथा,

अतीतं वर्त्तमानं च ज्ञानादज्ञानतोऽपि वा ।
सर्वं तस्य च यत्पापं क्षेत्रं दृष्ट्वा विनश्यति ॥

अतीतं, अतीतजन्मकृतम् । वर्त्तमानं, वर्त्तमानजन्मकृतम् । तेनातीतजन्मकृतवर्त्तमानजन्मकृतसर्वपापनाशकाम इति प्रयोगः ।

काशिखण्डे,

प्रयागस्नानपुण्येन यत्फलं स्याच्छिवप्रदम् ।
काशीदर्शनमात्रेण तत्पुण्यं श्रद्धयाऽस्तु वै ॥
इति विष्णोर्वरं श्रुत्वा देवदेवो जगत्पतिः ।
उवाच च प्रसन्नात्मा तथास्तु मधुसूदन ॥ इति ।

## अथ काशीस्तुतिमहिमा।

काशीखण्डे,

काशीं यः स्तौति मेधावी यः काशीं हृदि धारयेत्।
तेन तप्तं तपस्तीव्रं तेनेष्टं क्रतुकोटिभिः॥ इति।

क्रतुकोटिफलसमफलप्राप्तिकाम इति वाच्यम्।

## अथ प्रवेशमहिमा।

मात्स्ये,

यदि पापी यदि शठो यदि वा ऽधार्मिको नरः।
मुच्यते सर्वपापेभ्योऽविमुक्तं प्रविशेद्यदि॥

एवं च सर्वपापविमुक्तिकामोऽविमुक्तप्रवेशमहं करिष्ये इति वाच्यम्।

तथा,

वाराणस्यां तु यः कश्चित् प्रविष्टो ब्रह्मघातकः।
तिष्ठते क्षेत्रबाह्ये तु निर्गतं गृह्णते पुनः॥

तिष्ठते, ब्रह्महत्येतिशेष इति कल्पतरुः। अत्रात्मगुणस्याधर्मस्य बहिःस्थितिपुनर्ग्रहणयोरसम्भवादीदृशभयप्रदर्शनस्य काशीतो बहिर्न निर्गन्तव्यमित्यत्र तात्पर्य्यमिति बहवः। वस्तुतो निर्गमप्रागभावासमानकालीनप्रवेशस्यैव ब्रह्महत्याऽधर्मनाशकत्वात्तादृशप्रवेशेऽधर्मो नश्यतीत्यत्रैव तात्पर्य्यम्। गृह्णते पुनरित्यस्यापि निर्गमोत्तरं नरकं जनयतीत्यर्थः। अथ वा तदधिष्ठात्री देवता गृह्णते इत्यर्थः। अत्र कश्चित्—

जन्मान्तरसहस्रेण यत्पापं पूर्वसञ्चितम्।
अविमुक्तं प्रविष्टस्य तत् सर्वं व्रजति क्षयम्॥

इति दर्शनाज्जन्मान्तरीयमेव पापं प्रवेशान्नश्यति नैहिकमि-

त्याह । तन्न । 'यदि पापी यदि शठ' इत्यादिवाक्यैरैहिकस्यापि क्षयावगमात् । जन्मान्तरीयशाठ्ये शठपदाप्रयोगात् ।

अतीतं वर्त्तमानं च ज्ञानादज्ञानतोऽपि वा ।
सर्वं तस्य च यत्पापं क्षेत्रं दृष्ट्वा विनश्यति ॥

इति पूर्वलिखितवचनाच्च ।

नन्वेवं काशीप्रवेशात् क्षीणनिखिलपातकस्य बहिर्निर्गम एव चौरादिना व्यापादितस्य तदुत्तरं स्वर्गभोगेन प्रक्षीणनिखिलसुकृतस्य नापवर्गः तद्धेतुतत्त्वज्ञानाभावात्, नापि सांसारिकसुखाद्यनुभवः पुण्यापुण्यविरहादिति । मैवम् । तस्यापि चौरादितो मरणे दुर्मरणप्रभूतदुरितसद्भावात् रोगादिना मरणे नित्याकरणजनितकल्मषसत्त्वेन शरीरग्रहणोपपत्तेरिति प्राञ्चः । परे तु सन्ति केचन पुण्यविशेषा यदीयशेषाद्भुवि सम्भूय सार्वभौमभोगमनुभवन्ति तत्रैव च सुकृतदुष्कृते चिन्वानाः पुनर्मरणजन्मनी प्रत्यापद्यन्त इति । न च गर्भवासवेदनाया दुरिताधीनतया काशीस्पर्शनिरस्तपातकस्य कथं सार्वभौमभोगभूमिदेहसम्भवोऽपीतिवाच्यम्, स्वर्गेऽपि पातभीतिप्रभूतवेदनानुभवेन तत्तत्पुण्यविशेषाणां राज्यजनितप्राज्यसुखानुभावकतायाः श्रुतिसिद्धत्वेन च प्रारब्धवत् तादृशां केषांचित् कल्मषाणां काशीस्पर्शाविनाश्यत्वकल्पनादित्याहुः । केचित्तु प्रारब्धस्य काशीप्रवेशादपि न विनाश इति स्थितिः । सन्ति च कानिचित्प्रारब्धानि यानि द्वित्राण्यपि जन्मान्यर्जयन्ति तद्बलादेव तस्य पुनर्जन्मादिकम् । अनीदृशस्य काशीप्रवेशात् झटिति निर्गतस्य का गतिरितिचेत्, न । तादृशे प्राणिनि मानाभावादित्याहुः ।

अथ काशीवासमहिमा।

मात्स्ये,

यस्तत्र निवसेद्विप्रः संयतात्मा समाहितः।
त्रैकाल्यमपि भुञ्जानो वायुभक्षः सदा भवेत्॥
निमेषमात्रमपि यो ह्यविमुक्ते तु भक्तिमान्।
ब्रह्मचर्य्यसमायुक्तः स परं प्राप्नुयात्तपः॥
तत्र मासं वसेद्धीरो लघ्वाहारो जितेन्द्रियः।
सम्यक् तेन व्रतं चीर्णं दिव्यं पाशुपतं महत्॥

सम्यक्चीर्णदिव्यपाशुपतव्रतफलसमफलप्राप्तिकाम इति वाक्यम्।

काशीखण्डे,

तप्त्वा तपांसि सर्वाणि बहुकालं जितेन्द्रियैः।
यत् फलं लभ्यतेऽन्यत्र तत्काश्यामेकरात्रतः॥
त्रिरात्रमपि ये काश्यां वसन्ति नियतेन्द्रियाः।
तेषां पुनन्ति नियतं स्पृष्टाश्चरणरेणवः॥

तथा,

संवत्सरं वसंस्तत्र जितक्रोधो जितेन्द्रियः।
अपरस्वविपुष्टाङ्गः परार्थपरिवर्जकः॥
परापवादरहितः किञ्चिद्दानपरायणः।
समाः सहस्रमन्यत्र तेन तप्तं महत्तपः॥ इति।

अथ यावज्जीवकाशीवासमाहात्म्यम्।

मात्स्ये,

आदेहपतनाद्यावत् तत् क्षेत्रं यो न मुञ्चति।
न केवलं ब्रह्महत्या प्राकृतश्च निवर्त्तते॥

काशीखण्डे,

यावज्जीवं वसेद्यस्तु क्षेत्रमाहात्म्यविश्वरः।
जन्ममृत्युभयं हित्वा स याति परमां गतिम् ॥ इति।

## अथ क्षेत्रसन्न्यासविधिः।

उपपुराणे,

माघशुक्लचतुर्द्दश्यामुपोष्यैव पुरोऽहनि।
ब्राह्मणान् भोजयेत्पश्चादेकं वापि सदक्षिणम् ॥
गत्वा मौनेन च स्नानं ज्ञानवाप्यां समाचरेत्।
शुल्काम्बरधरो भूत्वा नत्वा ढुण्ढिविनायकम् ॥
दण्डपाणिं ततो नत्वा दृष्ट्वा विश्वेश्वरं च माम्।
श्रीमुक्तिमण्डपं गत्वा कुर्यात् सङ्कल्पमात्मना ॥
प्राणायामत्रयं कृत्वा जपेत्पञ्चाक्षरं मनुम्।
करिष्ये क्षेत्रसंन्यासमिति सञ्चिन्तयेद्बुधः ॥
पञ्चक्रोशाद्बहिः क्षेत्रान्न गच्छाम्यम्बिकापते।
इमं मन्त्रं पठेदुच्चैर्द्विस्त्रिः पञ्च च सप्त वा ॥
नमस्कृत्य महादेवं दण्डपाणिं ततो व्रजेत्।
साक्षीकृत्य महात्मानं दण्डपाणिं विनायकम् ॥
श्रीकालभैरवं चैव साक्षीकुर्यात् प्रयत्नतः।
एवं कृत्वा विधानेन पश्चात् कुर्याच्च भोजनम् ॥
पूर्वसञ्चितवित्तादि दद्यात् सर्वं ममाज्ञया।
सर्वपापविनिर्मुक्तो मुच्यते नात्र संशयः ॥

उपोष्यैवेति। पूर्वदिने उपोष्य चतुर्द्दश्यामनया रीत्या क्षेत्रसंन्यासं कुर्य्यादित्यर्थः। अत्र क्षत्रियस्य नाधिकारः तस्य प्रतिग्रहानधिकारेण सर्वस्वदानोत्तरं जीवनवियोगापत्तेरित्येके। वस्तुतः क्षत्रियब्रह्मचारिणामिवात्यन्तानुपपत्तौ प्राणयात्रार्थं

भिक्षाटनेऽपि न दोषः । अयं च वाराणसीक्षेत्रस्य संन्यासो न तु काश्याः ।

मध्ये प्रदक्षिणं कुर्यादसीवरणयोः कृती ।

इति सन्न्यासिनोऽसीवरणोल्लङ्घननिषेधादिति । एतानि वचनानि कल्पतरुकारादिभिरलिखितानि तन्मते यावज्जीवं वाराणसीं न मोक्ष्यामीति सङ्कल्पः कदाचित्कार्य्यः स एव सन्न्यास इति ।

अथ काशीमरणमहिमा ।

विषयासक्तचित्तोऽपि त्यक्तधर्मरतिर्नरः ।
इह क्षेत्रे मृतः सोऽपि संसारं न विशेत् पुनः ॥

काशीखण्डे काशीमधिकृत्य,

तत्रोत्क्रमणकाले तु साक्षाद्विश्वेश्वरः स्वयम् ।
व्याचष्टे तारकं ब्रह्म येनासौ तन्मयो भवेत् ॥

इत्यादिकमनुसन्धेयम् । काशीवासिना पापान्निवृत्तेन भवितव्यम् । यत्तु काश्यां पापं नोत्पद्यत एवेति, तन्न ।

यानि चेह प्रकुर्वन्ति पातकानि कृतालयाः ।
नाशयेत्तानि सर्वाणि देवः कालतनुः शिवः ॥

इति कूर्मपुराणविरोधात् ।

कृत्वापि काश्यां पापानि काश्यामेव म्रियेत चेत् ।
भूत्वा रुद्रपिशाचोऽपि पुनर्मुक्तिमवाप्स्यति ॥
काश्यां मृतानां जन्तूनां दैवात्पापकृतामपि ।
न पातो नरके तेषां तेषां शास्ताऽहमेव यत् ॥

इति काशीखण्डविरोधाच्च ।

वाराणस्यां स्थितो यो वै पातकेषु रतः सदा ।
योनिं प्रविश्य पैशाचीं वर्षाणामयुतत्रयम् ॥

पुनरेव च तत्रैव ज्ञानमुत्पद्यते ततः ।
मोक्षं गमिष्यते सोऽपि गुह्यमेतत् खगाधिप ॥

इति गरुडपुराणविरोधाच्च ।

अधर्मिष्ठस्य तत्क्षेत्रे यातनान्ते दिशेन्मतिम् ।

इति वचनाच्च । अत एव-

नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ।

इत्यस्याप्युपपत्तिः । भैरवयातनाया एव सम्भवेनादोषत्वात् । न च-

नानाहिताग्निर्नायज्ञो नाव्रती न च तस्करः ।

इत्यनेन विरोधः । काशीवासी आहिताग्निफलं यागफलं च लभते तास्कर्य्यफलं यमयातनां च नानुभवतीत्याशयात् । ननु काशीकृतपापानां तन्मरणादपि न मोक्षः ।

अशनं वसनं वासः काश्यां येषाममार्गतः ।
कीकटेन समा काशी सत्यं सत्यं खगेश्वर ॥

इति गरुडवचनादवगम्यते । तत्कथं यातनान्ते मुक्तिरिति-चेत्, न । निष्पापानां काशीमृतानां यादृशी काशी तादृशी न सपापानां, ते ह्यविलम्बेनैव विदेहकैवल्यं भजन्ते, एते पापभोगेनेतिभावात् । कीकटसाम्यमपि पापभोगानुकूलत्वेन ।

काशीखण्डे,

चराचरस्य सर्वस्य यानि कर्माणि तानि वै ।
गोचरे चित्रगुप्तस्य काशीवासकृतादृते ॥
प्रवेशो यमदूतानां न कदाचिद्द्विजोत्तम ।
मध्येकाशीपुरि क्वापि रक्षिणस्तत्र तद्गणाः ॥
स्वयं नियन्ता विश्वेश्वरस्तत्र काश्यां तनुत्यजाम् ।
तत्रापि कृतपापानां नियन्ता कालभैरवः ॥

तत्र पापं न कर्त्तव्यं दारुणा रुद्रयातना ।
अहो रुद्रपिशाचत्वं नरकेभ्योऽपि दुःसहम् ॥
पापमेव हि कर्तव्यं मतिरस्ति यदीदृशी ।
सुखेनान्यत्र कर्त्तव्यं मही ह्यस्ति महीयसी ॥
अपि कामातुरो जन्तुरेकां रक्षति मातरम् ।
अपि पापकृता काशी रक्ष्या मोक्षार्थिनैकिका ॥
परापवादशीलेन परदाराभिलाषिणा ।
तेन काशी न संसेव्या क्व काशी नियमः क्व सः ॥
अभिलष्यन्ति ये नित्यं धनं चात्र प्रतिग्रहैः ।
परस्वं कपटैर्वापि काशी सेव्या न तैर्नरैः ॥
त्यक्त्वा वैश्वेश्वरीं भक्तिं येऽन्यदेवपरायणाः ।
सर्वथा तैर्न्न वस्तव्या राजधानी पिनाकिनः ॥
अन्नार्थिनस्तु ये विप्रा ये च कामार्थिनो नराः ।
अविमुक्तं न तैः सेव्यं मोक्षक्षेत्रमिदं यतः ॥
शिवनिन्दापरा ये च वेदनिन्दापराश्च ये ।
वेदाचारप्रतीपा ये सेव्या वारणसी न तैः ॥
परद्रोहधियो ये च परेर्ष्याकारिणश्च ये ।
परोपतापिनो ये वै तेषां काशी न सिद्धये ॥ इति ।

तथा,

अन्यत्र यत्कृतं पापं तत् काश्यां परिणश्यति ।
वाराणस्यां कृतं पापमन्तर्गेहे विनश्यति ॥
अन्तर्गेहे कृतं पापं पश्चाच्च नरकावहम् ।
पिशाचनरकप्राप्तिर्गच्छत्येव बहिर्यदि ॥
न कल्पकोटिभिः काश्यां कृतं कर्म प्ररुध्यते ।
किन्तु रुद्रपिशाचत्वं जायते निरयत्रयम् ॥ इति ।

ननु

अनेन जन्मनैवेह प्राप्यते गतिरुत्तमा ।

इति वचनसङ्गतं पाद्मे काशीकृतपापस्य क्रमेलकस्य शूद्रस्य नानाजन्मश्रवणात् । तथाहि—

क्रमेलकस्तु मूषायां ध्मातो वर्षसहस्रकम् ।
तावत्कालं शीतह्रदे बुभुजे दुःखमुत्कटम् ॥
ततो निर्जलनिर्भक्ष्ये क्रमिदेहधरोऽभवत् ।
तत्रैव सारमेयोऽभूद्गलन्मांसः सुदुःखितः ॥
त्रिंशत्त्रिंशत्समाः पश्चात्तावत्कालं गजोऽभवत् ।
ततः सङ्कीर्णयोनीनि शरीराणि व्यधारयत् ॥
अथ शूद्रशरीरं तु दध्रे नाम्ना क्रमेलकः ।
ततो भैरवदूतैस्तैः स नीतो भैरवाग्रतः ॥
कालभैरवं दृष्ट्वैव रुद्रपैशाच्यमाप्तवान् ।
त्रिंशद्वर्षसहस्राणि क्षुत्तृष्णाभ्यां विवर्जितः ॥ इति,

मैवम् । योनिजशरीरान्तरं न भवतीत्यत्रैव "अनेन जन्मना" इत्यस्य तात्पर्य्यात् । भैरवाध्यानमात्रेणैव क्रमेलकादीनां यातनाशरीरसम्भवः । उक्तं च—

पातालखण्डे,

यद्यत्पापं काशिकायामवाप्तं स्थूलोत्कृष्टं ज्ञानतोऽज्ञानतो वा ।
तत्तद्भोगप्रापणायैव देहा अयोनिजा नैव स्वेच्छाविधानाः ॥

तथा,

यथा याम्ये हि नरके यातनादुःखभागिनः ।
अयोनिजाता देहाः स्युस्तद्वदत्रावधार्य्यताम् ॥

इति बहवः । वस्तुतोऽनेन जन्मनेत्यस्य काशीकृतदुष्कृतभोगाननुकूलं जन्मान्तरं न भवतीत्यत्र तात्पर्य्याभ्रानुपपत्तिग-

न्धोऽपि। अत एव काशीकृतदुष्कृतस्य कस्यचित्तत्रैव मृतस्यापि तत्तद्योनिषु दश जन्मानि पद्मपुराणे श्रूयन्ते काञ्चनमालिनीदत्तमाघस्नानपुण्येन निष्कृतिश्च। तथाहि—

अविमुक्ते कृतं पापं वज्रलेपीभवेत् दृढम्।
वज्रलेपेन पापेन तेन मे जन्म राक्षसम्॥
रौद्रं क्रूरतरं पापं सम्भूतं हिमपर्वते।
द्विजातौ गृध्रयोनौ प्राक् त्रिर्व्याघ्रो द्विःसरीसृपः॥
एकवारमुलूकश्च विड्वराहस्ततः परम्।
इदं हि दशमं जन्म राक्षसं ह्यत्र भामिनि॥
अतीतानि सहस्राणि वर्षाणां पञ्चसप्ततिः॥
ददौ सा माघजं पुण्यं तस्मै वृद्धाय रक्षसे।
शृणु राजन्विचित्रं त्वं प्रभावं माघधर्मजम्॥
तदैव प्राप्तपुण्यं मां विमुक्ता राक्षसी तनुः।
सम्भूतो देवतारूपस्तेजोभास्वरविग्रहः॥

वज्रलेपत्वं भोगनाश्यता। यदि काशीमरणोत्तरं योनिजशरीराणि नोत्पद्यन्ते तदेदमुपाख्यानमुपेक्षणीयं स्यात्। तस्मादनेन जन्मनेति काशीकृतदुष्कृतभोगाननुकूलजन्माभावपरम् अथ वा निष्पापपरमिति न किञ्चिदपचीयते इति स्मर्त्तव्यम्। एवं च भैरवेच्छानधीनयोनिजशरीरं न भवतीत्येतत्परमन्यथोक्तोपाख्यानविरोधापत्तेः। इदमपि काशीमृतस्य राक्षसजन्मादिकमत्युत्कटस्य काशीकृतपाप्मनः फलमिति पद्मपुराणादेवावसीयते।

तथाहि,

शृणु सुश्रोण्यहं काश्यां बह्वृचो वेदपारगः।

इत्याद्युक्त्वा—

वाराणस्यां कृतो घोरो मया दुष्टः प्रतिग्रहः ।
बहुधा बहुवारं च निषिद्धः कुत्सितो बहुः ॥
चण्डालस्यापि न त्यक्तो मया भद्रे प्रतिग्रहः ।
अन्यच्च पातकं भद्रे ममाभून्मूढचेतसः ॥
तन्नास्ति दुष्कृतं भद्रे मया तत्र न यत्कृतम् ।
अन्यच्च श्रूयतां दोषः क्षेत्रस्य वरवर्णिनि ॥
अविमुक्तेऽणुमात्रं हि तत्पापं मेरुतां व्रजेत् ।
न धर्मस्तु मया तत्र सञ्चितस्तत्र जन्मनि ॥
ततो बहुतिथे काले मृतस्तत्रैव शोभने ।
अविमुक्तप्रभावेण न चाहं नरकं गतः ॥

एवं च मणिकर्णिकायामादित्योपयोगादौ भुवि सार्वभौमादिपदकामनया कृतानां काश्यामुत्कटपुण्यानां भोगेन क्षये सत्येव गिरिशोपदेशादपवर्गः । एवं सत्याः सह हुतवहं प्रविष्टाया अपि । उत्कटपापेष्विव उत्कटपुण्येष्वपि तथात्वमुचितं युक्तितौल्यादिति । अत एव शिवपुराणे कस्य चिल्लुब्धकस्य काश्यामोङ्कारसमीपे प्रमीतस्य पुनर्जन्मोत्तरं मुक्तिः श्रुता ।

कालेन गच्छता चैव रुद्रावासतटे शुभे ।
पञ्चत्वं गतवांस्तत्र देवदेवस्य सन्निधौ ॥
अग्नौ प्रविष्टा सुश्रोणी तच्च गृह्य कलेवरम् ।
तेन धर्मेण राजेन्द्र द्वयं व्युष्टिरुपागमत् ॥
भवान् वै लुब्धको जातः सपत्नीको नृपेश्वरः ।इत्यादिना ।

अथ बहुकालं कृतकाशीवसतेरन्यत्र विपन्नस्य फलमभिधीयते ।

काशीखण्डे,

बहुकालमुषित्वा तु नियतेन्द्रियमानसः ।

यद्यन्यत्र विपद्येत दैवयोगाच्छुचिस्मिते ॥
सोऽपि स्वर्गे सुखं भुक्त्वा भूत्वा क्षितिपतीश्वरः ।
पुनः काशीमवाप्याथ विन्देन्नैःश्रेयसीं श्रियम् ॥
विष्णोऽविमुक्ते संवासः कर्मनिर्मूलनक्षमः ।
द्वित्राणां हि पवित्राणां निर्वाणायेह जायते ॥

निर्वाणाय, प्रायणाव्यवधाने परब्रह्मैक्यलाभाय । भोगावसाने तु सर्वेषामेव मुक्तिरिति प्रागेव प्रपञ्चितम् ।

तथा,

दुष्कृतानि विधायेह बहिः पञ्चत्वमागताः ।
तेषां गतिं प्रवक्ष्यामि शृणुत द्विजसत्तमाः ॥
वामाख्या मे गणाः सन्ति घोरा विकृतमूर्तयः ।
मूषायां ते धमन्त्यादौ क्षेत्रे दुष्कृतकारिणः ॥

इत्यादि, विविधयातनामनुभूय भैरवभ्रूभङ्गमात्रेण रुद्रपिशाचीभवन्ति ततश्च काश्यामुत्पद्य तत्रैव विपद्यापवृज्यन्ते इत्यपि प्रतिपादितम्—

अथ सङ्क्षीणपापास्ते कालभैरवदर्शनात् ।
इहैव देहिनो भूत्वा मुच्यन्ते ते ममाज्ञया ॥

इत्यन्तेन । इदमपि काशीकृतदुष्कृतस्य बहिर्विपन्नस्य काश्यां पुनर्विग्रह इति वदन्ति ।

काशीखण्डे,

देवदेव उवाच ।

अन्यत्र कृत्वा पापानि बहूनि सुमहान्ति च ।
अश्रद्दधानोऽतत्त्वज्ञो यद्यत्र च विपद्यते ॥
महिमन्यनभिज्ञोऽपि क्षेत्रस्यास्य जनार्दन ।
तस्य या गतिरुद्दिष्टा तां निशामय सुव्रत ॥

पञ्चक्रोशीं प्रविशतस्तस्य पातकसन्ततिः ।
बहिरेव प्रतिष्ठेत नान्तर्निविशते क्वचित् ॥
तथा बहिः स्थितायां च तस्य पातकसन्ततौ ।
त्रिशूलपाशपाणीनां गणानां सीमचारिणाम् ॥
प्रवेशमात्रादनघः सर्वैरेनोभिरुज्झितः । इति ।

कल्पतरुकृता तु काशीकृतदुष्कृतभोगप्रतिपादकानि वचनानि न लिखितानि । अत्र कश्चिन्माहेश्वरमायामुग्ध इदमाह— प्रतीमस्तावदेतानविमुक्तगुणान् परं त्वविमुक्ते मुक्तिजननशक्तिः कलाववसन्नेति ।

एष विश्वेश्वरो देव एषैव मणिकर्णिका ।
कलावन्तर्हिता काशी मुक्तिरत्रैव संस्थिता ॥
इत्येकाम्रमाहात्म्यप्रकरणे श्रवणात् ।
अन्तर्द्धानं कलौ याति तत्पुरं तु महात्मनः ।
अन्तर्हिते पुरे तस्मिन् पुरी तु वसते पुनः ॥
इति हरिवंशवचनाच्चेति । स प्रतिवक्तव्यः ।
ज्ञात्वा कलियुगं घोरं हाहाभूतमचेतनम् ।
अविमुक्तं न मुञ्चन्ति कृतार्थास्ते नरा भुवि ॥
इति कल्पतरुसङ्गृहीतवचनविरोधात् ।
ज्ञात्वा कलियुगं घोरमधर्मबहुलं जनाः ।
कृत्तिवासं न मुञ्चन्ति कृतार्थास्ते न संशयः ॥
इति कूर्म्मपुराणादिवचनविरोधाच्च ।
अन्तर्द्धानं कलौ याति तत्पुरं तु महात्मनः ।

इति वचनस्य का वार्त्ता । कुशलैव। मणिकाञ्चनमरीचिनिचयचुम्बितज्योतिर्मयं तत्पुरमन्तर्द्धत्त इत्याशयादिति प्राञ्चः । वस्तुतः तत्पुरं तत्पुराधिष्ठात्री देवतेत्यर्थः । पूर्वं हि प्रथमानवि-

निग्रहानुग्रहादिपटीयसी देवी चर्मचक्षुषां गोचरीबभूव न
ाविति ।

तत्र वाराणसी देवी स्थिता विग्रहरूपिणी ।
मानवानां हितार्थाय स्थिता देवस्य पश्चिमे ॥

इति वचनादिति । एवञ्च—

अन्तर्हिते पुरे तस्मिन् पुरी तु वसते पुनः ।

इत्यस्य स्वर्णादिमयपुराधिष्ठातृदेवतायामन्तर्हितायां वा-
सी पुरी यथापूर्वं फलदात्री तिष्ठत्येवेत्यर्थः । पुरं विग्रते
: स पुरी गिरीशो यथापूर्वं तत्र सन्निहित एवेति वार्थः ।
ग पुरं शरीरं महेशस्य अन्तर्द्धानं याति पुरी शरीरी महे-
वसत इत्यर्थः ।

अत एव शिवपुराणे,

अन्तर्हिते कलौ व्यासस्तस्मिंश्चायतने प्रभुः ।
अनुग्रहं च कुरुते भगवानतिवत्सलः ॥ इति ।

## अथ क्षेत्रमानम् ।

मत्स्यपुराणे,

द्वियोजनमथार्द्धं च पूर्वपश्चिमतः स्थितम् ।
अर्द्धयोजनविस्तीर्णं दक्षिणोत्तरतः स्मृतम् ॥
वरणा च नदी यावद्यावच्छुष्कनदी तथा ।
एवं क्षेत्रस्य विस्तारः प्रोक्तो देवेन धीमता ॥

शुष्कनदी असी ।

तथा,

द्वियोजनं तु तत् क्षेत्रं पूर्वपश्चिमतः स्थितम् ।
अर्द्धयोजनविस्तीर्णं दक्षिणोत्तरतः स्मृतम् ॥
वरणा च नदी यावद्यावच्छुष्कनदी तथा ।

भीमचण्डिकामारभ्य पर्वतेश्वरमन्तिके ॥

ब्रह्मपुराणे,

वरणा चाप्यसिश्चैव द्वे नद्यौ सुरवल्लभे।

अन्तराले तयोः क्षेत्रं भूमावपि विशेत्र तत् ॥

स्कन्दपुराणे,

चतुष्क्रोशं चतुर्दिक्षु क्षेत्रमेतत्प्रतिष्ठितम्।

योजनं विद्धि चार्वङ्गि मृतिकाले ऽमृतप्रदम् ॥

ब्रह्मपुराणे,

पञ्चक्रोशप्रमाणं तु क्षेत्रं दत्तं मया तव।

अत्र कल्पभेदेन परिमाणभेदो द्रष्टव्य इति मिश्राः। तच्चिन्त्यम्। वक्ष्यमाणवचनापरिज्ञानात्।

पाद्मे पातालखण्डे,

परिमाणं च वक्ष्यामि तन्निबोधत सत्तमाः।

मध्यमेश्वरमारभ्य यावद्देहलिविघ्नपम् ॥

सूत्रं संस्थाप्य तद्दिक्षु भ्रामयेन्मण्डलाकृति।

तत्र या जायते रेखा तन्मध्ये क्षेत्रमुत्तमम् ॥

काशीति यद्विदुर्देवास्तत्र मुक्तिः प्रतिष्ठिता।

काश्यां तु परमं क्षेत्रं विशेषफलसाधनम् ॥

वाराणसीति विख्यातं तन्मानं निगदामि वः।

दक्षिणोत्तरयोर्नद्यौ वरणासिश्च पूर्वतः ॥

जाह्नवी पश्चिमे चापि पाशपाणिर्गणेश्वरः।

तस्या अन्तः स्थितं दिव्यं विशेषफलसाधनम् ॥

अविमुक्तमिति ख्यातं तन्मानं च ब्रवीमि वः।

विश्वेश्वराच्चतुर्दिक्षु धनुःशतयुगोन्मितम् ॥

अविमुक्ताभिधं क्षेत्रं मुक्तिस्तत्र न संशयः।

गोकर्णेशः पश्चिमे पूर्वतश्च गङ्गामध्य उत्तरे भारभूतः।
ब्रह्मेशानो दक्षिणे संप्रदिष्टस्तत्तु प्रोक्तं भवनं विश्वभर्तुः।
विश्वभर्तुर्भवनम्, अन्तर्गृहत्वेन ख्यातम्।

एवं च काशी–वाराणसी–अविमुक्तान्तर्गृहभेदेन क्षेत्रचातुर्विध्यात् पूर्वोक्तवचनानां तत्तत्परतोपपत्तौ कल्पभेदकल्पनानवकाशात्। काशीव्याप्या वाराणसी तद्व्याप्यं चाविमुक्तं तद्व्याप्यं चान्तर्गृहम्। व्याप्यत्वं चात्र न्यूनपरिमाणत्वमिति प्राञ्चः।

वस्तुतो यदा विश्वेशाद्धनुःशतयुगमतिक्रम्य गङ्गा वहति तदा गङ्गामध्यपर्यन्तस्यान्तर्गृहस्य नाविमुक्तं व्यापकमिति ध्येयम्।

ब्रह्मपुराणे,

रुद्रं प्रति ब्रह्मवाक्यम्।

पञ्चक्रोशप्रमाणं तु क्षेत्रं दत्तं मया तव।
क्षेत्रमध्ये यदा गङ्गा गमिष्यति सरित्पतिम्॥
तेन सा महती पुण्या पुरी रुद्र भविष्यति।
पुण्या चोदङ्मुखी गङ्गा प्राची वापि सरस्वती॥
उदङ्मुखी योजने द्वे गच्छते जाह्नवी नदी।

मध्यमेश्वरात् सर्वदिक्षु क्रोशप्रमाणमित्यर्थः। अत्र क्षेत्रमध्ये इति वचनाद्यद्यपि वाराणसीमध्ये गङ्गाप्रवाहः प्रतीयते तथाप्यसीबाह्यस्य वाराणसीत्वाभावे सिद्धे क्षेत्रमध्यपदं क्षेत्रस्पर्शपरं ग्राममध्येन गत इतिवदिति मिश्राः। तदप्यसत्। क्षेत्रमध्य इत्यस्य काशीक्षेत्रमध्य इत्यर्थात् सार्द्धद्वियोजनमितायां काश्यां गङ्गायाः परतोऽपि सत्त्वात्।

अहो महालिङ्गमयं जनार्दनं पश्यामि काश्यां परमात्मरूपम्।
आनाहतो योजनपञ्चकात्मकं विस्तारि गव्यूतियुगं तु सार्द्धम्॥

इति ब्रह्मवैवर्त्तवचने योजनं क्रोश इति प्राञ्चः। पूर्वपश्चिमतः

सार्द्धद्वियोजनं दक्षिणोत्तरतः सार्द्धं द्वियोजनमिति पञ्चयोजनोपपत्तिरित्यन्ये ।

**मात्स्ये,**

द्वियोजनमथार्द्धं च पूर्वपश्चिमतः स्थितम् ।
अर्द्धयोजनविस्तीर्णं दक्षिणोत्तरतः स्थितम् ॥
वरणा च नदी यावद्यावच्छुष्कनदी तथा ।
एवं क्षेत्रस्य विस्तारः प्रोक्तो देवेन धीमता ॥

वाराणसी नदी यावदिति पाठे वाराणसी वरणा । शुष्कनदी असी । हेमाद्रौ तु वरणा च नदी यावदित्येव पाठः । अत्र प्रथमार्द्धेन काशीपरिमाणमुक्तं द्वितीयार्द्धेन वाराणसीपरिमाणम् ।

**एवं मात्स्येऽपि,**

द्वियोजनं तु विस्तीर्णं पूर्वपश्चिमतः स्मृतम् ।
अर्द्धयोजनविस्तीर्णं तत्क्षेत्रं दक्षिणोत्तरम् ॥

इत्यत्र व्याख्येयम् । अत्र द्वियोजनपदं सार्द्धद्वियोजनपरम् ।

**लिङ्गपुराणे तु,**

कृत्तिवासं समारभ्य क्रोशं क्रोशं चतुर्दिशम् ।
योजनं वै भवक्षेत्रं गणै रुद्रैश्च संयुतम् ॥

**तथा,**

क्षेत्रमध्ये यदा लिङ्गं भूमिं भित्त्वा समुत्थितम् ।
मध्यमेश्वरसंज्ञं तु ख्यातं सर्वसुरासुरैः ॥
अस्मादारभ्य लिङ्गात्तु क्रोशं क्रोशं चतुर्ष्वपि ।
योजनं विद्धि तत्क्षेत्रं मृत्युकालेऽमृतपदम् ॥

ईदृशमविमुक्तस्य परिमाणमुक्तम् । तत् एतद्वचनादविमुक्ते विकल्प इत्यन्ये । अन्तर्गृहमानमुक्तम्—

काशीखण्डे,

पूर्वे तु मणिकर्णीशो ब्रह्मेशो दक्षिणे स्थितः ।
पश्चिमे चैव गोकर्णो भारभूतस्तथोत्तरे ॥
इत्येतदुत्तमं क्षेत्रमविमुक्ते महाफलम् ।

अविमुक्ते तन्मध्ये । पूर्वे तु मणिकर्णीश इत्यनेन तदुपलक्षितं गङ्गामध्यमेव पाद्मैकवाक्यतया ग्राह्यम् । तदयं सङ्क्षेपः । मध्यमेश्वराच्चतुर्दिक्षु पञ्चपञ्चक्रोशात्मकं काशीक्षेत्रम् । तच्च—

सीमाविनायकेभ्यश्च बहिः काश्याः प्रमाणतः ।
तावत् क्षेत्रं विजानीयाद्यावद्धनुःशतत्रयम् ॥

इति वचनात् पश्चिमे भीमचण्ड्याः परतो धनु[1]शतत्रयमिततद्देशेन समं पूर्वतो गङ्गापारेण च सह वर्तुलाकारमितिगम्यते । तन्मध्ये गङ्गासीभीमचण्डीपाशपाणिवरणान्तर्गतं क्षेत्रं वाराणसी । इदमेव क्षेत्रं पञ्चक्रोशयात्रायां प्रदक्षिणीक्रियते। क्षेत्रबाहिष्ठस्यापि वृषभध्वजादेर्गमनं वचनबलात् । पाद्मे विश्वेश्वरतः परितो धनुःशतद्वयमितमविमुक्तमुक्तम् । स्कान्दलैङ्गयोस्तु मध्यमेश्वरस्य कृत्तिवाससो वा परितश्चतुर्दिक्षु क्रोशात्मकमुक्तम्। अन्तर्गृहमानं तु पूर्वतो गङ्गामध्यं दक्षिणे ब्रह्मेशो पश्चिमे गोकर्णेश उत्तरे भारभूतेश इति ।

काशीक्षेत्राद्बहिर्गच्छन्ति स्वर्गं सुकृतिनां पदम् ।

इति ब्रह्मवैवर्त्तात् ।

लिङ्गपुराणे शिववाक्यम् ।

पिङ्गलानाम या नाडी आग्नेयी सा प्रकीर्त्तिता ।
शुष्का सासीति च ज्ञेया लोलार्को यत्र तिष्ठति ॥
इडानाम्नी तु या नाडी सा सौम्या सम्प्रकीर्त्तिता ।

---

(१) अत्र किञ्चित् त्रुटितं भाति ।

वरणानाप सा ज्ञेया केशवो यत्र संस्थितः ॥
आभ्यां मध्ये तु या नाडी सुषुम्ना सा प्रकीर्त्तिता ।
मत्स्योदरी च सा ज्ञेया विषुवं तत्प्रकीर्त्तितम् ॥
विषुववत्तस्य पुण्यजनिकेत्यर्थः ।
लिङ्गपुराणे,
तत्र वाराणसी देवी स्थिता विग्रहरूपिणी ।
मानवानां हितार्थाय स्थिता देवस्य पश्चिमे ॥
वाराणसीं तु यो दृष्ट्वा भक्त्या चैव नमस्यति ।
तस्य तुष्टा च सा देवी वसतिं च प्रयच्छति ॥

अथ काश्या ध्यानम् ।

श्यामा षोडशवार्षिकी सुकरुणां मूर्त्तिं दधाना वरं
हस्ताभ्यामभयं च विश्वजननी विद्येति या गीयते ।
या दृष्टा स्मरणं गतापि बहुधा सङ्कीर्त्तिता संस्तुता
या स्पृष्टा नृभिरात्मतत्त्वममलं दद्यात् ध्रुवं काशिका ॥

अथ चतुर्विधक्षेत्रे मुक्तितारतम्यमभिधीयते ।

यद्यपि मोक्षे तारतम्यं जातिरूपं न सम्भवति तथापि सालोक्यसारूप्यसायुज्यपरममुक्तिस्वरूपा दिशः सम्भवन्त्येव । तथा चान्तर्गृहे निर्मुक्तदेहानां परममुक्तिः, तद्व्यतिरिक्ते अविमुक्ते देहमुन्मुक्तवतां सायुज्यं, तद्व्यतिरिक्तवाराणस्यामुत्सृष्टवपुषः सारूप्यं वाराणस्यनवच्छिन्नकाशीप्रदेशे प्रमीतस्य सालोक्यमिति काशीवाराणस्यविमुक्तान्तर्गृहाणामुत्तरोत्तरं फलविशेषसाधनतायाः पद्मपुराणोक्ताया अन्यथा असम्भवात् । नित्यसुखाभिव्यक्तिरूपायां मुक्तौ जातिविशेष एव कल्प्य इति कश्चित् । एवं शुचीनां सदा शिवैकतानानां तत्समर्पितकर्मणां निष्पापानामनशनादिना विपन्नानां सद्य एव परममुक्तिः, ततो

न्यूनानामग्निप्रवेशादिना विपन्नानां सायुज्यं, तिर्यक्प्रभृतीनां च पापानां सारूप्यम् असन्ताधमानां पतितानां सालोक्यम्। अन्यथा निष्पापानामेव सद्यःपरममुक्तिसम्भवे निर्जरनिम्नगादिनिमज्जननिरस्तपापानां परमशिष्टानां तदननुष्ठानप्रसङ्गात्। इयान् विशेषः। काशीकृतपापानामन्तर्गृहे विपन्नानां भैरवीययातनान्ते परममुक्तिर्निष्पापानां तु सद्य एव। एवमविमुक्तादौ विपन्नानां भोगावसाने तत्तन्मुक्तिरिति। तत्रापि निष्पापानामनशनादिना काशीक्षेत्रे यत्र क्वापि मृतानां सद्य एव परममुक्तिः। काशीमृतानां सर्वेषामेवापवर्ग इत्यविवादम्। स च सद्यः क्रमेण वेति विशेषः। तदुक्तम्—

पाद्मे,

भूमौ जले वियति वाऽशुचिमध्यतो वा
सर्पाग्निदस्युपविभिर्निहतस्य जन्तोः।
सूच्यग्रमात्रमपि नास्ति ममास्पदेऽस्मिन्
स्थानं सुरेश्वरि न यत्र मृतस्य मोक्षः॥ इति।
नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी।
ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम्॥
इति वचनाच्च।

कूर्मपुराणे,

गङ्गायां च जले मोक्षो वाराणस्यां जले स्थले।
जले स्थले चान्तरिक्षे गङ्गासागरसङ्गमे॥ इति।
काश्यां मरणे कालकृतोऽपि विशेषो नास्ति।
उत्तरं दक्षिणं वापि अयनं न विकल्पयेत्।
सर्वोऽप्यस्य शुभः कालो अविमुक्ते म्रियेत यः॥
इति काशीखण्डात्। नाप्यत्र देशकृतो विशेषः।

रथ्यान्तरे मूत्रपुरीषमध्ये चण्डालवेश्मन्यथ वा श्मशाने ।
कृतप्रयत्नोऽप्यकृतप्रयत्नो देहावसाने लभतेऽत्र मोक्षम् ॥

इति सनत्कुमारसंहितावचनात् । यद्यप्यत्रान्तर्गृहादिकृतो विशेषोऽस्त्येव तथाप्यन्तर्गृहादौ तत्तन्मुक्तौ चाण्डालाङ्गणादिप्रयुक्तो न विशेष इति भावः । क्षेत्रचातुर्विध्येन चतुर्धा मुक्तिः स्पष्टमभिहिता—

**पाद्मे,**

चतुर्विधेऽपि क्षेत्रेऽस्मिन् प्रमीतो गर्भयातनाम् ।
नैवाप्नोति मुनिश्रेष्ठा विशेषोऽयं ब्रवीमि वः ॥
काश्यां मृतस्तु सालोक्यं साक्षात्प्राप्नोति सत्तमः ।
ततः सरूपतां याति ततः सान्निध्यमश्नुते ॥
ततो ब्रह्मैकतां याति न परावर्तते पुनः ।
वाराणस्यां मृतो जन्तुः साक्षात्सारूप्यमश्नुते ॥
ततः सान्निध्यमायाति ततो ब्रह्मैकतामियात् ।
अविमुक्तविपन्नस्तु साक्षात् सान्निध्यमाप्नुयात् ॥
ततश्चिदानन्दमये ब्रह्मण्येव विलीयते ।
अन्तर्गेहे विपन्नस्तु साक्षात्कैवल्यमाप्नुयात् ॥

**तथा,**

सलोकतां च सारूप्यं सान्निध्येनापि सत्तमाः ।
कल्पं कल्पमवाप्नोति ततो ब्रह्मात्मको भवेत् ॥ इति ।

## अथ श्रीविश्वेश्वरप्रादुर्भावः ।

**कल्पतरौ लिङ्गपुराणे,**

देवदेव उवाच ।

रुचिरं स्थानमासाद्य अविमुक्तं तु मे गृहम् ।
न कदाचिन्मया मुक्तमविमुक्तं ततः स्मृतम् ॥

इत्याद्यभिधाय—

पूर्वोत्तरे दिग्विभागे तस्मिन् क्षेत्रे तु सुन्दरि ।
सुरासुरैः स्तुतश्चाहं तत्र स्थाने यशस्विनि ॥
दिव्यं वर्षसहस्रं तु स्तुतोऽहं विविधैः स्तवैः ।
उत्पन्नं मम लिङ्गं तु भित्त्वा भूमिं यशस्विनि ॥
तेषामनुग्रहार्थाय लोकानां भक्तिभावतः ।
वाराणस्यां महादेवि तत्र स्थाने स्थितो ह्यहम् ॥
तं दृष्ट्वा मनुजो देवि पशुपाशैर्विमुच्यते ।

पशुपाशैः संसारबन्धैः ।

पाद्मे तु कल्पादौ अहं पूर्वमहं पूर्वमिति वाग्युद्धं विधाय शस्त्रास्त्रैर्युद्ध्यमानयोर्ब्रह्मविष्ण्वोर्न कोऽपि पराजीयत । ततस्तु

अपश्यतामथाभ्यासे लिङ्गं तेजोमयं परम् ।
शरच्चन्द्रायुतसमप्रभाभासुरमैश्वरम् ॥
वीक्ष्य तद्व्यापकं ज्योतिर्निष्प्रभौ हि स्थितौ च तौ ।
कर्त्तव्यं नानुपश्येतामीपदागतसाध्वसौ ॥
सौम्यमेतन्महाज्योतिः सौम्यमग्रे स्थितं कुतः ।
तर्कयन्तौ विधिहरी ददृशाते तदन्तरा ॥
पुरुषं पिङ्गजटिलं दिग्वाससमलङ्कृतम् ।
भुजगैर्नृकपालैश्च कुन्देन्दुविमलद्युतिम् ॥
सं दृष्ट्वैव तयोरासीदयमेव परः पुमान् ।
इति बुद्धिस्ततस्ताभ्यां संस्तुतो वैदिकैः स्तवैः ॥

सदाशिव उवाच ।

भवद्भ्यामिदमुल्लासि मल्लिङ्गं दृष्टमद्भुतम् ।
स्तुतं च तेन प्रीतोऽहं वृणीतां वरमादिजौ ॥

तावूचतुः।

सदाशिव प्रसन्नश्चेत्त्वयि नौ निश्चला मतिः।
सदा भवतु भूतेश वरं नान्यं वृणीवहे॥
एकं पराकुरु विभो संशयं च हृदि स्थितम्।
यद्भवांस्तेजसा लिङ्गमधितिष्ठति नित्यशः॥
तत् किंसमाख्यं किंरूपं किंप्रभावं किमाश्रयम्।
एतत्सर्वं महेशान वक्तुमर्हस्यशेषतः॥

शिव उवाच।

यदेतत् परमं लिङ्गं पश्यतं पुरतः स्फुरत्।
तद्विश्वेश्वरसंज्ञं हि सच्चिदानन्दविग्रहम्॥
लयं लिङ्गशरीरस्य विश्लेषं गमयेत्परम्।
तेन लिङ्गमितिख्यातमपवर्गैकसाधनम्॥
व्यापकत्वेऽपि चैतस्य निर्विकारस्य तत्त्वतः।
परिच्छिन्नतयाऽवस्था साधारण्यापनुत्तये॥
यथा व्योमापरिच्छिन्नं शब्दहेतुतया समम्।
स्वयमेव परिच्छेदं प्राप्नोतीदमपीदृशम्॥
प्रभावः श्रूयतामस्य नित्यानन्दस्वरूपिणः।
अत्र सक्तासवः सन्तः सच्चिदानन्दरूपताम्॥
यथायोग्यं लभन्ते हि नात्र कार्य्या विचारणा।

काशीखण्डे,

काश्यां लिङ्गान्यनेकानि काश्यां तीर्थान्यनेकशः।
तथापि सेव्यो विश्वेशः स्नातव्या मणिकर्णिका॥

तथा,

सर्वलिङ्गार्च्चनात्पुण्यं यावज्जन्म यदर्च्चने।
सकृद्विश्वेशमभ्यर्च्य श्रद्धया तदवाप्यते॥

यज्जन्मनां सहस्रेण निर्मलं पुण्यमर्जितम् ।
तत्पुण्यपरिवर्त्तेन भवेद्विश्वेशदर्शनम् ॥
गवां कोटिप्रदानेन सम्यग्दत्तेन यत्फलम् ।
तत्फलं सम्यगाप्येत विश्वेश्वरविलोकनात् ॥
तथा,
येन लिङ्गमिदं दृष्टं श्रद्धया शुद्धचक्षुषा ।
साक्षात्कारेण तेनाहं दृष्ट एव न संशयः ॥
श्रवणादस्य लिङ्गस्य पातकं जन्मसञ्चितम् ।
क्षणात् क्षयति शृण्वन्तु देवा ऋषिगणैः सह ॥
स्मरणादस्य लिङ्गस्य पापं जन्मद्वयार्जितम् ।
अवश्यं नश्यति क्षिप्रं मम वाक्यान्न संशयः ॥
एतल्लिङ्गं समुद्दिश्य गृहान्निष्क्रमणक्षणात् ।
विलीयते महापापमपि जन्मत्रयार्जितम् ॥
दर्शनादस्य लिङ्गस्य हयमेधशतोद्भवम् ।
पुण्यं लभेत नियतं ममानुग्रहतोऽमराः ॥
स्वयंभुवोऽस्य लिङ्गस्य मम विश्वेशितुः सुराः ।
राजसूयसहस्रस्य फलं स्यात् स्पर्शमात्रतः ॥
पुष्पमात्रप्रदानाच्च चुलुकोदकपूर्वकम् ।
शतसौवर्णिकं पुण्यं लभते भक्तियोगतः ॥
पूजामात्रं विधायास्य लिङ्गराजस्य भक्तितः ।
सहस्रहेमकमलपूजाफलमवाप्यते ॥
विधाय महतीं पूजां पञ्चामृतपुरःसराम् ।
अस्य लिङ्गस्य लभते पुरुषार्थचतुष्टयम् ।
लिङ्गपुराणे,
बिल्वपत्रात्परं नास्ति येन तुष्यति शङ्करः ।

काशीखण्डे,

वस्त्रपूतजलैर्लिङ्गं स्नापयित्वा ममामराः।
लक्षाश्वमेधजं पुण्यं नित्यं प्राप्नोति सत्तमः॥
सुगन्धचन्दनरसैर्लिङ्गमालिप्य भक्तितः।
आलिप्यते सुरस्त्रीभिः सुगन्धियक्षकर्दमैः॥
सामोदधूपदानैश्च दिव्यगन्धाश्रयो भवेत्।
घृतदीपप्रबोधैश्च ज्योतीरूपविमानगः॥
कर्पूरगौरदेहश्रीर्भवेद्भालविलोचनः।

तथा,

विश्वेशे परमान्नं यो दद्यात् साज्यं सशर्करम्।
त्रैलोक्यं तर्पितं तेन सदेवपितृमानवम्॥
मुखवासं तु यो दद्याद्दर्पणं चारु चामरम्।
उल्लोचं सुखपर्य्यङ्कं तस्य पुण्यफलं महत्॥
मुखवासः ताम्बूलादिः। उल्लोचो वितानम्।
पूजोपकरणं द्रव्यं यो घण्टामड्डुकादिकम्॥
भक्त्या मे भवने दद्यात् स वसेदत्र मेऽन्तिके।
चित्रलेखनकर्मादि प्रासादे मेऽत्र कारयेत्॥
यः स चित्रान्महाभोगान् भुङ्क्ते मत्पुरतः स्थितः।

तथा,

यस्तु विश्वेश्वरं दृष्ट्वा ह्यन्यत्रापि विपद्यते।
तस्य जन्मान्तरे मोक्षो भवत्येव न संशयः॥
विश्वेशाख्या तु जिह्वाग्रे विश्वनाथकथा श्रुतौ।
विश्वेशशीलनं चित्ते यस्य तस्य जनिः कुतः॥

तथा,

लिङ्गं मे विश्वनाथस्य दृष्ट्वा यश्चानुमोदते।

स मे गणेषु गण्येत महापुण्यबलाश्रितः ॥
नित्यं विश्वेश विश्वेश विश्वनाथेति यो जपेत् ।
त्रिसन्ध्यं तं सुकृतिनं जपाम्यहमपि ध्रुवम् ॥

तथा,

यद्यद्धितं स्वस्य सदैव तत्तल्लिङ्गेऽत्र देयं मम भक्तिभाग्भिः ।
इहाप्यमुत्रापि न तस्य सङ्क्षयो यथेह पापस्य कृतस्य पापिभिः ॥

तथा,

यदि जातु चिदन्धकद्विषस्तव नामौष्ठपुटाद्विनिःसृतम् ।
शिवशङ्करचन्द्रशेखरेत्यसकृत्तस्य न संसृतिः पुनः ॥ इति ।

## अथ श्रीविश्वेश्वरप्रासादमाहात्म्यम् ।

काशीखण्डे,

त्रैलोक्यनगरे वात्र काशी सजगृहं मम ।
तत्रापि भोगभवनमनर्घ्यमणिनिर्मितम् ॥
मोक्षलक्ष्मीविलासाख्यः प्रासादो मेऽतिशर्मभूः ।
पतत्रिणोऽपि मुच्यन्ते यं कुर्वाणाः प्रदक्षिणम् ॥
स्वेच्छया विचरन्तः खे खेचरा अपि देवताः ।
मोक्षलक्ष्मीविलासाख्यप्रासादस्य विलोकनात् ॥
शरीराद्दूरतो याति ब्रह्महत्यापि नान्यथा ।
मोक्षलक्ष्मीविलासस्य कलशो यैर्निरीक्षितः ॥
निधानकलशास्तं तु न मुञ्चन्ति पदे पदे ।
दूरतोऽपि पताकापि मम प्रासादमूर्द्धगा ॥
नेत्रातिथीकृता यैस्तु नित्यं तेऽतिथयो मम ।
भूमिं भित्त्वा स्वयं जातस्तत्प्रासादमिषेण हि ॥
आनन्दाख्यस्य कन्दस्य कोऽप्येष परमोऽङ्कुरः । इति ।

अथाविमुक्तेश्वरमाहात्म्यम् ।

तत्र स्कान्दे,

अविमुक्तेश्वरं नाम तत् श्मशानं विमुक्तये ।
जैगीषव्येन मुनिना यत्र रुद्रोऽभिवादितः ॥
यत्र सन्ध्यामुपासित्वा ब्राह्मणः सकृदेव तु ।
सन्ध्यामुपास्तवांस्तु स्यात् पुमानृतुसमाः समाः ॥

श्मशानमित्यविमुक्तस्य नामान्तरम् ।

ब्रह्मवैवर्त्ते,

अविमुक्तेश्वरं पूज्य ब्रह्मनारायणादिभिः ।
फलं प्राप्तं तदैवाद्यं सर्वसामर्थ्यलक्षणम् ॥

मिश्रास्तु अविमुक्तेश्वर एव विश्वेश्वर इत्याहुः। तच्चिन्त्यम् । पाद्मकाशीखण्डब्रह्मवैवर्त्तेषु विश्वेश्वराविमुक्तयोर्माहात्म्यस्य यात्रायाश्च पृथक्प्रतिपादनात् ।

लिङ्गपुराणे,

अविमुक्तं सदालिङ्गं योऽत्र द्रक्ष्यति मानवः ।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥

तथा,

अविमुक्तेश्वरं लिङ्गं मम दृष्ट्वेह मानवः ।
सद्यः पापविनिर्मुक्तः पशुपाशैर्विमुच्यते ॥

काशीखण्डे,

अविमुक्तेश्वरं लिङ्गं दृष्ट्वा क्षेत्रेऽविमुक्तके ।
विमुक्त एव भवति सर्वस्मात् कर्मबन्धनात् ॥
अर्चन्ति विश्वे विश्वेशं विश्वेशोऽर्चति विश्वकृत् ।
अविमुक्तेश्वरं लिङ्गं भुक्तिमुक्तिप्रदायकम् ॥

विश्वेशोऽविमुक्तेश्वरं लिङ्गमर्चतीत्यन्वयः ।

पुराणस्थापितं लिङ्गं कस्यचित् केनचित् क्वचित् ।
किमाकृति भवेल्लिङ्गं नैतद्वेत्त्यपि कश्चन ॥
आकारमविमुक्तस्य दृष्ट्वा ब्रह्माच्युतादयः ।
लिङ्गं संस्थापयामासुर्वशिष्ठाद्यास्तथर्षयः ॥
आदिलिङ्गमितिप्रोक्तमविमुक्तेश्वरं महत् ।
ततो लिङ्गान्तराण्यत्र जातानि क्षितिमण्डले ॥
अविमुक्तेशनामापि श्रुत्वा जन्मार्जितादघात् ।
क्षणान्मुक्तो भवेन्मर्त्यो नात्र कार्या विचारणा ॥
अविमुक्तेश्वरं लिङ्गं श्रुत्वा दूरगतोऽपि वा ।
जन्मद्वयकृतात्पापात्तत्क्षणादेव मुच्यते ॥
अविमुक्ते महाक्षेत्रेऽविमुक्तमवलोक्य च ।

तथा,

स्तुत्वार्चयित्वा नत्वा च यथाशक्ति यथामति ।
अविमुक्ते विमुक्तेशः स्तूयते नम्यतेऽर्च्यते ॥

तथा,

त्रिसन्ध्यमविमुक्तेशं यो जपेन्नियतः शुचिः ।
दूरदेशविपन्नोऽपि काशीमृत्युफलं लभेत् ॥
अविमुक्तं महालिङ्गं दृष्ट्वा ग्रामान्तरं व्रजेत् ।
लब्ध्वाशु कार्य्यसंसिद्धिं क्षेमेण प्रविशेद्गृहम् ॥
ग्रामान्तरं गच्छताऽविमुक्तेश्वरं दृष्ट्वा गन्तव्यमित्यर्थः ।

अथ मुक्तिमण्डपमहिमा ।

काशीखण्डे,

नैश्रेयस्याः श्रियो धाम तद्याम्यां मण्डपोऽस्ति मे ।
तत्राहं सततं तिष्ठे तत् सदोमण्डपं मम ॥
निमेषार्द्धप्रमाणं च कालं तिष्ठति निश्चलः ।

तत्र यस्तेन वै योगः समभ्यस्तः समाः शतम् ॥
निर्वाणमण्डपं नाम तत् ख्यातं जगतीतले।
तत्रर्चं सञ्जपन्नेकां लभेत् सर्वश्रुतेः फलम् ॥
प्राणायामं तु यः कुर्यादप्येकं मुक्तिमण्डपे।
तेनाष्टाङ्गः समभ्यस्तो योगोऽन्यत्रायुतं समाः ॥
निर्वाणमण्डपे यस्तु जपेदेकं षडक्षरम्।
कोटिरुद्रेण जप्तेन यत्फलं तस्य तद्भवेत् ॥
शुचिर्गङ्गाम्भसि स्नातो यो जपेच्छतरुद्रियम्।
निर्वाणमण्डपे ज्ञेयः स रुद्रो द्विजवेशभृत् ॥
ब्रह्मयज्ञं सकृत् कृत्वा मम दाक्षिणमण्डपे।
ब्रह्मलोकमवाप्याथ परं ब्रह्माधिगच्छति ॥
धर्मशास्त्रपुराणानि सेतिहासानि चात्र यः।
पठेन्निरभिलाषः सन् स वसेन्मम वेश्मनि ॥
तिष्ठेदिन्द्रियचापल्यं यो निवार्य क्षणं कृती।
निर्वाणमण्डपेऽन्यत्र तेन तप्तं महत्तपः ॥
वायुभक्षणतोऽन्यत्र यत्पुण्यं शरदां शतम्।
तत्पुण्यं घटिकार्द्धेन मौने दाक्षिणमण्डपे ॥
मितं कृष्णलकेनापि यो दद्यान्मुक्तिमण्डपे।
स्वर्णं सौवर्णयानेन स तु सञ्चरते दिवि ॥
तत्रैकं जागरं कुर्याद्यस्मिन् कस्मिन् दिने ऽपि यः।
उपोषितोऽर्च्चयेल्लिङ्गं स सर्वव्रतपुण्यभाक् ॥
तत्र दत्त्वा महादानं तत्र कृत्वा महाव्रतम्।
तत्राधीत्याखिलं वेदं च्यवते न नरो दिवः ॥
प्रयाणं कुर्वते यस्य प्राणा मे मुक्तिमण्डपे।

(१) प्राणाः प्रयाणं कुर्वते इत्यन्वयः।

समामनुप्रविष्टोऽत्र तिष्ठेद्यावदहं खलु ॥

तथा,

मुक्तिमण्डपिकायां तु निमेषार्द्धोपवेशनात् ।
तत्र धर्मकथालापात् पुराणश्रवणादपि ॥
काश्यां निवसतामेवं धर्मराशिः पदे पदे ।

तथा,

स्मरन्ति ये मामपवर्गमण्डपे किञ्चिद्यथाशक्ति ददत्यपि स्वम्।
शृण्वन्ति पुण्याश्च कथाः क्षणं स्थिरास्ते कोटिगोदानफलं भजन्ते ॥ इति ।

अथ शृङ्गारमण्डपमाहात्म्यम् ।

काशीखण्डे,

तत्प्रासादपुरोभागे मम शृङ्गारमण्डपः ।
श्रीपीठं तद्धि विज्ञेयं निःश्रीकश्रीसमर्पणम् ॥
मदर्थं तत्र यो दद्याद्दुकूलानि शुचीन्यहो ।
माल्यानि सुविचित्राणि यक्षकर्दमवन्ति च ॥
यो वा नेपथ्यवस्तूनि पूजोपकरणान्यपि ।
स श्रियालङ्कृतस्तिष्ठेद्यत्र कुत्रापि सत्तमः ॥ इति ।

अथैश्वर्य्यमण्डपम् ।

काशीखण्डे,

मोक्षलक्ष्मीविलासाख्यप्रासादस्योत्तरे मम ।
ऐश्वर्य्यमण्डपं रम्यं तत्रैश्वर्य्यं ददाम्यहम् ॥ इति ।

अथ ज्ञानमण्डपः ।

तत्रैव,

मत्प्रासादैन्द्रादिग्भागे ज्ञानमण्डपमस्ति यत् ।
ज्ञानं दिशामि सततं तत्र मां ध्यायतां तथा ॥

भवानीराजसदने ममास्ति हि महानसम्।
यत्तत्रोपहृतं पुण्यैर्निर्विशामि मुदैव तत्॥
विशालाक्षीमहासौधे मम विश्रामभूमिका।
तत्र संसृतिखिन्नानां विश्रामं श्राणयाम्यहम्॥
नियमस्नानतीर्थं च चक्रपुष्करिणी मम।
तत्र स्नानवतां पुंसां तन्नैर्मल्यं दिशाम्यहम्॥
यदाहुः परमं तत्त्वं यदाहुर्ब्रह्म सत्तमम्।
स्वसंवेद्यं यदाहुश्च तनुत्र्यन्ते दिशाम्यहम्॥
यदाहुस्तारकं ज्ञानं यदाहुरतिनिर्मलम्।
स्वात्मारामं यदाहुश्च तनुत्रान्ते दिशमाम्यहम्॥
स्वसंवेद्यं स्वप्रकाशम्।

अथ ज्ञानवापी

स्कान्दे,
स्कन्द ज्ञानोदतीर्थस्य माहात्म्यं वद साम्प्रतम्।
ज्ञानवापीं प्रशंसन्ति यतः स्वर्गौकसोऽप्यलम्॥

स्कन्द उवाच।

कदाचित् काशीं प्रत्यागतेनेशानेन विश्वेश्वरलिङ्गे दृष्टे
तस्यैतस्य च तल्लिङ्गं दृष्ट्वेच्छेत्यभवत्तदा।
स्नापयामि महालिङ्गं कलशीशीतलैर्जलैः॥
चखान च त्रिशूलेन दक्षिणाशोपकण्ठतः।
कुण्डं प्रचण्डवेगेन रुद्रो रुद्रवपुर्धरः॥
पृथिव्यामर्हणाम्भांसि निष्क्रान्तानि तदा मुने।
ततस्तैः स्नापयाञ्चक्रे त्वस्पृष्टैरन्यदेहिभिः॥
ततो विश्वेश्वरे वरदाभायोद्यते

ईशान उवाच ।

यदि प्रसन्नो देवेशो वरयोग्योऽस्म्यहं यदि ।
तदैतदतुलं तीर्थं तव नाम्नास्तु शङ्कर ॥

विश्वेश्वर उवाच ।

त्रिलोक्यां यानि तीर्थानि भूर्भुवःस्वःस्थितान्यपि ।
तेभ्योऽखिलेभ्यस्तीर्थेभ्यः शिवतीर्थमिदं परम् ॥
शिवं ज्ञानमिति प्राहुः शिवशब्दार्थचिन्तकाः ।
तच्च ज्ञानं द्रवीभूतमिह मे महिमोदयात् ॥
अतो ज्ञानोदनामैतत्तीर्थं त्रैलोक्यविश्रुतम् ।
अस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥
ज्ञानोदतीर्थसंस्पर्शादश्वमेधफलं लभेत् ।
स्पर्शनाचमनाभ्यां च राजसूयाश्वमेधयोः ॥

अत्र यथासङ्ख्यमन्वयः । एवं च स्पर्शनस्य राजसूयसमानफलकत्वस्यापि प्रतिपादनायेदम् ।

तथा,

यत्फलं समवाप्नोति पितॄन् सन्तर्प्य पुष्करे ।
तत्फलं कोटिगुणितं ज्ञानतीर्थे तिलोदकैः ॥
सन्निहत्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ।
यत्फलं पिण्डदानेन तज्ज्ञानोदे दिने दिने ॥

सन्निहत्यामित्यस्य, प्राप्येतिशेषः । सप्तम्यर्थे द्वितीया । सुपां सुरित्यनुशासनादिति वा ।

तथा,

उपास्य सन्ध्यां ज्ञानोदे यत्पापं काललोपजम् ।
क्षणेन तदपाकृत्य ज्ञानवान् जायते द्विजः ॥

तथा, डाकिन्यादीनुपक्रम्य ।

सर्वे ते प्रशमं यान्ति शिवतीर्थजलोक्षणात्।
ज्ञानोदतीर्थपानीयैर्लिङ्गं यः स्नापयेत्सुधीः॥
सर्वतीर्थोदकैस्तेन ध्रुवं संस्नापितं भवेत्।
ज्ञानरूपोऽहमेवात्र द्रवमूर्त्तिं विधाय च॥
नापविध्वंसनं कुर्य्यां कुर्य्यां ज्ञानोपदेशनम्।
योऽष्टमूर्त्तिर्महादेवः पुराणे परिपठ्यते॥
तस्यैवाम्बुमयी मूर्त्तिर्ज्ञानदा ज्ञानवापिका।

तथा काशीखण्डे,

जलक्रीडां सदा कुर्य्यां ज्ञानवाप्यां सहोमया।
यदम्बुपानमात्रेण ज्ञानं जायेत निर्मलम्॥
तज्जलक्रीडनस्थानं मम प्रीतिकरं महत्।
अमुष्मिन् राजसदनं जाड्यहृज्जलपूरितम्॥

शिवपुराणे,

वापीजलं तु तत्रस्थं देवदेवस्य सन्निधौ।
दर्शनात् स्पर्शनात् स्नानात् कृतार्थो मानवो भुवि॥
दुर्लभं तु कलौ देवैस्तज्जलं ह्यमृतोपमम्।
तारणं सर्वजन्तूनां पानात्पापस्य नाशनम्॥

पाद्मे,

वापी तत्रास्ति वैदेह चिन्मयी देवदक्षिणे।
तदपां सेवया देव भासते ब्रह्म केवलम्॥
देवदक्षिणे देवालयदक्षिणे।

लैङ्गे,

देवस्य दक्षिणे भागे वापी तिष्ठति शोभना।
तस्यास्तदुदकं पीत्वा पुनर्जन्म न विद्यते॥
पीतपात्रेण तेनैव उदकेन सुरेश्वरि।

त्रीणि लिङ्गानि वर्द्धन्ते हृदये पुरुषस्य तु ॥
दण्डपाणिस्तु तत्रस्थो रक्षते तज्जलं सदा ।
पश्चिमं तीरमासाद्य देवदेवस्य शासनात् ॥
पूर्वेण तारको देवो जलं रक्षति सर्वदा ।
नन्दीशश्चोत्तरेणैव महाकालस्तु दक्षिणे ॥
रक्षते तज्जलं नित्यमभक्तानां तु मोहनम् ।

विष्णुरुवाच ।

ममापि सा परा देवी तनुरापोमयी शुभा ।
अप्राप्या दुर्लभा देवैर्मानवैरकृतात्मभिः ।
मानवैरप्राप्येत्यन्वयः ।
तथा,
यैस्तु तत्र जलं पीतं ते कृतार्थास्तु मानवाः ।
तेषां तु तारकं ज्ञानमुत्पत्स्यति न संशयः ॥
वापीजलेन च स्नात्वा दृष्ट्वा वै दण्डनायकम् ।
अविमुक्तं ततो दृष्ट्वा कैवल्यं लभते क्षणात् ॥ इति ।
अथ श्रीदण्डपाणिमाहात्म्यम् ।
तत्र मत्स्यपुराणे,

महादेव उवाच ।

जरामरणसन्त्यक्तः सर्वरोगविवर्जितः ।
भविष्यसि गणाध्यक्षो वरदः सर्वपूजितः ॥
अजेयश्चापि सर्वेषां योगैश्वर्यसमन्वितः ।
अन्नदश्चापि लोकेभ्यः क्षेत्रपालो भविष्यसि ॥
महाबलो महासत्त्वो ब्रह्मण्यो मम च प्रियः ।
त्र्यक्षश्च दण्डपाणिश्च महायोगी तथैव च ॥
उद्भ्रमः सम्भ्रमश्चैव गणौ ते परिचारकौ ।

तवाज्ञां च करिष्येते लोकस्योद्भ्रमसम्भ्रमौ ॥

तथा,

देवब्राह्मणविद्विष्टा देवभक्तिविनिन्दकाः ।
ब्रह्मघ्नाश्च कृतघ्नाश्च तथा नैष्कृतिकाश्च ये ॥
लोकद्विषो गुरुद्विषस्तीर्थायतनदूषकाः ।
सर्वपापरताश्चैव ये चान्ये कुत्सिता भुवि ॥
तेषां नास्तीह वासोऽत्र स्थितोऽसौ दण्डनायकः ।
अत्र स्थितः अस्मिन्नर्थे स्थित इत्यर्थः ।
रक्षणार्थं नियुक्तं वै दण्डनायकमुत्तमम् ॥
पूजयित्वा यथाशक्त्या गन्धपुष्पादिधूपनैः ।
नमस्कारं ततः कृत्वा नायकस्य तु मन्त्रवित् ॥
सर्ववर्णावृते क्षेत्रे नानाविधसरीसृपे ।
ईश्वरानुगृहीता हि गतिं गाणेश्वरीं गताः ॥ इति ।

## अथ भवानीमाहात्म्यम् ।

**सनत्कुमारसंहितायाम्,**

ये येऽभिवाञ्छन्ति समस्तभोगा-
निहापि भुक्तिं परतोऽप्यविघ्नम् ।
तेभ्यः समस्तं ददती भवानी
वसत्यजस्रं गृहिणी गृहस्य ॥

**काशीखण्डे,**

योगक्षेमं सदा कुर्याद्भवानी काशिवासिनाम् ।
तस्माद्भवानी संसेव्या सततं काशिवासिभिः ॥
गृहमध्येऽत्र विश्वेशो भवानी तत्कुटुम्बिनी ।
सर्वेभ्यः काशिसंस्थेभ्यो मोक्षभिक्षां प्रयच्छति ॥

ब्रह्मवैवर्त्ते,

दीनं वदान्यं महदल्पकं वा पुण्यं महापातकसंयुतं वा ।
आराधिता समतां संविधत्ते दयापरा भोगमोक्षैकहेतुः॥इति।

अथ मणिकर्णिकामाहात्म्यम् ।

काशिखण्डे,

संस्नाय मणिकर्णिक्यां पुण्यं प्राप्नोत्यनुत्तमम् ।
सर्वतीर्थेषु संस्नानात् यत्पुण्यं समवाप्यते ॥
तत्पुण्यमाप्यते सम्यङ्मणिकर्ण्येकमज्जनात् ।
विधिना तत्र संस्नाय मृद्गोमयकुशादिभिः ॥
स्वशाखावारुणैर्मन्त्रैर्दूर्वापामार्गदर्भकैः ।
सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम् ॥
मणिकर्ण्यां विधिस्नातः श्रद्धया तदवाप्नुयात् ।
अश्रद्धयाऽपि यः स्नातो मणिकर्ण्यां विधानतः ॥
सोऽपि पुण्यमवाप्नोति स्वर्गप्राप्तिकरं परम् ।
श्रद्धया विधिवत्स्नात्वा कृत्वा देवादितर्पणम् ॥
तिलबर्हिर्यवैः सम्यक् सर्वयज्ञफलं लभेत् ।
श्रद्दधानो विधिस्नातः कृतसर्वोदकक्रियः ॥
जपन् देवान् समभ्यर्च्य सर्वमन्त्रफलं लभेत् ।
स्नात्वा मौनेन विश्वेशदर्शनान्नियतेन्द्रियः ॥
सर्वव्रतकृतं श्रेयो लभेद्वाचंयमः शिवे । इति ।
मणिकर्णिकायां मृतस्याविशेषतो मुक्तिरिति तापनी ।

अथात्र स्नानादिफलम् ।

तत्रैव,

दशानामश्वमेधानां यज्ञानां यत्फलं स्मृतम् ।
तदवाप्नोति धर्मात्मा स्नात्वा तत्र वरानने ॥

स्वल्पमप्यत्र यो दद्यात् ब्राह्मणे वेदपारगे ।
शुभां गतिमवाप्नोति अग्निवच्चैव दीप्यते ॥
उपवासं तु यः कृत्वा विप्रान्सन्तर्पयेन्नरः ।
स सौत्रामणियज्ञस्य फलं प्राप्नोति निश्चितम् ॥

विप्रानिति बहुवचनं कपिञ्जलाधिकरणन्यायेन त्रितयपरमिति मिश्राः ।

पाद्मे व्यासं प्रति भृगुः,

गर्जन्ति सर्वतीर्थानि स्वस्वाधिष्ण्यगतान्यहो ।
केवलं बलमासाद्य सुमहन्माणिकर्णिकम् ॥
उत्क्षिप्यैकाङ्गुलिं तथ्यं श्रेष्ठिका मणिकर्णिका ।

तथा तत्रैव विष्णुवचनम् ।

विश्वेशो विश्वया सार्द्धं सदोपमणिकर्णिकम् ।
मध्यन्दिनं समासाद्य संस्नाति प्रतिवासरम् ॥
वैकुण्ठादप्यहं नित्यं मध्याह्ने मणिकर्णिकाम् ।
विगाहे पद्मया सार्द्धं मुदा परमया मुने ॥
सत्यलोकात्प्रतिदिनं हंसयानः पितामहः ।
माध्याह्निकविधानाय समायान्मणिकर्णिकाम् ॥
इन्द्राद्या देवताः सर्वा मरीच्याद्या महर्षयः ।
माध्याह्निकविधानाय समीयुर्मणिकर्णिकाम् ॥
चराचरेषु सर्वेषु यावन्तश्च सचेतनाः ।
ते सर्वे स्नातुमायान्ति मध्याह्ने मणिकर्णिकाम् ॥

ब्रह्मवैवर्त्ते,

सर्वतीर्थावगाहाच्च यत्पुण्यं स्यान्नृणामिह ।
तत्पुण्यं कोटिगुणितं मणिकर्ण्येकमज्जनात् ॥

---

१ पू० मी० अ० ११ । पा० १ । अ० ८ ।

तथा,

जप्त्वैकामपि गायत्रीं सम्प्राप्य मणिकर्णिकाम् ।
लभेदयुतगायत्रीजपनस्य फलं स्फुटम् ॥

तथा,

ब्रह्मनाले पतेद्येषामपि कीकसमात्रकम् ।
ब्रह्माण्डमण्डपान्तस्ते न विशन्ति कदाचन ॥

कीकसम् अस्थि ।

अथ मणिकर्णिकाप्रमाणम् ।

काशीखण्डे,

स्थानादमुष्मान्मम राजसौधात्
प्राच्यां मनागीशसमाश्रितायाम् ।
सव्येऽपसव्ये च कराः क्रमेण
शतत्रयी चापि शतद्वयी च ॥
हस्ताः शतं पञ्च सुरापगाया-
मुदीच्यवाच्योर्मणिकर्णिकेयम् ।

राजसौधं, राजगृहम् ।

मोक्षस्वर्द्वारयोर्मध्ये बुधा राजगृहं विदुः ।

इति वचनोक्तं ज्ञेयम् । एवं च स्वर्गद्वारादारभ्य किञ्चिदीशानकोणाश्रितायामित्यर्थः । एवं किञ्चिदाग्नेयकोणाश्रितायामित्यपि बोध्यम् । ईदृशप्राच्यां वामपार्श्वे हस्तानां शतत्रयं हरिश्चन्द्रमण्डपावधि, एवं स्वर्गद्वारादारभ्य हस्तानां शतद्वयं गङ्गाकेशवावधि, एवं हरिश्चन्द्रमण्डपगङ्गाकेशवमध्यवर्तिन्या गङ्गाया जलमादायोक्तावधिद्वयमध्ये पञ्चशतहस्तं मणिकर्णिकाप्रमाणम् । तदुक्तम्—

तत्रैव,

आगङ्गाकेशवाच्चैव आहरिश्चन्द्रमण्डपात् ।
आमध्यात् देवसरितः स्वर्द्वारान्मणिकर्णिका ॥ इति ।

अत्र च—

तिर्य्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ॥

हस्तो वितस्तिद्वितयम्—

इत्यनेनोक्तं हस्तपरिमाणं ग्राह्यम् । अन्यथा पुरुषहस्तानैयत्येन मणिकर्णिकाया अनैयत्यप्रसङ्गादिति ।

### अथ मणिकर्णिकोत्पत्तिः ।

काशीखण्डे,

कदाचिद्भगवता भर्गेण विश्वं सृजेति समादिष्टो विष्णुः ।
ततः स भगवान्विष्णुर्म्मौलावाज्ञां निधाय च ।
क्षणं ध्यानपरो भूत्वा तपस्येव मनो दधे ॥
खनित्वा तत्र चक्रेण रम्यां पुष्करिणीं हरिः ।
निजाङ्गस्वेदसन्दोहसलिलैस्तामपूरयत् ॥
समाः सहस्रं पञ्चाशत्तप उग्रं चचार सः ।
चक्रपुष्करिणीतीरे तत्र स्थाणुसमाकृतिः ॥
ततः शिवस्तत्समीपमुपेत्यान्दोलितमौलिरुवाच ।
अलं तप्त्वा महाविष्णो वरं वरय सत्तम ।

इत्युक्तस्त्वयि दृढा भक्तिरस्त्विति वव्रे । ततः शिवस्तं वरं दत्त्वोवाच—

त्वदीयस्यास्य तपसो महोपचयदर्शनात् ।
यन्मयान्दोलितो मौलिरहिश्रवणभूषण ॥
तदान्दोलनतः कर्णात्पपात मणिकर्णिका ।

मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका ॥
चक्रपुष्करिणीतीर्थं पुरा ख्यातमिदं शुभम् ।
त्वया चक्रेण खननाच्छङ्खचक्रगदाधर ॥
मम कर्णात्पपातेयं यदा च मणिकर्णिका ।
तदाप्रभृति लोकेऽत्र ख्याताऽस्तु मणिकर्णिका ॥

विष्णुरुवाच ।

मुक्ताकुण्डलपातेन तवाद्रितनयाप्रिय ।
तीर्थानां परमं तीर्थं मुक्तिक्षेत्रमिहास्तु वै ॥

अथ मणिकर्णिकाध्यानम् ।

मणिकर्णिकामधिकृत्य—
काशीखण्डे,

तस्या रूपं प्रवक्ष्यामि भक्तानां तु शुभप्रदम् ।
यद्रूपध्यानतः पुंभिराषण्मासं त्रिसन्ध्यतः ॥
प्रत्यक्षरूपिणी देवी दृश्यते मणिकर्णिका ।
चतुर्भुजा विशालाक्षी स्फुरद्भालत्रिलोचना ॥
पश्चिमाभिमुखी नित्यं प्रबद्धकरसम्पुटा ।
इन्दीवरमयीं मालां दधाना दक्षिणे करे ॥
वरोद्यते करे सव्ये मातुलुङ्गफलं शुभम् ।
कुमारीरूपिणी नित्यं नित्यं द्वादशवार्षिकी ॥
शुद्धस्फटिककान्तिश्च सुनीलस्निग्धमूर्द्धजा ।
सितप्रवालमाणिक्यरमणीयरदच्छदा ॥
प्रत्यग्रकेतकीपुष्पलसद्धम्मिल्लमस्तका ।
सर्वाङ्गमुक्ताभरणचन्द्रकान्त्यंशुका [illegible] ॥
पुण्डरीकमयीं मालां सश्रीकां बिभ्रती हृदि ।
ध्यातव्यानेन रूपेण मुमुक्षुभिरहर्निशम् ॥

(१५) [illegible] । [illegible]
श्रीहेमराजविरचितकुसुमसमेता (वेदान्तः) २
(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । (मीमांसा) २
(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३
(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । (वेदान्तः) ३
(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १६
(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् (वेदान्तः) ३
(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्तः) १४
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १
(२३) श्रीलक्ष्मीसहस्रम् – बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८
(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्तः) ... ... २
(२५) कोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्यां व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च कोडपत्राणि २
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २
(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १
(२८) शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहितः
प्रमेयरत्नार्णवश्च ... ... १
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३
(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा — संस्कारप्रकाशात्मक । सपिण्डीदीपकश्च ... ११
(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६
(३२) स्मृतिसारोद्धारः । विश्वेश्वरविश्वम्भरत्रिपाठिसंकलितः । ... ... ... ४
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... ... १
(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... २
(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १
(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २
(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्मामृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४
(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... १
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविट्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकरणं श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्रीश्रीपुरुषोत्तमजीमहाराज विरचित ३
(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाशः । ... ४
(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद. शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । १
(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

[illegible] । [illegible]
व्यासमल्ल [illegible] । अ-
महाराध्याय: ... ... ... ११

(५४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(५५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणीता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपादः । ५

(५६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय -श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता । १०

(५७) व्याकरणसिद्धान्तसुधानिधी: । पर्वतीय विश्वेश्वरसूरिविरचित: । ६

(५८) वीरमित्रोदय: । लक्षणप्रकाश: । महामहोपाध्यायश्रीमित्रमिश्रविरचित: । ७

[illegible]
[illegible] मिश्रविरचित: । [illegible]
[illegible] टीकया समलंकृत: । ४

(६०) वीरमित्रोदय: । राजनीतिप्रकाश: । महामहोपाध्यायश्रीमित्रमिश्रविरचित: । ५

(६१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत १

(६२) प्रशस्तपादभाष्यटीकासंग्रह: । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् १

(६३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेता २

(६४) वीरमित्रोदय: । तीर्थप्रकाश: । महामहोपाध्याय श्रीमित्रमिश्रविरचित: । २

पत्रादिप्रेषणस्थानम्  हरिदासगुप्त:, चौखम्बा बनारस सिटी

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 241.

# वीरमित्रोदयः ।

## तीर्थप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः ।

# VÎRAMITRODAYA,

TIRTH-PRAKÂSA

BY

MAHÂMAHOPÂDHÂYA PANDITA MITRA MISRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. X.

FASCICULUS III-२

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.
AGENTS:-
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.
*Price Rupee one.*

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२४१



साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) सत्कारत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १,२
(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया-व्याख्यया सहितम् । सम्पूर्णम् । १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) १
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता संपूर्णा (मीमांसा) ... २
(८) ब्रह्मसूत्रभाष्यम् बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णम् । ( वेदान्तः ) ६
(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २
(१०) सिद्धित्रयम् -विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्रीश्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम् वेदान्तः १
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः । सम्पूर्णः ( न्यायः ) ... ... ... ... ५
(१३) विधिरसायनम् । श्रीमप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... १
(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) ११

निर्वाणलक्ष्मीभवनं श्रीमती मणिकर्णिका ।
मन्त्रं तस्याश्च वक्ष्यामि भक्तकल्पद्रुमाभिधम् ॥
यस्यावर्त्तनतः सिद्ध्येदपि सिद्ध्यष्टकं नृणाम् ।
भृगुभवमायालक्ष्मीमदनप्रणवान् वदेत्पूर्वम् ।
मान्तं बिन्दूपेतं मणिपदमथ कर्णिके नमः प्रणवः ॥
मन्त्रः सुरद्रुमसमः समस्तसुखसन्ततिप्रदो जप्यः ।
तिथिभिः परिमितवर्णः परमपदं दिशति निशितधियाम् ॥
ॐऐंह्रींश्रींक्लींॐमं मणिकर्णिके नमःॐ इति मन्त्रोद्धारः ।
अनेन मन्त्रेण मणिकर्णिकायाः पूजादिकं कार्य्यम् । मन्त्रान्तरं तु ग्रन्थगौरवभयान्न लिखितम् ।

काशीखण्डे,

संसारचिन्तामणिरत्र यस्मात्तं तारकं सज्जनकर्णिकायाम् ।
शिवोऽभिधत्ते सहसान्तकाले तद्गीयतेऽसौ मणिकर्णिकेति ॥
चिन्तामणिरित्यन्तं शिवविशेषणम् । कर्णिकायां कर्णे ।

तथा,

मुक्तिलक्ष्मीमहापीठमणिस्तच्चरणाब्जयोः ।
कर्णिकेयं ततः प्राहुर्या जना मणिकर्णिकाम् ॥
मुक्तिलक्ष्मीमहापीठेषु मुक्तिक्षेत्रेषु मणिरित्यर्थः । एवं च मणिश्चासौ कर्णिकेति मणिकर्णिकापदव्युत्पत्तिः ।

तथा,

मणिकर्णीश्वरं लिङ्गं पुरा संस्थापितं मया ।
प्राग्द्वारेऽन्तर्गृहस्यात्र समर्च्य मोक्षकाङ्क्षिभिः ॥

काशीखण्डे,

तीर्थं श्रेष्ठतरं वीर यदाख्या मणिकर्णिका ।
चक्रपुष्करिणीतीर्थं तदादौ विष्णुना कृतम् ॥

तदाख्याकर्णनादेव सर्वपापैः प्रमुच्यते ।

तथा,

चक्रपुष्करिणी तत्र योनिचक्रनिवारिणी ।
संसारचक्रगहने यत्र स्नातो विशेन्न ना ॥ इति ।

अथ पञ्चनदबिन्दुमाधवमाहात्म्यम् ।

काशीखण्डे,

आदौ धर्मनदः पुण्यो मिश्रितो धूतपापया ।
यया धूतानि पापानि सर्वतीर्थीकृतात्मना ॥
ततोऽपि मिलिताऽऽगत्य किरणा रविणेधिता ।
यन्नामस्मरणादेव महामोहोऽन्ततां व्रजेत् ॥
ततो भागीरथी प्राप्ता तेन दैलिपिना सह ।
किरणा धूतपापा च पुण्यतोया सरस्वती ॥
गङ्गा च यमुना चैव पञ्च नद्यः प्रकीर्त्तिताः ।
अतः पञ्चनदं नाम तीर्थं त्रैलोक्यविश्रुतम् ॥
यत्राप्लुतो न गृह्णीयाद्देहं ना पाञ्चभौतिकम् ।

ना, मनुष्यः ।

तथा,

प्रयागे माघमासे तु सम्यक्स्नातस्य यत्फलम् ।
तत्फलं स्याद्दिनैकेन काश्यां पञ्चनदे ध्रुवम् ॥
स्नात्वा पञ्चनदे तीर्थे कृत्वा च पितृतर्पणम् ।
बिन्दुमाधवमभ्यर्च्य न भूयो जन्मभाग्भवेत् ॥
यावत्सङ्ख्यास्तिला दत्ताः पितृभ्यो जलतर्पणे ।
पुण्ये पञ्चनदे तीर्थे तृप्तिः स्यात्तावदाब्दिकी ॥
श्रद्धया यैः कृतं श्राद्धं तीर्थे पञ्चनदे शुभे ।
तेषां पितामहा मुक्ता नानायोनिगता अपि ॥

तथा पञ्चनदे तीर्थे यत्किञ्चिद्दीयते वसु ।
कल्पक्षयेऽपि न भवेत्तस्य पुण्यस्य सङ्क्षयः ॥

तथा,

जलैः पाञ्चनदैः पुण्यैर्वाससा परिशोधितैः ।
महाफलमवाप्नोति स्नापयित्वेष्टदेवताम् ॥

तथा,

राजसूयाश्वमेधौ च भवेतां स्वर्गसाधनम् ।
आब्रह्मघटिकाद्वन्द्वं मुक्त्यै पाञ्चनदाप्लुतिः ॥

द्वन्द्वमित्यस्य पूर्वेणान्वयः ।

तथा,

बिन्दुतीर्थे नरो दत्त्वा काञ्चनं कृष्णलोन्मितम् ।
न दरिद्रो भवेत्क्वापि न सुवर्णैर्विमुच्यते ॥

काशीखण्डे,

मापते मम नाम्नात्र तीर्थे पञ्चनदे शुभे ।
अभक्तेभ्योऽपि भक्तेभ्यः स्थितो मुक्तिं सदा दिशे ॥

आदावग्निबिन्दुना वरे याचिते विष्णुः प्राह—

त्वन्नाम्नोऽर्धेन मे नाम त्वया सह भविष्यति ।
बिन्दुमाधव इत्याख्या मम त्रैलोक्यविश्रुता ॥
काश्यां भविष्यति मुने महापापौघनाशिनी ॥
ये मामत्र नराः पुण्याः पुण्ये पञ्चनदे ह्रदे ।
सदा समर्चयिष्यन्ति तेषां संसारभीः कुतः ॥

इत्यादि । कार्त्तिके तु विशेषः—

तत्रैव,

शतं समाः तपस्तप्त्वा कृते यत् प्राप्यते फलम् ।

तत्कार्त्तिके पञ्चनदे सकृत्स्नानेन लभ्यते ॥
इष्टापूर्त्तेषु धर्मेषु यावज्जन्मकृतेषु यत् ।
अन्यत्र स्यात् फलं तत्स्यादूर्जे धर्मनदाप्लवात् ।
गोभूतिलहिरण्याश्च वासोऽन्नस्रग्विभूषणम् ।
यत्किञ्चिद्बिन्दुतीर्थेऽत्र दत्त्वाऽक्षयमवाप्नुयात् ॥
एकामप्याहुतिं दत्त्वा समिद्धेऽग्नौ विधानतः ।
पुण्ये धर्मनदे तीर्थे कोटिजन्मफलं लभेत् ॥
तथा,
कार्त्तिके बिन्दुतीर्थे यो ब्रह्मचर्यपरायणः ।
स्नास्यत्यनुदिते भानौ भानुजात्तस्य भीः कुतः ॥
तथा,
यं सञ्चयन्ति पापौघमावर्षं तीर्थनायके ।
तमेकमज्जनादूर्जे त्यजेत् पञ्चनदे ध्रुवम् ॥

अथ विदारनरसिंहगोपीगोविन्दलक्ष्मीनरसिंहमाहात्म्यानि ।

काशीखण्डे,
विदारनारसिंहाख्यं तीर्थं तत्रास्ति पावनम् ।
यत्रैकस्नानतो नश्येदघं जन्मशतार्जितम् ॥
तथा,
गोपीगोविन्दतीर्थं च ततो वैष्णवलोकदम् ।
यस्मिन् स्नातो नरो विद्वान्न विद्याद्गर्भवेदनाम् ॥
लक्ष्मीनृसिंहतीर्थं च गोपीगोविन्ददक्षिणे ।
निर्वाणलक्ष्म्या यत्रत्यो व्रियते तु नरोत्तमः ॥

अथ गभस्तीशः ।

लिङ्गपुराणे,

नरः पञ्चनदे स्नात्वा दृष्ट्वा लिङ्गं गभस्तिनः।
अनन्तं फलमाप्नोति यत्र यत्राभिजायते॥

काशीखण्डे,

अर्चयित्वा गभस्तीशं स्नात्वा पञ्चनदे नरः।
न जातु जायते जन्तुर्जठरे धूतकिल्बिषः॥

लिङ्गपुराणे,

गभस्तीश्वरनामानं लिङ्गं पश्चान्मुखं स्थितम्।
इत्याद्यभिधाय—
तं दृष्ट्वा मानवो देवि ऐशानं लोकमाप्नुयात्।
तस्य दक्षिणपार्श्वे तु दधिकर्णह्रदं स्थितम्॥ इत्यादि।

अथ मङ्गलागौरी।

काशीखण्डे,

एषाऽसौ मङ्गलागौरी काश्यां परममङ्गले।
यत्प्रसादादवाप्नोति नरोऽत्र च परत्र च॥
मङ्गलास्तोत्रं तत्रैवानुसन्धेयम्।

तथा,

वन्ध्यापि वर्षपर्यन्तं स्नात्वा पञ्चनदे ह्रदे।
समर्च्य मङ्गलागौरीं पुत्रं जनयति ध्रुवम्॥

तथा,

त्वामुद्दिश्य तु देवेशि ब्राह्मणान् ब्राह्मणीश्च ह।
भोजयिष्यति देवेशि तस्य पुण्यफलं शृणु॥
तव लोके वसेत् कल्पमिहैवागच्छते पुनः।
नरो वा यदि वा नारी सर्वभोगसमन्वितौ॥
धनधान्यसमायुक्तौ जायेतेऽत्र महाकुले।

इत्यादि बोध्यम् ।

लैङ्गे,

आराधयन्ति देवि त्वामुत्तराभिमुखीं स्थिताम् ।
ये च त्वां पूजयिष्यन्ति तस्मिन् स्थाने स्थितो दृढम् ॥
तेषां त्वं विविधान् लोकान् सम्प्रदास्यसि मानवे ।
जागरं ये प्रकुर्वन्ति तवाग्रे दीपधारिणः ॥
तेषां त्वमक्षयान् लोकान् वितरिष्यसि भामिनि ।
आलयं ये प्रकुर्वन्ति तवार्थे वरवर्णिनि ॥
तेषां त्वमक्षयान् लोकान् प्रयच्छसि न संशयः ।
आलयं ये प्रकुर्वन्ति भूमिं सम्मार्ज्जयन्ति च ॥
तेषामष्टसहस्रस्य सुवर्णस्य फलं भवेत् । इति ।

अथ दक्षेशः ।

दक्षं प्रति शिवः ।
यत्त्वया स्थापितं लिङ्गमेतद्दक्षेश्वराभिधम् ।
अस्य संसेवनात्पुंसामपराधसहस्रकम् ॥
क्षमिष्येऽहं न सन्देहस्तस्मात्पूज्यमिदं जनैः । इति ।

अथ दशाश्वमेधतीर्थम् ।

काशीखण्डे, पद्मभूरितिप्रक्रम्य ।
इयाज दशभिः काश्यामश्वमेधैर्महामखैः ।
पुरा रुद्रसरोनामतत्तीर्थं कलसोद्भव ॥
दशाश्वमेधिकं पश्चाज्जातं विधिपरिग्रहात् ।
स्वर्धुन्यथ ततः प्राप्ता भगीरथसमागमात् ॥
अतीव पुण्यवज्जातमतस्तत्तीर्थमुत्तमम् ।
तथा,

दशाश्वमेधिकं प्राप्य सर्वतीर्थोत्तमोत्तमम् ।
यत्किञ्चित्क्रियते कर्म तदक्षयमिहेरितम् ॥

तथा,

दशाश्वमेधिके तीर्थे सकृत्स्नात्वा नरोत्तमः ।
दृष्ट्वा दशाश्वमेधेशं सर्वपापैः प्रमुच्यते ॥

तथा तत्रैव,

उदग्दशाश्वमेधान्मां प्रयागाख्यं च माधवम् ।
प्रयागतीर्थे सुस्नातो दृष्ट्वा पापैः प्रमुच्यते ॥

तथा,

गङ्गोत्तरवहा यत्र यमुना पूर्ववाहिनी ।
तत् सम्भेदं नरः प्राप्य मुच्यते ब्रह्महत्यया ॥
वपनं तत्र कर्त्तव्यं पिण्डदानं च भावतः ।
देयानि तत्र दानानि महाफलमभीप्सुना ॥
प्रयागेशं महालिङ्गं तत्र तिष्ठति कामदम् ।
तत्सान्निध्याच्च तत्तीर्थं कामदं परिकीर्तितम् ॥

तथा,

मुने धरणिवाराह प्रयागेश्वरसन्निधौ ।
स्नात्वा वराहतीर्थेऽत्र दृष्ट्वा मां किणरूपिणम् ॥
सम्पूज्य बहुभावेन न विशेद्योनिसङ्कटम् ।

किणो वराहः ।

तथा,

बन्दीतीर्थं तु तत्रैव महानिगडभञ्जनम् ।
यत्र स्नातो विमुच्येत सर्वस्मात् कर्मपाशतः ॥

तथा,

असौ वन्दी महादेवी नित्यं त्रैलोक्यवन्दिता ।
निगडस्थानपि जनान् शापान्मोचयति स्मृता ॥

अथ शूलटङ्कः ।

काशीखण्डे,

प्रयागात्तीर्थराजाच्च शूलटङ्को महेश्वरः ।
तीर्थराजेन सहितः स्थित आगत्य वै स्वयम् ॥

तथा,

प्रयागस्नानजात् पुण्यात् शूलटङ्कविलोकनात् ।
स प्राप्नुयान्न सन्देहः पुण्यं कोटिगुणोद्भवम् ॥

अथ भैरवमहिमा ।

काशीखण्डे,

कालवद्राजसे साक्षात् कालराजस्ततो भवान् ।
विश्वं भर्तुं समर्थोऽसि भरणाद्भैरवः स्मृतः ।
आमर्दक इति ख्यातिं ततः सर्वत्र यास्यसि ॥
यतः पापानि भक्तानां भक्षयिष्यसि तत्क्षणात् ।
पापभक्षण इत्येव तत्र नाम भविष्यति ॥
आधिपत्यं च काश्यां ते कालराज सदैव हि ॥
अत्र ये पापकर्त्तारस्तेषां शास्ता त्वमेव हि ।

तथा,

पापभक्षणमासाद्य कृत्वा पापशतान्यपि ।
कुतो बिभेति पापेभ्यः कालभैरवसेवकः ॥
आमर्दयति पपानि दुष्टानां च मनोरथान् ।
आमर्दक इति ख्यातस्ततोऽसौ कालभैरवः ॥
कलिं कालं कलयति सदा काशीनिवासिनाम् ।

अतः ख्यातिं परां प्राप्तः कालभैरवसंज्ञिताम् ।
सदैव यस्य भक्तेभ्यो यमदूताः सुदारुणाः ॥
परमां भीरुतां प्राप्तास्ततोऽसौ भैरवः स्मृतः ।
तथा,
यत्किञ्चिदशुभं कर्म कृतं मानुषबुद्धिभिः ।
तत्सर्वं विलयं याति कालभैरवदर्शनात् ॥
विश्वेश्वरेऽपि ये भक्ता नो भक्ताः कालभैरवे ।
काश्यां ते विघ्नसङ्घातं लभन्ते तु पदे पदे ॥
तीर्थे कालोदके स्नात्वा कृत्वा तर्पणमादृतः ।
विलोक्य कालराजं च निरयादुद्धरेत् पितॄन् ॥
तथा,
आमर्द्दकेश्वरं दृष्ट्वा तस्मिन् क्षेत्रे तु यत् कृतम् ।
तत्सर्वं नश्यते पापं कालभैरवरूपिणम् ॥
तथा,
तथैव भैरवाश्चाष्टौ दिक्ष्वष्टासु प्रतिष्ठिताः ।
रक्षन्ति सततं काशीं निर्वाणश्रीनिकेतनम् ॥
रुरुश्चण्डोऽसिताङ्गश्च कपाली क्रोधनस्तथा ।
उन्मत्तभैरवस्तद्वत् क्रमात्संहारभीषणौ ॥ इति ।

अथ षट्पञ्चाशद्गणेशाः ।

काशीखण्डे बहुभिः श्लोकैरुक्ताः सङ्क्षिप्योच्यन्ते । असिसङ्गमेऽर्कविनायकः[१] क्षेत्राद्दक्षिणे दुर्गाविनायकः २ भीमचण्डीसमीपे भीमचण्डविनायकः ३ क्षेत्रपश्चिमे देहलि-वि० ४ क्षेत्राद्वायव्ये उद्दण्डवि० ५ क्षेत्रोत्तरे पाशपाणिवि० ६ वरणासङ्गमे खर्ववि० ७ क्षेत्रप्राच्यां सिद्धिवि०[२] ८ एते अष्टौ

१ दुर्गाकुण्डे । २ मणिकर्णिकायाम् ।

बाह्यावरणे। अर्कविनायकादुत्तरतो लम्बोदरवि० ९ दुर्गविनायकादुत्तरे कूटदन्तवि० १० भीमचण्डविनायकादीशाने शालकटङ्कटवि० ११ देहलिविनायकात् प्राच्यां कूष्माण्डविनायकः १२ उद्दण्डादाग्नेय्यां मुण्डवि० १३ पाशपाणेर्दक्षिणे विकटद्विजवि० १४ खर्वान्नैर्ऋत्यां राजपुत्रवि० १५ तस्माद्दक्षिणे प्रणववि० १६ एतेऽष्टौ द्वितीयावरणे। लम्बोदरादुदीच्यां वक्रतुण्डवि० १७ कूटदन्तादुत्तरे एकदन्तवि० १८ शालकटङ्कटादीशाने त्रिमुखवि० १९ कूष्माण्डात्पूर्वतः पञ्चास्यवि० २० मुण्डात् आग्नेय्यां हेरम्बवि० २१ विकटदन्ताद्दक्षिणतो विघ्नराजवि० २२ राजपुत्रान्नैर्ऋत्यां वरदवि० २३ प्रणवाद्याम्यां मोदकप्रियवि० २४ एतेऽष्टौ तृतीयावरणे। वक्रतुण्डादुत्तरेऽभयदवि० २५ एकदन्तादुत्तरे सिंहतुण्डवि० २६ त्रिमुखादैशान्यां कूणिताक्षवि० २७ पञ्चास्यात्प्राच्यां क्षिप्रप्रसादनवि० २८ हेरम्बादाग्नेय्यां चिन्तामणिवि० २९ विघ्नराजाद्दक्षिणे दन्तहस्तवि० ३० वरदान्नैर्ऋते पिचिण्डिलवि० ३१ मोदकप्रियाद्दक्षिणे उद्दण्डमुण्डवि० ३२ एतेऽष्टौ चतुर्थावरणे। अभयदादुत्तरे स्थूलदन्तवि० ३३ सिंहतुण्डादुत्तरे कलिप्रियवि० ३४ कूणिताक्षादीशाने चतुर्दन्तवि० ३५ क्षिप्रप्रसादनात् प्राच्यां द्वितुण्डवि० ३६ चिन्तामणेराग्नेये ज्येष्ठविनायकः ३७ दन्तहस्ताद्याम्यां गजवि० ३८ पिचिण्डिलाद्दक्षिणे कालवि० ३९ उद्दण्डमुण्डाद्याम्यां नागेशवि० ४० एतेऽष्टौ पञ्चमावरणे। विश्वेश्वरात् प्राच्यां मणिकर्णवि० ४१ आग्नेये आशाविनायकः ४२ दक्षिणे सृष्टिवि० ४३ नैर्ऋत्यां यक्षवि० ४४ पश्चिमे गजकर्णवि० ४५ वायव्ये चित्रघण्टवि० ४६ उत्तरे स्थूलजङ्घ-

---

१ यस्य कपिसिंहगजमुखाकाराणि त्रीणि मुखानि सन्ति।
२ गङ्गातीरे पिशङ्गिलातीर्थे। ३ पिलिपिलातीर्थे।

वि० ४७ ईशाने मङ्गलवि० ४८ एते षष्ठावरणे । मोदप्रमोदसुमुखदुर्मुखगणनाथज्ञानद्वाराविमुक्तविनायका अष्टौ प्रागादिक्रमेण सप्तमावरणे । इति षट्पञ्चाशद्गणेशाः ।

षट्पञ्चाशद्गजमुखानेतान् यः संस्मरिष्यति ।
दूरदेशान्तरस्थोऽपि स मृतो ज्ञानमाप्नुयात् ॥
इमे गणेश्वराः सर्वे स्मर्त्तव्या यत्र कुत्रचित् ।
महाविपत्समुद्रान्तःपतितं पान्ति मानवम् ॥ इति ।

अथावश्यकानि तीर्थानि ।

ब्रह्मवैवर्त्ते,

आवश्यकानि तीर्थानि शृण्वन्तु मुनिसत्तमाः ।
अस्नानात् प्रत्यवायी स्यादविमुक्ते स्थितो नरः ॥

इत्यभिधाय गङ्गास्नानं ततो मणिकर्णिकास्नानं ततः पञ्चनदे स्नानं ततो वरणासङ्गमे ततो दशाश्वमेधे ततोऽसिसङ्गमे स्नानमुक्तम् । इदं तु शक्ततरलोकाभिप्रायम् । दुर्बलानां प्रत्यहं तत्रासामर्थ्यात् । नूतनागताभिप्रायेणेदमित्यन्ये ।

अथ नित्ययात्रा ।

ब्रह्मवैवर्त्ते,

भगवानुवाच ।

प्रातः प्रातः समुत्थाय ढुण्ढिराजं नमेत्पुनः ।
भवानीशङ्करं पश्चात् कालभैरवमेव च ॥
दण्डपाणिं गणेशांश्च केशवादिं च चण्डिकाः ।
ततः शौचादिकं कृत्वा दन्तधावनपूर्वकम् ॥
स्नानमुत्तरवाहिन्यां[1] श्रुत्यादिषु यथोदितम् ।
ततः सन्ध्यातर्पणादि विधाय स्वाधिकारतः ॥

१ ज्ञानवाप्यामिति शेषः ।

विश्वेश्वरं स्मरन् गच्छेत् पूजासाधनसंयुतः ।
आदौ देव्या मण्डपं सम्प्रविश्य तत्र स्थित्वा पूजयेद्वै भवानीम्।
साङ्गोपाङ्गैरागमोक्तैर्विधानैः स्तुत्वा नत्वा प्रार्थयेदन्नदात्रीम् ॥
सर्वेषां विघ्नहर्तॄणां कर्तॄणामपि सेश्वरी ।
अतो भवान्यधीनं हि क्षेत्रं पूज्या ततः परा ॥
काशीखण्डे भवानीं प्रक्रम्य—
अष्टौ प्रदक्षिणा देयाः प्रत्यहं भक्तितत्परैः । इति ।
ततो भवानीं प्रार्थयेत् ।
मातर्भवानि ! तव पादरजो भवानि
मातर्भवानि ! तव दासतरो भवानि ।
मातर्भवानि ! न भवानि यथा भवेऽस्मि-
स्त्वद्भाग्भवान्यनुदिनं न पुनर्भवानि ॥
तिष्ठता गच्छता वापि स्वपता जाग्रतापि वा ।
अयं मन्त्रः सदा जप्यः सुखाप्त्यै काशिवासिना ॥
भवानीस्तुतिर्विस्तरभिया नालेखि ।
ततो ढुण्ढिं गत्वा मधुरतरनैवेद्यविभवै-
रुपास्य स्तुत्वा तं त्रिविधभयविघ्नादिशमनम् ।
अयं नित्यः प्रोक्तो विधिरतुलसौख्यैकसुखद-
श्चतुर्थ्यां नो यस्य प्रभवति स किं सौख्यनिलयः ॥
नित्यस्यापि चतुर्थ्यामनुष्ठाने फलातिशयः संयोगपृथक्त्वन्यायात्[1] ।

## अथ ढुण्ढिस्तुतिः ।

काशीखण्डे,

---

[1] पू० मी० अ० ४ । पा० ३ । अ० ३ ।

श्रीकण्ठ उवाच।
जय विघ्नकृतामाद्य भक्तनिर्विघ्नकारक।
अविघ्नविघ्नशमन महाविघ्नैकविघ्नकृत्॥
जय सर्वगणाधीश जय सर्वगणाग्रणीः।
गणप्रणतपादाब्ज गणनातीतसद्गुण॥
जय सर्वग सर्वेश सर्वबुद्ध्यैकशेवधे॥
सर्वमायाप्रपञ्चज्ञ सर्वकर्माग्रपूजित।
सर्वमङ्गलमङ्गल्य जय त्वं सर्वमङ्गल॥
अमङ्गलोपशमन महामङ्गलहेतुक।
जय सृष्टिकृतां वन्द्य जय स्थितिकृतां वर।
जय संहृतिकृत्पूज्य जय सत्कर्मसिद्धिद॥
सिद्धवन्द्यपदाम्भोज जय सिद्धिविनायक।
सर्वसिद्ध्यैकनिलय महासिद्ध्यर्द्धिसूचक॥
अशेषगुणनिर्माण गुणातीतगुणाग्रणीः।
परिपूर्णचरित्रार्थ जय त्वं गुणवर्जित॥
जय सर्वबलाधीश बलारातिबलप्रद।
बलाकोज्ज्वलदन्ताग्र बालाऽबालपराक्रम॥
अनन्तमहिमाधार धराधरविदारण।
दन्ताग्रप्रोतदिङ्नाग जय नागविभूषण॥
ये त्वां नमन्ति करुणामयदिव्यमूर्त्ते
सर्वैनसामपि भुवो भुवि मुक्तिभाजः।
तेषां सदैव हरसीश महोपसर्गान्
स्वर्गापवर्गमपि सम्प्रददासि तेभ्यः॥
ये विघ्नराज भवता करुणाकटाक्षैः
सम्प्रेक्षिताः क्षितितले क्षणमात्रमत्र।

तेषां क्षयन्ति सकलान्यपि किल्बिषाणि
लक्ष्मीः कटाक्षयति तान् पुरुषोत्तमान् हि ॥
ये त्वां स्तुवन्ति नतविघ्नविघातदक्ष
दाक्षायणीहृदयपङ्कजतिग्मरश्मे ।
स्तूयन्त एव त इह प्रथिता न चित्रं
चित्रं तदत्र गणपा यदहो तदेव ॥
ये शीलयन्ति सततं भवतोऽङ्घ्रियुग्मं
ते पुत्रपौत्रधनधान्यसमृद्धिभाजः ।
संशीलिताङ्घ्रिकमला बहुभृत्यवर्गै-
र्भूपालभोग्यकमलां विमलां लभन्ते ॥
त्वं कारणं परमकारण कारणानां
वेद्योऽसि वेदविदुषां सततं त्वमेकः ।
त्वं मार्गणीयमसि किञ्चन मूलवाचां
वाचामगोचर चराचरदिव्यमूर्ते ॥
वेदा विदन्ति न यथार्थतया भवन्तं
ब्रह्मादयोऽपि न चराचरसूत्रधार ।
त्वं हंसि पासि विदधासि समस्तमेकः
कस्ते स्तुतिव्यतिकरो मनसाप्यगम्यः ॥
त्वद्दुष्टदृष्टिविशिखैर्निहताग्निहान्मि
दैत्यान् पुरान्धकजलन्धरमुख्यकांश्च ॥
कस्यास्ति शक्तिरिह यस्त्वदृतेऽपि तुच्छं
वाञ्छेद्विधातुमिह सिद्धिद कार्यजातम् ॥
अन्वेषणे ढुढिरयं प्रथितोऽस्ति धातुः
सर्वार्थढुण्ढिततया तव ढुण्ढिनाम ।
काशीप्रवेशमपि को लभतेऽत्र देही

तोषं विना तव विनायकढुण्ढिराज ॥
ढुण्ढे प्रणम्य पुरतस्तव पादपद्मं
यो मां नमस्यति पुमानिह काशिवासी ।
तत्कर्णमूलमधिगम्य पुरा दिशामि
तत् किंचिदत्र न पुनर्भवितास्ति येन ॥
स्नात्वा नरः प्रथमतो मणिकर्णिकाया-
मुद्धूलिताङ्घ्रियुगलस्तु सचैलमाशु ।
देवर्षिमानवपितॄनपि तर्पयित्वा
ज्ञानोदतीर्थमभिलभ्य भजेत यस्त्वाम् ॥
सामोदमोदकभरैर्वरधूपदीपै-
र्माल्यैः सुगन्धबहुलैरनुलेपनैश्च ।
सम्प्रीण्य काशिनगरीफलदानदक्षं
प्रोक्त्वाथ मां क इह सिद्ध्यति नैव ढुण्ढे ॥
तीर्थान्तराणि च ततः क्रमवर्जितोऽपि
संसाधयन्निह भवत्करुणाकटाक्षैः ।
दूरीकृतस्त्वहितघात्युपसर्गवर्गो
ढुण्ढे लभेदविकलं फलमत्र काश्याम् ॥
यः प्रत्यहं नमति ढुण्ढिविनायकं त्वां
काश्यां पुरि प्रतिहताखिलविघ्नसङ्घः ।
नो तस्य जातु जगतीतलवर्त्तिवस्तु
दुष्प्रापमत्र च परत्र च किञ्चनापि ॥
यो नाम ते जपति ढुण्ढिविनायकस्य
तद्वै जपन्त्यनुदिनं हृदि सिद्धयोऽष्टौ ।
भोगान् विभुज्य विविधान् विबुधोपभोग्यान्
निर्वाणया कमलया व्रियते स चान्ते ॥

दूरस्थितोऽप्यह रहस्तव पादपीठं
यः संस्मरेत् सकलसिद्धिद ढुण्ढिराज ।
काशिस्थितेरविकलं स फलं लभेत
नैवान्यथा न वितथा मम वाक् कदाचित् ॥
जाने विघ्नानसङ्ख्यातान् विनिहन्तुमनेकधा ।
क्षेत्रस्यास्य महाभाग नानारूपैरिह स्थितः ॥
यानि यानि च रूपाणि यत्र यत्र च तेऽनघ ।
तानि तत्र च वक्ष्यामि शृण्वन्त्वेते दिवौकसः ॥
प्रथमं ढुण्ढिराजोऽसि मम दक्षिणतो मनाक् ।
आढुण्ढे सर्वभक्तेभ्यः सर्वार्थान् सम्प्रयच्छसि ॥
अङ्गारवासरवतीमिह यश्चतुर्थीं
सम्प्राप्य मोदकभरैः परिमोदवद्भिः ।
पूजां विधाय विविधां तव गन्धमाल्यै-
स्तानप्यमुत्र विदधासि गणान् गणेश ॥
ये त्वामिह प्रतिचतुर्थि समर्चयन्ति
ढुण्ढे विगाढमतयः कृतिनस्त एव ।
सर्वापदां शिरसि वामपदं निधाय
सम्यग्गजानन गजाननतां लभन्ते ॥
माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः ।
ये त्वां ढुण्ढेऽर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्रुहाम् ॥
विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीम् ।
तापसीं माघीम् ।
शुक्लां शुक्लतिलैर्बद्धा प्राश्नीयात् लड्डुकान् व्रती ॥
कार्य्या यात्रा प्रयत्नेन क्षेत्रसिद्धिमभीप्सुभिः ।
तस्यां चतुर्थ्यां त्वत्प्रीत्यै ढुण्ढे सर्वोपसर्गहृत् ॥

तां यात्रां नात्र यः कुर्यान्नैवेद्यं तिललड्डुकैः।
उपसर्गसहस्रैस्तु स हन्तव्यो ममाज्ञया॥
होमं तिलाज्यद्रव्येण यः करिष्यति भक्तितः।
तस्यां चतुर्थ्यां मन्त्रेण तस्य मन्त्रः प्रसेत्स्यति॥
वैदिकोऽवैदिको वापि यो मन्त्रस्ते गजानन!।
जप्तस्त्वत्सन्निधौ ढुण्ढे! सिद्धिं दास्यति वाञ्छिताम्॥

ईश्वर उवाच।

इमां स्तुतिं मम कृतिं यः पठिष्यति सन्मतिः।
न जातु तं तु विघ्नौघाः पीडयिष्यन्ति निश्चितम्॥
ढौण्ढी स्तुतिमिमां पुण्यां यः पठेत् ढुण्ढिसन्निधौ।
सान्निध्यं तस्य सततं भजेयुः सर्वसिद्धयः॥
इमां स्तुतिं नरो जप्त्वा परं नियतमानसः।
मानसैरपि पापैस्तु नाभिभूयेत कर्हिचित्॥
पुत्रान् कलत्रं क्षेत्राणि वराश्वान् वरमन्दिरम्।
प्राप्नुयाच्च धनं धान्यं ढुण्ढिस्तोत्रं जपन्नरः॥
सर्वसम्पत्करं नाम स्तोत्रमेतन्मयेरितम्।
प्रजप्तव्यं प्रयत्नेन मुक्तिकामेन सर्वदा॥
जप्त्वा स्तोत्रमिदं पुण्यं क्वापि कार्ये गमिष्यतः।
पुंसः पुरः समेष्यन्ति नियतं सर्वसिद्धयः॥

इति ढुण्ढिराजविनायकस्तवः।

गच्छेत्ततो विश्वपतिं महामतिः प्रदक्षिणीकृत्य सुतारतीर्थम्।
स्नात्वा ततो दण्डपतिं प्रणम्य सम्पूज्य निर्वाणगतं च पञ्चकम्॥

सुतारतीर्थं ज्ञानवापीम्। दण्डपतिं दण्डपाणिम्। निर्वाणमण्डपगतं देवतापञ्चकं काशीखण्डे प्रपञ्चितम्।

आदित्यं द्रौपदीं विष्णुं दण्डपाणिं महेश्वरम्। इति।

ततो विश्वेश्वरं गत्वा स्नापयेत् पञ्चकैः शुभैः ।
स्नापयेच्च ततो गाङ्गैस्तोयै रुद्रपुरस्कृतैः ॥
गन्धपुष्पप्रधूपैश्च दीपैर्नैवेद्यकैरपि ।
नानाविधैश्चोपहारैर्यथाविभवसंस्कृतैः ॥
पूजयित्वा महादेवं काशीनाथं जगद्गुरुम् ।
प्रदक्षिणत्रयं कुर्य्यात् प्रणमेद्दश पञ्च वा ॥

पूजायां मन्त्रस्तु वैदिकः पौराणिक आगमिको वा ग्राह्यः । पञ्चकैरिति पञ्चामृतैरित्यर्थः । रुद्रपुरस्कृतैरिति शतरुद्रीयमन्त्राभिमन्त्रितैरित्यर्थः । इदं च पञ्चकैरित्यस्यापि विशेषणम् । अथातो रुद्रस्नानार्चनविधिं व्याख्यास्याम इति बौधायनसूत्रोक्तक्रमेण स्नानादिकं कारणीयम् । तच्च पूजाप्रकाशे द्रष्टव्यम् । ध्यानं तु—

पद्मपुराणे,

अकलङ्कशरत्पूर्णशशाङ्कायुतसप्रभः ।
सोमसूर्य्याग्निनयनो दशबाहुः शशाङ्कभृत् ॥
गौरीपरीरब्धतनुर्नानायुधसमुज्ज्वलः । इति ।

ब्रह्मवैवर्त्ते,

जय विश्वेश्वर ! विश्वाधार ! विश्वरूप ! विष्णुप्रिय ! वामदेव ! महादेव ! देवाधिदेव ! दिव्यरूप ! दीनानाथैकशरण ! शरणागतवज्रपञ्जर ! सम्धिताखिलकार्य ! कार्य्यातीत ! कारणकारण ! कामादितृणदाहन ! दानवान्तकर ! दारिताखिलदारिद्र्य ! जितेन्द्रियप्रिय ! जितेन्द्रियैकगम्य ! काशीस्थस्थावरजङ्गमनिर्वाणदायक ! त्रिदशनायक ! काशिकाप्रिय ! नमस्ते नमस्ते ।

इत्यादि नामबहुलैः स्तोत्रैः स्तुत्वा पुनर्नमेत् ।

अन्यान्यपि च स्तोत्राणि यथाशक्ति पठनीयानि। अत्र च स्वयम्भूतस्य लिङ्गस्यालाभे तत्स्थाने स्थापितलिङ्गान्तरपूजनादिनापि सर्वनिर्वाहः। यथा नित्यसामिधेनीषु त्रिः प्रथमामन्वाहेत्यादिना विहितं त्रित्वं तत्स्थानापन्नासु काम्यासु सामिधेनीषु अप्यन्वेति स्थानधर्मत्वात् तथात्राप्यौचित्यात्। दुर्दान्तम्लेच्छादिवशात्तत्र लिङ्गाभावे स्थानप्रदक्षिणेनैव नित्ययात्रा सिद्ध्यति स्नपनादिकं तु तदा निरधिष्ठानत्वान्निवर्त्तत इति शिष्टाः। वस्तुतस्तु नित्यस्थाने. विहितत्वात् काम्यासु सामिधेनीष्वस्तु त्रित्वलाभः। प्रकृते तु स्वयम्भूतलिङ्गस्थाने लिङ्गान्तरार्चनस्याग्रंभिहितत्वात् न तन्न्यायः परन्तु शिष्टाचारादेव तथा तस्यापि धर्मे मानत्वादिति। वीरेश्वरादिपूजायामप्ययमेव क्रमः। प्रदक्षिणे तु विशेषं वदन्ति।

एकां चण्ड्यां रवौ सप्त तिस्रो दद्याद्विनायके।
चतस्रो विष्णवे देयाः शिवस्यार्द्धं प्रदक्षिणम्॥

तथा,

शिवं प्रदक्षिणीकुर्वन् सोमसूत्रं न लङ्घयेत्।
लङ्घने त्वेकमेकं स्यादलङ्घ्यात्रायुतत्रयम्॥

सोमसूत्रपरिमाणं तु—

प्रासादविस्तारसमानसूत्रं सोमस्य सूत्रं दिशि सोमसूत्रम्।
सूत्राद्बहिर्लङ्घनतो न.दोषः सदोषमभ्यन्तरलङ्घनं तु॥

प्रासादगर्भसमानपरिमाणं सूत्रं भित्तेर्बहिः सोमस्य दिशि उत्तरस्यां दिशि पातयेत्ततोऽग्रे न सोमसूत्रमिति तल्लङ्घने न दोष इत्यर्थः। अन्ये तु मध्यस्थितं लिङ्गमवधीकृत्य भित्त्यवधिकं यत्सूत्रं देवोत्तरस्यां भित्तेर्बहिः पातितं सोमसूत्रं तन्न लङ्घयेदित्यर्थ इत्याहुः। लङ्घने त्वेकमेकमित्यस्यार्थस्तु सोमसूत्रल-

ङ्घने एकमेव प्रदक्षिणाफलं प्राप्नोति अलङ्घनेऽयुतत्रयप्रदक्षिणाफलं भवतीति । अनेन न लङ्घयेदितिनिषेधकस्येष्टहानिपरत्वं दर्शितम् । परे तु सोमसूत्रलङ्घनस्य निषिद्धत्वात्तन्न कर्त्तव्यमेव तद्बहिरपि सामस्त्येन प्रदक्षिणायामेकप्रदक्षिणाफलम् । अलङ्घने अयुतत्रयफलमित्याहुः । इदं त्ववधेयम् । सोमसूत्रलङ्घननिषेधो न विश्वेश्वरस्य प्रदक्षिणमाक्रामति किन्तु लिङ्गान्तरस्यैव ।

सर्वदिक्षु महाभाग विभोः कुर्यात्प्रदक्षिणम् ।
सोमसूत्रादिनियमो नास्ति विश्वेश्वरालये ॥

इत्यादित्यपुराणात् । पठन्ति च—

आदिपुराणे,

पश्चिमाभिमुखं लिङ्गं लिङ्गं नन्दिविवर्जितम् ।
गिरिलिङ्गं स्थललिङ्गं जललिङ्गं तथैव च ॥

स्थललिङ्गं काश्यादि । जललिङ्गं उत्कलादौ लाबुकेश्वरादि । जललिङ्गं वरुणेश्वरादीत्यन्ये ।

सूतसंहितायां तु,

ज्योतिर्लिङ्गे रत्नलिङ्गे स्वयंभुवि तथैव च ।
वृषचण्डादिनियमः सुरेश्वरि न विद्यते ॥

विश्वेश्वरादीनि ज्योतिर्लिङ्गानि । तानि विश्वेश्वरः, केदारेश्वरः, उज्जयिन्यां महाकालेश्वरः, नर्मदागर्भे ओङ्कारेश्वरः, नागनाथः, वैद्यनाथः, घुश्मेश्वरः, त्र्यम्बको, भीमशङ्करः, मल्लिकार्जुनः, रामेश्वरः, सोमनाथश्च सौराष्ट्रे एतानि ज्योतिर्लिङ्गानीति वदन्ति । शिवस्यार्द्धप्रदक्षिणप्रकारस्तु—

वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम् ।
चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषम् ॥

नवप्रदक्षिणोपेतं यस्तु कुर्य्यात्प्रदक्षिणम्।
पदे पदेऽश्वमेधस्य फलं प्राप्नोति स ध्रुवम्॥
सव्ये सव्यं विजानीयादपसव्येऽपसव्यकम्।
इति वदन्ति। चण्डस्थापनमैशानकोणे विहितम्॥
ऐशाने जगतीबाह्ये हर्म्यगर्भप्रमाणके।
तदर्थं निर्मिते हर्म्ये चण्डं सम्पादयेद्यथा॥ इत्यादिना।
तथा,
शिवभुक्तं च निर्माल्यं तस्मै दद्याद्दिने दिने।
लिङ्गेषु केषु चिच्चण्डं केचिन्नेच्छन्ति पण्डिताः॥
वृषस्थापनं तु पूर्वस्याम्।
स्थापयेत्तत्र वै चण्डमैशाने श्रीकरं गृहे।
अन्तर्द्वारे प्रकुर्वीत परिवाराष्टकं यथा॥
वृषोऽग्निर्मातरः सप्त विघ्नेशस्तु ततो मतः।
स्कन्दो दुर्गा हरिः सूर्य्यः शक्रादीनां दिशां क्रमात्॥
इति वचनात्। नमस्कारस्तु मुक्तिमण्डपे कार्य्यः। ननु
विश्वेश्वरस्य लिङ्गं तु ज्ञेयं पश्चान्मुखं बुधैः।
इति वचनात्।
अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे।
जपहोमनमस्कारान्न कुर्य्याद्देवतालये॥
इति निषेधात्। लिङ्गस्य वामदिशि मुक्तिमण्डपे कथं नमस्कारः। मैवम्।
इत्यादिनामबहुलैः स्तोत्रैः स्तुत्वा पुनर्नमेत्।
देवस्य दक्षिणे भागे स्थित्वा निर्वाणमण्डपे॥
इति पूर्वलिखितब्रह्मवैवर्त्तस्थविशेषवचनात्। ननु मुक्तिमण्डपस्य वामभागे स्थितत्वाद्देवस्य दक्षिणे भागे इत्यत्रासङ्ग-

तिः । मैवम् । देवस्येति षष्ठ्यर्थस्य निर्वाणमण्डप इत्यनेनान्वयात् । तथा च प्रासादस्य तत्रास्थितपूर्वाभिमुखपुरुषस्य वा दक्षिणदिक्स्थिते देवमम्बन्धिनिर्वाणमण्डपे इत्यर्थः ।

देवस्य दक्षिणे भागे वापी तिष्ठति शोभना ।

इत्यादिकमप्येवमेव व्याख्येयम् । विश्वेशस्नानोदकं शिवनिर्माल्यमपि शिरसि धार्यम् ।

स्नापयित्वा विधानेन लिङ्गस्य स्नपनोदकम् ।
त्रिः पिबेत्त्रिविधं पापं तस्येहाशु प्रणश्यति ॥
लिङ्गस्नपनवार्भिर्यः कुर्यान्मूर्द्धाभिषेचनम् ।
गङ्गास्नानफलं तस्य जायतेऽत्र विपाप्मनः ॥

इति काशीखण्डात् । अत्र विश्वेश्वरस्याप्रकृतत्वेऽपि तद्विषयता । तथा च शिवनिर्माल्यधारणनिषेधानामेतद्भिन्नविषयतेत्येके । उपासकपरतेत्यन्ये । काशीखण्डे क्रमान्तरमुक्तम् ।

तद्यथा,

सचैलमादौ संस्नाय चक्रपुष्करिणीजले ।
सन्तर्प्य देवान् सपितॄन् ब्राह्मणांश्च तथार्थिनः ॥
आदित्यं द्रौपदीं विष्णुं दण्डपाणिं महेश्वरम् ।
नमस्कृत्य ततो गच्छेद्द्रष्टुं ढुण्ढिविनायकम् ॥
ज्ञानवापीमुपस्पृश्य नन्दिकेशं ततोऽर्चयेत् ।
तारकेशं ततोऽभ्यर्च्य महाकालेश्वरं ततः ॥
ततः पुनर्दण्डपाणिमित्येषा पञ्चतीर्थिका ।
दैनन्दिना विधातव्या महाफलमभीप्सुभिः ॥
ततो वैश्वेश्वरी यात्रा कार्या सर्वार्थसिद्धिदा ।

पद्मपुराणे पातालखण्डे यात्रायाः क्रमान्तरमुक्तम् ।

तथाहि,

गङ्गायामाप्लुतिः प्रातर्मध्याह्ने मणिकर्णिकाम् ।
निषेवेत सदा पश्चाल्लिङ्गं वैश्वेश्वरं व्रजेत् ॥
भवानीं ढुण्ढिराजं च दण्डपाणिं च भैरवम् ।
पूजयेन्नित्यशः काश्यां सूक्ष्मपापाभिभूतये ॥
काशीवासिनां विश्वेशार्चनं नित्यम् ।
चक्रपुष्करिणीतीर्थे स्नातव्यं प्रतिवासरम् ।
पत्रैः पुष्पैः फलैस्तोयैरर्च्यो विश्वेश्वरः सदा ॥

तथा,

यात्राद्वयं प्रयत्नेन कर्तव्यं प्रतिवासरम् ।
आदौ स्वर्गतरङ्गिण्याः ततो विश्वेशितुर्ध्रुवम् ॥

इति ब्रह्मवैवर्तात् । अनेनाशक्तौ चक्रपुष्करिणीस्नानाभावेऽपि न क्षतिरिति प्रतीयते ।

मामनालोक्य यद्भुङ्क्ते तद्भुङ्क्ते केवलं त्वघम् ।
असमर्च्य तु यो भुङ्क्ते पत्रपुष्पफलैरपि ॥
रेतोभक्ष्यो भवेन्मर्त्यः स जन्मान्येकविंशतिम् ।

इति काशीखण्डाच्च ।

प्रातर्विश्वेश्वरं दृष्ट्वा नैशमेनो व्यपोहति ।

इत्यादिवचनं खादिरत्ववन्नित्येऽपि फलसम्बन्धं ब्रूते । काश्यां विष्णुप्रार्थनमपि प्रत्यहं कार्य्यम् ।

जय केशव देवेश जय काशीप्रियाच्युत ।
काश्यां रक्षस्व देवेश देहि श्रद्धां जनार्दन ॥
मन्त्रेणानेन देवेशं प्रार्थयेत्प्रत्यहं नरः ।

इति ब्रह्मवैवर्तात् ।

आद्यं च वैष्णवं स्थानं पुराणे परिचक्षते ।
पुरीषु संस्थितो विष्णुरंशैः काश्यां स्वरूपतः ॥

इति नारदीयेन काश्या विष्णुस्थानत्वावगतेः ।

वामनपुराणे,

विष्णुना शिवं प्रत्युक्तम् ।

योऽसौ प्राङ्मण्डले पुण्ये मदंशप्रभवोऽव्ययः ।
प्रयागे वसते नित्यं योगशायीतिविश्रुतः ॥
चरणाद्दक्षिणात्तस्य विनिर्याता सरिद्वरा ।
विश्रुता वरणेत्येव सर्वपापहरा शुभा ॥
सव्यादन्या द्वितीया च असिरित्येव विश्रुता ।
ते उभे सरितां श्रेष्ठे लोके पूज्ये बभूवतुः ॥
तयोर्मध्ये तु यो देशस्तत्क्षेत्रं योगशायिनः ।

हेमाद्रौ वामनपुराणे,

तमूचुर्मुनयः सूर्य्य शृणु क्षेत्रं महाफलम् ।
साम्प्रतं वासुदेवस्य भावि तच्छङ्करस्य च ॥
योगशायिनमारभ्य यावत् केशवदर्शनम् ।
एतत् क्षेत्रं हरेः पुण्यं नाम्ना वाराणसी पुरी ॥

इत्यभिधानाच्च ।

ब्रह्मवैवर्त्ते,

शिवं शिवां प्रत्यहमर्चयन्नरस्तथा गणेशादिगणान् धृतव्रतः ।
वर्त्तेत यः काशिकया सदा गणो न तस्य दुःखं न च विघ्नपूगः॥इति।

## अथ काशीकृतपापप्रायश्चित्तम् ।

ब्रह्मवैवर्त्ते,

यावज्जीवं वसेत्काश्यां प्रत्यब्दं सुप्रदक्षिणम् ।
कुर्यादेव निरालस्य आनन्दसदनस्य हि ॥
प्रत्यब्दं ये प्रकुर्वन्ति पञ्चक्रोशप्रदक्षिणम् ।
जीवन्मुक्तास्तु ते ज्ञेया निष्पापाः काशिवासिनः ॥

श्रीदेव्युवाच ।

भगवन् देवदेवेश प्रदक्षिणविधिं वद ।
पञ्चक्रोशस्य येनाशु निष्पापः पुण्यवान् भवेत् ॥

श्रीमहादेव उवाच ।

आश्विनादिषु मासेषु त्रिषु पार्वति सर्वदा ।
प्रदक्षिणा प्रकर्त्तव्या क्षेत्रस्यापापकाङ्क्षिभिः ॥
माघादिचतुरो मासाः प्रोक्ता यात्राविधौ नृणाम् ।
पूर्वस्मिन् दिवसे ढुण्ढिं पूजयित्वा हविष्यभुक् ॥
प्रातरुत्तरवाहिन्यां स्नात्वा विश्वेशमर्चयेत् ।
पुनर्यात्रार्थमपि च शिवयोः पूजनं भवेत् ॥
मुक्तिमण्डपिकायां च संविश्य वरवर्णिनि ! ।
प्रतिज्ञां महतीं कृत्वा पूजनं तत्र तत्र ह ॥
काश्यां प्रजातवाक्कायमनोजनितमुक्तये ।
ज्ञाताज्ञातविशुद्ध्यर्थं पातकेभ्यो हिताय च ॥
पञ्चक्रोशात्मकं लिङ्गं ज्योतीरूपं सनातनम् ।
भवानीशङ्कराभ्यां च लक्ष्मीश्रीशविराजितम् ॥
ढुण्ढिराजादिगणपैः षट्पञ्चाशद्भिरावृतम् ।
द्वादशादित्यसहितं नृसिंहैः केशवैर्युतम् ॥
कृष्णरामत्रययुतं कूर्ममत्स्यादिभिस्तथा ।
अवतारैरनेकैश्च युतं विष्णोः शिवस्य च ॥
गौर्यादिशक्तिभिर्जुष्टं क्षेत्रं कुर्य्यात् प्रदक्षिणम् ।
बद्धाञ्जलिः प्रार्थयेत महादेवं महेश्वरम् ॥
पञ्चक्रोशस्य यात्रां वै करिष्ये विधिपूर्वकम् ।
प्रीत्यर्थं तव देवेश सर्वाघौघप्रशान्तये ॥
इति सङ्कल्प्य मौनेन प्रणिपत्य पुनः पुनः ।

ढुण्ढिराज ! गणेशान ! महाविघ्नौघनाशन ! ॥
पञ्चक्रोशस्य यात्रार्थं देह्याज्ञां कृपया विभो ।
विश्वेशं त्रिःपरीत्याऽथ दण्डवत् प्रणिपत्य च ॥
मोदं प्रमोदं सुमुखं दुर्मुखं गणनायकम् ।
प्रणम्य पूजयित्वादौ दण्डपाणिं ततोऽर्चयेत् ॥
कालराजं च पुरतो विश्वेशस्य जगद्गुरोः ।
पूजयित्वा ततो गच्छेन्मणिकर्णीं विधानतः ॥
तत्र स्नात्वा महादेवं मणिकर्णीशमर्चयेत् ।
विनायकं सिद्धिदं च पुनरागत्य पूजयेत् ॥
मणिकर्णीतटे छन्नं गङ्गाकेशवमच्युत ।
ललितां च ततः पूज्य जरासन्धेश्वरं विभुम् ॥
सोमनाथं ततः पूज्य दालभ्येश्वरमेव च ।
शूलटङ्कं महादेवं वाराहं पूज्य च व्रजेत् ॥
दशाश्वमेधलिङ्गं च वन्दीं तत्रैव पूजयेत् ।
सर्वेश्वरं च केदारं ततो हनुमदीश्वरम् ॥
सङ्गमेशं ततः पूज्य लोलार्कं पूजयेत्ततः ।
अर्कसंज्ञं गणाध्यक्षमसेस्तीरं पुनर्व्रजेत् ॥
क्षेत्रं प्रदक्षिणीकुर्वंस्तिलमात्रं न सन्त्यजेत् ।
दुर्गाकुण्डे ततः स्नात्वा यजेत् दुर्गविनायकम् ॥
दुर्गां संपूज्य विधिवत् वसेत्तत्र सुखाप्तये ।
ब्राह्मणान् भोजयेत्तत्र मधुपायसलड्डुकैः ॥
रात्रौ जागरणं तत्र पुराणश्रवणादिकम् ।
कुर्याच्च पूजनं भक्त्या परोपकरणादि च ॥
जय दुर्गे ! महादेवि ! जय काशीनिवासिनि ! ।
क्षेत्रविघ्नहरे ! देवि ! पुनर्दर्शनमस्तु ते ॥

इति दुर्गां प्रार्थयित्वा विष्वक्सेनेश्वरं ततः।
पूजयित्वा कर्दमेशं पञ्चव्रीहीतिलैर्नमेत् ॥
आर्द्रा कर्दमतीर्थे तु स्नानं कूपावलोकनम्।
सोमनाथं विरूपाक्षं नीलकण्ठं ततोऽर्चयेत् ॥
तत्र वासं विधायाग्नौ किञ्चिद्धोमं द्विजार्चनम्।
श्राद्धादि धर्मकार्य्याणि कृत्वा मुच्येदृणत्रयात् ॥
कर्दमेश ! महादेव ! काशीवासिजनप्रिय !।
त्वत्पूजनान्महारुद्र ! पुनर्दर्शनमस्तु ते ॥
प्रातः स्नात्वा पूजयित्वा पूजयित्वा च सद्विजान्।
नागनाथं च चामुण्डां मोक्षेशं करुणेश्वरम् ॥
वीरभद्रं ततो दुर्गां विकटाख्यां प्रपूजयेत्।
उन्मत्तभैरवं नीलं कालकूटं ततोऽर्चयेत् ॥
दुर्गां च विमलां गत्वा महादेवं ततो व्रजेत्।
नन्दिकेशं भृङ्गरीटिं तत्रैव च गणप्रियम् ॥
विरूपाक्षं च यक्षेशं विमलेश्वरमेव च।
मोक्षदं ज्ञानदं चैवामृतेशं तत्र पूजयेत् ॥
गन्धर्वसागरं तीर्थं भीमचण्डीं ततो व्रजेत्।
तत्र स्नात्वा भीमचण्डीं पयसा स्नापयेत्सुधीः ॥
पञ्चोपचारैः सम्पूज्य ब्राह्मणान् परितोषयेत्।
तत्र वासं प्रयत्नेन कुर्याच्चण्डीविनायकम् ॥
रविरक्ताक्षगन्धर्वं नरकार्णवतारणम्।
शिवं प्रपूज्य यत्नेन रात्रौ पूर्ववदाचरेत् ॥
प्रातरुत्थाय सुस्नातः प्रार्थयेद्भीमचण्डिकाम्।
भीमचण्डि ! प्रचण्डानि मम विघ्नानि नाशय ॥
नमस्तेऽस्तु गमिष्यामि पुनर्दर्शनमस्तु ते।

ततो गच्छेदेकपादगणान्नत्वाथ तण्डुलान् ॥
तिलांश्च विकिरेत्तत्र धनधान्यादिसम्पदे ।
ततो गच्छेन्महाभीमं भैरवं भैरवीं शुभाम् ॥
भूतनाथं च सोमेशं पूजयेत् सिन्धुरोधसि ।
कालनाथं कपर्दीशं कामेशं च गणेश्वरम् ॥
वीरभद्रं चारुमुखं गणनाथं च पूजयेत् ।
ततो गच्छेद्देहलीशं विघ्नपूगनिवारणम् ॥
मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः ।
पूजयेत श्रद्धया देवं तं देहलिविनायकम् ॥
तत्पार्श्वे षोडश पुनर्विघ्ननाथान् समर्चयेत् ।
उद्दण्डगणपं पूज्य उत्कलेश्वरमेव च ॥
द्यावाभूमीश्वरं तत्र पूजयेन्नहुषेश्वरम् ।
तत्र वासं प्रकल्प्याथ पूर्ववज्जागरादिकम् ॥
कृत्वा स्नात्वाऽथ रामेशं प्रार्थयेत्काशिवासदम् ।
श्रीरामेश्वर ! रामेण पूजितस्त्वं सनातन ! ॥
आज्ञां देहि महादेव ! पुनर्दर्शनमस्तु ते ।
लिङ्गानि सुबहून्यादौ वरणापारगानि च ॥
पूजयित्वा ततो गच्छेद्देवसङ्गनिषेवितम् ।
देवसङ्गेश्वरं किञ्चिद्दत्त्वा स्थित्वा ततो व्रजेत् ॥
पाशपाणिं गणेशं च क्षेत्रमध्ये व्यवस्थितम् ।
पूजयित्वा बहिश्चैव पृथ्वीश्वरमथो व्रजेत् ॥
एकोऽश्वमेधः पृथुना कृतः क्षेत्राद्बहिः पुरा ।
स्वर्गभूमिस्तु सा ज्ञेया मोक्षभूमिस्तु मध्यतः ॥
काश्याश्चतुर्दिशं देवि योजनं स्वर्गभूमिका ।
मृतास्तत्र हि गच्छन्ति स्वर्गं सुकृतिनां पदम् ॥

ततः स यूपं हि सरः स्पृष्ट्वा गच्छेच्छनैः शनैः ।
महाक्षेत्रं कापिलं तु यत्र श्रीवृषभध्वजः ॥
तत्र स्नात्वा विधानेन तर्पयित्वा पितॄनथ ।
श्राद्धं विधाय सुश्रद्धः पूजयेद्वृषभध्वजम् ॥
निवसेत्तं तु दिवसं श्रवणादि प्रकल्पयेत् ।
प्रदक्षिणीकृत्य ततो गच्छेत् ज्वालानृसिंहकम् ॥
एवं प्रदक्षिणीकृत्य सरः कापिलमुत्तमम् ।
वरणां च ततस्तीर्त्वा स्नात्वा वै सङ्गमे शुभे ॥
आदिकेशवमभ्यर्च्य सङ्गमेश्वरमेव च ।
विनायकं खर्वसंज्ञं पूजयित्वा ततो व्रजेत् ॥
क्रोडीकृत्य यवान् शुद्धान् विकिरन् विष्णुमुच्चरन् ।
प्रह्लादेश्वरमभ्यर्च्य त्रिलोचनमतः परम् ॥
विन्दुमाधवमभ्यर्च्य ह्रदे पाञ्चनदे शुभे ।
गभस्तीशं मङ्गलां च गौरीं दृष्ट्वा ततो व्रजेत् ॥
वसिष्ठवामदेवौ च पर्वतेश्वरमेव च ।
महेश्वरं समभ्यर्च्य ततः सिद्धिविनायकम् ॥
सप्तावरणगान् दिव्यान् पूजयेद्गणनायकान् ।
मणिकर्ण्यां ततः स्नात्वा गच्छेद्विश्वेश्वरं यमी ॥
नमस्कृत्य महेशानं प्रविशेद्देवसन्निधौ ।
पञ्चोपचारैः सम्पूज्य स्तुत्वा नत्वा पुनः पुनः ॥
मुक्तिमण्डपमागत्य कृतार्थस्तत्र संविशेत् ।
विष्णुं च दण्डपाणिं च ढुण्ढिं भैरवमेव च ॥
आदित्यं गणपांश्चैव पूजयेत्पुनरेव च ।
प्रदक्षिणीकृतान् देवान् स्मरेत्तत्तत्क्रमात्सुधीः ।
जय विश्वेश ! विश्वात्मन् ! काशीनाथ ! जगद्गुरो ! ॥

त्वत्प्रसादान्महादेव ! कृता क्षेत्रप्रदक्षिणा ।
अनेकजन्मपापानि कृतानि मम शङ्कर ! ॥
गतानि पञ्चक्रोशात्मलिङ्गसम्यक्प्रदक्षिणात् ।
त्वद्भक्तिः काशिवासं च राहित्यं पापकर्मणाम् ॥
सत्सङ्गश्रवणाद्यैश्च कालो गच्छतु नः सदा ।
हर ! शम्भो ! महादेव ! सर्वज्ञ ! सुखदायक ! ॥
प्रायश्चित्तं सुनिर्वृत्तं पापानां त्वत्प्रसादतः ।
पुनः पापमतिर्मास्तु धर्मबुद्धिः सदास्तु मे ॥
इति स्तुत्वा यथाशक्त्या दत्त्वा दानं द्विजन्मनाम् ।
बध्वा करयुगं मन्त्री मन्त्रमेतमुदीरयेत् ॥–
पञ्चक्रोशस्य यात्रेयं यथावद्या मया कृता ।
न्यूनं सम्पूर्णतां यातु त्वत्प्रसादादुमापते ! ॥
इति प्रार्थ्य महादेवं गच्छेद्गेहं स्वकं स्वकम् ।
न्यूनातिरिक्तदोषाणां परिहाराय दक्षिणाम् ॥
सङ्कल्प्यागत्य च गृहे ब्राह्मणान् भोजयेत्ततः ।
तत आगत्य च गृहे कुटुम्बैः सह भोजनम् ॥
कृत्वात्मानं ततो ध्यायेत् कृतकृत्यो भवेदिति ।
एकरात्रं तु मध्ये यः प्रवसेत् शुचिमानसः ॥
वरणायास्तटे रम्ये स याति परमां गतिम् ।
द्विरात्रं मध्यवसतिं यः कुर्याद्धर्मतत्परः ॥
प्रथमं चण्डिकाक्षेत्रे द्वितीयं वरणातटे ।
दिवसं तु वसेद्धीमान् ततो विश्वेश्वरं व्रजेत् ॥
यस्तु त्रिरात्रमुषितो मध्ये भवति पार्वति ! ।
दुर्गास्थले भीमचण्ड्यां रामेशे वासमृच्छति ॥
वसतिं यस्तु कुरुते मध्ये दिनचतुष्टयम् ।

प्रथमां वसतिं कुर्य्यात् कर्दमेश्वरसन्निधौ ॥
द्वितीयां भीमचण्डयां च वसतिं परिकल्पयेत् ।
रामेश्वरे तृतीयां च चतुर्थीं कपिलातटे ॥
राजवृद्धकुमाराणां यथेष्टं वास इष्यते ।
यथाकथञ्चिद्देवेशि ! पञ्चक्रोशप्रदक्षिणम् ॥
कुर्य्यादेव न मासादि चिन्तयेद्धर्मकोविदः ।
स एव शुभदः कालो यस्मिन् श्रद्धोदयो भवेत् ॥
सत्यश्रद्धा गुणवती नासत्या सा फलप्रदा ।
काश्यां तिष्ठति यो नित्यं स्नाति भागीरथीजले ॥
कुर्य्यात्सांवत्सरीं यात्रां पञ्चक्रोशस्य सुन्दरि ! ।
स ब्रह्मभूतो निवसेन्ममानुग्रहतः सुखी ॥ इति ।

**अथ क्षेत्रसंन्यासिनां क्षेत्रप्रदक्षिणाविधिः ।**

**ब्रह्मवैवर्त्ते,**

श्रीदेव्युवाच ।

भगवन् ! सर्वभूतेश ! कृपापूरितविग्रह ! ।
कृतार्थानां वद विभो क्षेत्रसंन्यासिनामपि ॥
प्रदक्षिणक्रमं क्षेत्राद्बहिर्वा मध्यतोऽपि वा ।
नियमस्य न भङ्गः स्याद्यथा पापं च नश्यति ॥
देहिनां पापसम्बन्धः सर्वथा जायते क्रमात् ।
तत्काशिवासजं नश्येत् क्षेत्रसंन्यासिनां यथा ॥

श्रीभगवानुवाच ।

सम्यक् पृष्टं त्वया देवि ! महाहङ्कारनाशनम् ।
प्रायश्चित्तं न्यासिनां हि क्षेत्राघौघविनाशनम् ॥
विधिस्तु पूर्वमेवोक्तो नियमादियुतस्तव ।
प्रदक्षिणाकृतिं त्वेषामवधारय सुव्रते ! ॥

स्नात्वा देवं समभ्यर्च्य विश्वेशं विश्वया सह ।
मोदादिपञ्चकं ढुण्ढिं दण्डपाणिं च भैरवम् ॥
पूर्ववत्तीरगान् पूज्य दुर्गां पूज्य च यत्नतः ।
बहिरावरणं त्यक्त्वा गणेशानां तु सप्तमम् ॥
मध्ये प्रदक्षिणं कुर्य्यादसीवरणयोः कृती ।
सम्मुखीभूय विधिवत् पूज्या ये वामतः स्थिताः ।
देवा देव्यश्च फलदाः क्षेत्रपालाः प्रयत्नतः ॥
एकरात्रं द्विरात्रं वा वसेन्मध्ये त्रिरात्रकम् ।
यत्र श्रद्धा सुमहती वसेत्तत्र न संशयः ॥
प्रत्यहं दण्डपाणेस्तु पूजा कार्य्या प्रयत्नतः ।
दण्डपाणेः पूजनेन सिद्धिर्भवति नान्यथा ॥
दण्डपाणे ! यक्षपते ! क्षेत्रसंन्यासवल्लभ ! ।
पञ्चक्रोशस्य यात्रेयं सिद्धा मे त्वत्प्रसादतः ॥
अनेन श्लोकमन्त्रेण प्रार्थनं पूजनं स्मृतम् ।
प्रत्यहं कुर्वतां यात्रा सम्पूर्णा भवति ध्रुवम् ॥
आगत्य विश्वनाथस्य पूजा कार्या तु पूर्ववत् ।

तथा,

कुर्य्यात्सांवत्सरीं यात्रां पञ्चक्रोशस्य सुन्दरि ! ।
स ब्रह्मभूतो निवसेन्ममानुग्रहतः सुखी ॥

अथ पञ्चक्रोशयात्रायां नियमाः ।

ब्रह्मवैवर्त्ते,

देव्युवाच ।

क्षेत्रप्रदक्षिणे देव ! नियमाः के भवन्ति तान् ।
वदस्व तारिताशेष ! विश्वनाथ ! कृपालय ! ॥

श्रीमहादेव उवाच।

प्रतिग्रहं परान्नं च परदाराभिभाषणम्।
परस्वग्रहणं स्नेहादसद्वार्त्तां च वर्जयेत्॥
असतां पापिनां सङ्गं न कुर्य्यात् प्रयतो नरः।
असत्समागमात् सर्वं जायते निष्फलं नृणाम्॥
मम द्रोहपरैः साकं न व्रजेद्वेदनिन्दकैः।
परापवादं नो कुर्यात् परद्रोहं विवर्जयेत्॥
गुरुनिन्दां शास्त्रनिन्दां शिवधर्ममहात्मनाम्।
तीर्थलिङ्गतपोनिन्दां न कुर्य्याच्चु प्रदक्षिणी॥
अन्यदा तु कृतं पापं नश्येत् क्षेत्रप्रदक्षिणात्।
क्षेत्रप्रदक्षिणामध्ये कृतं केन प्रणश्यति॥
किञ्चिद्दानं प्रत्यहं ब्राह्मणेभ्यो देयं दीनानाथपङ्ग्वन्धकेषु।
भूमौ शय्या तैलमाषादि दुष्टं सर्वं वर्ज्यं क्षेत्रयात्रादिनेषु॥
स्नानद्वयं प्रकुर्वीत नित्यश्राद्धं च सुन्दरि!।
यदत्र किञ्चित् क्रियते तत्तत् कोटिगुणं भवेत्॥

तथा,

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ मस्करी।
क्षेत्रे वसन् बहिर्वापि कुर्य्यादेव प्रदक्षिणम्॥

तथा,

ब्राह्मणः क्षत्रियो वापि वैश्यशूद्रौ तथा स्त्रियः।
महापातकशान्त्यर्थं कुर्युः क्षेत्रप्रदक्षिणम्॥

तथा,

यस्तु वाराणसीं प्राप्य बहिर्जिगमिषुर्भवेत्।
प्रदक्षिणत्रयं कुर्य्यात् सर्वपापनिवृत्तये॥ इति।

शिष्टास्तु—

अन्यक्षेत्रकृतं पापं पुण्यक्षेत्रे विनश्यति ।
पुण्यक्षेत्रकृतं पापं गङ्गातीरे प्रणश्यति ॥
गङ्गातीरे कृतं पापं वाराणस्यां प्रणश्यति ।
वाराणस्यां कृतं पापमन्तर्गेहे विनश्यति ॥
अन्तर्गेहे कृतं पापं वज्रलेपो भविष्यति ।
वज्रलेपच्छिदं ह्येतत् पञ्चक्रोशप्रदक्षिणम् ॥
तस्मात्सर्वप्रयत्नेन कुर्यात् क्षेत्रप्रदक्षिणम् । इत्याहुः ।
कल्पतरौ तु,
माघमासमथोपोष्य ततो वाराणसीं गतः ।
दशाश्वमेधे गङ्गायां तीर्थे सुरगृहादिषु ॥
सर्वपापहराद्येषु सम्पूज्य पितृदेवताः ।
प्रदक्षिणीकृत्य पुरीं पूज्याविमुक्तकेशवौ ॥
लोलं दिवाकरं दृष्ट्वा ततो मधुवनं ययौ ।
इत्येतावदेवाभिहितम् । प्रायश्चित्तान्तरमुक्तम्–
ब्रह्मवैवर्त्ते,

महादेव उवाच ।

शृणु देवि रहस्यं मे धर्मः सूक्ष्मो भवेत्सदा ।
सूक्ष्मोऽतीन्द्रियः ।
न जानन्ति स्थूलधियो विषयासक्तमानसाः ॥
स्वल्पद्रव्येण च महान् महताऽप्यणुमात्रकः ।
देशं कालं तथा पात्रं वित्तं श्रद्धादिकं महत् ॥
करोति सुविचार्य्याशु येन काशी प्रसीदति ।
देशादिकं विचार्य्य यं धर्म्मं करोति स महान् भवतीत्यर्थः।
मम क्षेत्रे तु धनिनः पापिष्ठाः शुद्धिकाङ्क्षिणः ॥
शिवालयः प्रकर्त्तव्यो महापातकनाशनः ।

महापुण्यप्रदश्चैव महासुखकरश्च ह ॥
यत्र तिष्ठति निर्विघ्नं शिवलिङ्गं वरानने !।
तत्र देवालयः कार्यः पूजा भवति यत्र च ॥
शिवलिङ्गस्थापकानां शिवप्रासादकारिणाम्।
यान्ति नाशं विना क्लेशैः पातकानि महान्त्यपि ॥
शिवलिङ्गप्रतिष्ठां यः कुर्य्यात् पापशतान्वितः।
पातकानि विनश्यन्ति तस्य मोक्षोऽप्यदूरतः ॥
भविष्ये,
मृद्दार्विष्टकशैलैश्च यः कुर्य्यात्तु शिवालयम्।
द्विसप्तकुलसंयुक्तः शिवलोके महीयते ॥
तथा,
मृन्मयात् कोटिगुणितं फलं स्याद्दारुभिः कृतम्।
पाद्मे,
तद्भङ्क्त्वाऽन्यत्तु यः कुर्य्यात् स गच्छेन्नरकं महत्।
प्रायश्चित्तान्तरमप्युक्तम्–
ब्रह्मवैवर्त्ते,

महादेव उवाच।

शृणु देवि ! रहस्यं मे कृपणेषु न तद्वदेत्।
अश्रद्धादूषितमतौ पापभीरौ न नास्तिके ॥
श्रद्धालवे वदान्याय वाऽऽपन्नत्राय साधवे।
ब्रूयाद्रहस्यं परमं यथा धर्मः सुसिद्ध्यति ॥
वाराणस्यां गृहं कृत्वा ब्राह्मणाय प्रयच्छति।
शुद्धाय वेदविदुषे शिवविष्णुप्रियाय च ॥
निरन्तरं धर्मकथायज्ञदानप्रियाय च।
विवेकिने महाविद्यायुक्ताय प्रियवादिने ॥

दातव्यमेव सुगृहं कारयित्वा विशेषतः ।
काश्यां कृतानां पापानां कायवाङ्मनसा खलु ॥
नाशः परोऽयं सन्दिष्टः शुभकृद्यदि लभ्यते ।
यावद्वसति विप्रेन्द्रो मम भक्तियुतो गृहे ॥
काश्यां दिने दिने स्वर्णकोटिभारफलं लभेत् ।
दानेन यदवाप्नोति महादानकृतैर्नरः ॥
तदवाप्नोति विप्राय शुभे सम्पादिते गृहे ।
गृहदानाच्चिरायुः स्याद् गृहदानान्महाघकृत् ॥
गृहदानाद्भवेन्मुक्तो वंशवृद्धिस्तथाऽक्षयः ।
अर्थकामादिकं सर्वं प्राप्नोति गृहदानतः ॥
व्ययीकृत्य धनं किञ्चिदत्र क्रीत्वा भुवं शुभाम् ।
गृहमुत्पाद्य यो दद्यात् स याति परमं पदम् ॥
मां विना कः प्रयच्छेत काश्यां भूमिं द्विजाय हि ।
तस्मान्मदंशः सम्प्रोक्तो गृहदानान्न संशयः ॥
उपपातकलक्षाणि महापापशतानि च ।
विलयं यान्ति सर्वाणि क्षेत्रमध्ये कृतान्यपि ॥

तथा तत्रैव,

शिवायतनलक्षाणि विष्णोरायतनानि च ।
कृतानि तेन विप्रेन्द्र स्थापितो ब्राह्मणो यदि ॥
विप्रे सुस्थापिते काश्यां त्रैलोक्यं स्थापितं भवेत् ।
त्रैलोक्ये स्थापिते विप्राः प्रीयेऽहं सचराचरम् ॥
तस्मात् किञ्चित् यथाशक्त्या कुर्याद्विप्रो यथा वसेत् ।
क्षेत्रे कृतानां पापानां प्रायश्चित्तमिदं स्मृतम् ॥ इति ।

अथान्तर्गृहयात्रा ।

काशीखण्डे,

अन्तर्गृहस्य यात्रा वै कर्त्तव्या प्रतिवत्सरम् ।
प्रतिवासरमिति क्वचित्पाठः ।
प्रातः स्नानं विधायादौ नत्वा पञ्चविनायकान् ।
नमस्कृत्याथ विश्वेशं स्थित्वा निर्वाणमण्डपे ॥
अन्तर्गृहस्य यात्रां वै करिष्येऽघौघशान्तये ।
गृहीत्वा नियमं चेति गत्वाऽथ मणिकर्णिकाम् ॥
स्नात्वा मौनेन चागत्य मणिकर्णीशमर्चयेत् ।
कम्बलाश्वतरौ नत्वा वासुकीशं प्रणम्य च ॥
पर्वतेशं ततो दृष्ट्वा गङ्गाकेशवमप्यथ ।
ततस्तु ललितां दृष्ट्वा जरासन्धेश्वरं ततः ॥
ततो वै सोमनाथं च वराहं च ततो व्रजेत् ।
ब्रह्मेश्वरं ततो नत्वा नत्वाऽगस्तीश्वरं ततः ॥
कश्यपेशं नमस्कृत्य हरिकेशवनं तथा ।
वैद्यनाथं ततो दृष्ट्वा ध्रुवेशमथ वीक्ष्य च ॥
गोकर्णेश्वरमभ्यर्च्य हाटकेशमथो व्रजेत् ।
अस्थिक्षेपतडागेऽथ दृष्ट्वा वै कीकसेश्वरम् ॥
भारभूतेश्वरं नत्वा चित्रगुप्तेश्वरं ततः ।
चित्रघण्टां प्रणम्याथ ततः पशुपतीश्वरम् ॥
पितामहेश्वरं नत्वा ततस्तु कलशेश्वरम् ।
चन्द्रेशस्त्वथ वीरेशो विद्येशोऽग्नीश एव च ॥
नागेश्वरो हरिश्चन्द्रश्चिन्तामणिविनायकः ।
सेनाविनायकश्चाथ द्रष्टव्यः सर्वविघ्नहृत् ॥
वसिष्ठवामदेवौ च मूर्त्तिरूपधरावुभौ ।
द्रष्टव्यौ यत्नतः काश्यां महाविघ्नविनाशिनौ ॥
सीमाविनायकं चाथ करुणेशं ततो व्रजेत् ।

त्रिसन्ध्येशो विशालाक्षी धर्मेशो विश्वबाहुका ॥
आशाविनायकश्चाथ वृद्धादित्यस्ततः परम् ।
चतुर्वक्त्रेश्वरं लिङ्गं ब्रह्मीशस्तु ततः परम् ॥
ततो मनःप्रकामेश ईशानेशस्ततः परम् ।
चण्डीचण्डीश्वरौ दृश्यौ भवानीशङ्करौ ततः ॥
ढुण्ढिं प्रणम्य च ततो राजराजेशमर्चयेत् ।
लाङ्गलीशस्ततोऽभ्यर्च्यस्ततस्तु नकुलीश्वरः ॥
परान्नेशमथो नत्वा परद्रव्येश्वरं ततः ।
प्रतिग्रहेश्वरं चापि निष्कलङ्केशमेव च ॥
मार्कण्डेयेशमभ्यर्च्य तत अप्सरसेश्वरम् ।
गङ्गेशोऽर्च्यस्ततो ज्ञानवाप्यां स्नानं समाचरेत् ॥
नन्दिकेशं तारकेशं महाकालेश्वरं ततः ।
दण्डपाणिं महेशं च मोक्षेशं प्रणिपत्य च ॥
वीरभद्रेश्वरं नत्वा अविमुक्तेश्वरं ततः ।
विनायकांस्ततः पञ्च विश्वनाथं ततो व्रजेत् ॥
ततो मौनं विसृज्याथ मन्त्रमेतमुदीरयेत् ।
अन्तर्गृहस्य यात्रेयं यथावद्या मया कृता ॥
न्यूनातिरिक्तया शम्भुः प्रीयतामनया विभुः ।
इति मन्त्रं समुच्चार्य्य क्षणं वै मुक्तिमण्डपे ॥
विश्रम्य यायाद्भवनं निष्पापः पुण्यवान् नरः ।

पाद्मे,

प्रामादिकाघलोपाय प्रतिभूतं विभोर्गृहम् ।
कुर्य्यात्प्रदक्षिणं नित्यं तत्कल्मषजिहीर्षया ॥
प्रतिभूतं, प्रतिचतुर्दशि । विभोर्गृहम्, अन्तर्गृहम् ।

अथ काश्यां लघुपापप्रायश्चित्तम्।

पाद्मे,

सूक्ष्मपापविनाशाय नित्ययात्राविधिर्भवेत्।

स च प्राग्दर्शित एव।

तथा,

त्रिचतुर्दशलिङ्गानां भूते पूजापरो भवेत्। इत्याद्युक्तम्।

काशीखण्डे,

वाराणस्यामुषित्वा यो भैरवं न भजेन्नरः।

तस्य पापानि वर्द्धन्ते शुक्लपक्षे यथा शशी॥

तथा,

प्रमादात्पातकं कृत्वा शम्भोरानन्दकानने।

दृष्ट्वा त्रिविष्टपं लिङ्गं समभ्यर्च्यातिभक्तितः॥

गन्धाद्यैरुपचारैस्तु कृत्वेह परिपूजनम्।

ब्राह्मणान्वाचयेत्पश्चान्निष्पापोऽहमिति ब्रुवन्॥

एवं कुर्वन् नरः प्राज्ञो निरेना जायते क्षणात्।

ततः पञ्चनदे स्नात्वा मणिकर्णीह्रदे ततः॥

ततो विश्वेशमभ्यर्च्य प्राप्नोति सुकृतं महत्।

इति सुकरप्रायश्चित्तम्।

अथ काश्यां ग्रहणादौ फलातिशयोऽभिधीयते।

लिङ्गपुराणे,

अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि।

शशिभानूपरागे च कार्त्तिके च विशेषतः॥

सर्वपर्वसु पुण्येषु विषुवेष्वयनेषु च।

पृथिव्यां सर्वतीर्थानि वाराणस्यां तु जाह्नवीम्॥

उत्तरप्रवहां पुण्यां मम मौलिविनिर्गताम्।

पितुस्ते गिरिराजस्य सुतां हिमवतः शुभाम् ॥
भजन्ते सर्वतोऽभ्येत्य तान् शृणुष्व वरानने ! ।
सन्निहत्या कुरुक्षेत्रं सार्द्धं तीर्थशतैस्तथा ॥
नैमिषं पुष्करं चैव प्रयागं सपृथूदकम् ।
सन्ध्या सप्तर्षयश्चैव सर्वा नद्यः सरांसि च ॥
समुद्राः सप्त चैवात्र देवतीर्थानि कृत्स्नशः ।
भागीरथीं समेष्यन्ति सर्वपर्वसु काशिकाम् ॥
अविमुक्तेश्वरं चैव काशीस्थमचलात्मजे ! ॥
पृथिव्यां यानि तीर्थानि गुप्तान्यायतनानि च ॥
प्रविशन्ति सदाभ्येत्य पुण्येऽस्मिन् सर्वपर्वसु ।

अथ मत्स्योदरीयोगः ।

काशीखण्डे–

कैलासाद्रेः समायताः सप्तकोटिमिता गणाः ।

इति प्रक्रम्य–

ततः शैलं महादुर्गं तैः काशीपरितः कृतम् ।
परिखापि कृता रम्या मत्स्योदर्य्या जलाविला ॥
मत्स्योदरी द्विधा जाता बहिरन्तश्चरा पुनः ।
तच्च तीर्थं महत् ख्यातं मिलितं गाङ्गवारिभिः ।
यदा संहारमार्गेण गङ्गाम्भः प्रविशेदिह ॥
तदा मत्स्योदरीतीर्थं लभ्यते पुण्यगौरवात् ।
सूर्य्याचन्द्रमसोः पर्व तदा कोटिगुणं मतम् ॥
सर्वपर्वाणि तत्रैव सर्वतीर्थानि तत्र वै ।
तत्रैव सर्वलिङ्गानि गङ्गामत्स्योदरी यतः ॥
मत्स्योदर्य्यां हि ये स्नाता यत्र कुत्रापि मानवाः ।
कृतपिण्डप्रदानास्ते न मातुरुदरेशयाः ॥

अविमुक्तमिदं क्षेत्रं मत्स्याकारत्वमाप्नुयात् ।
परितः स्वर्धुनीवारि संमारि परिवीक्ष्यते ॥
मत्स्योदर्यां कृतस्नाना ये नरास्ते नरोत्तमाः ।
कृत्वापि बहुपापानि नेक्षन्ते भास्करेः पुरीम् ॥

संहारमार्गेण, प्रतिलोमवर्त्मना । इह, मत्स्योदरीतीर्थे । गणैः कृतायां परिखायां मत्स्योदरीजलसंयुक्तायां बहिर्मत्स्योदरी जाता अन्तर्मत्स्योदरीतीर्थमस्त्येवेति द्वैविध्यमित्यर्थः । गङ्गामत्स्योदरी यत इति । गङ्गामत्स्योदर्य्यौ यत्र तत्रैव सर्वपर्वाणीत्यर्थः । केचित्तु मत्स्योदरीति गङ्गाविशेषणं मत्स्याकारं वाराणसीक्षेत्रमुदरे यस्या इतिव्युत्पत्त्या गङ्गैव मत्स्योदरीत्यर्थः । तदुक्तम्—"मत्स्याकारत्वमाप्नुयात्"इत्याहुः ।

तथा ओङ्कारं प्रकृत्य—
कदाचित्तस्य देवस्य दर्शनेऽभ्येति जाह्नवी ।
मत्स्योदरी सा कथिता स्नाने पुण्यैरवाप्यते ॥ इति ।

लिङ्गपुराणे,
मत्स्योदरीजले गङ्गा ओङ्कारेश्वरसन्निधौ ।
तदा तस्मिन् जले स्नात्वा ब्रह्महत्यां व्यपोहति ॥ इति ।

## अथ काश्यां नानाकाम्यकर्मफलानि ।

कल्पतरौ मात्स्ये,
स्वर्णशृङ्गीं रौप्यखुरां चेलकण्ठां पयस्विनीम् ।
वाराणस्यां तु यो दद्यात् त्रिवर्णामब्जलोचने ! ॥
गां दत्त्वा तु वरारोहे ! ब्राह्मणे वेदपारगे ।
आसप्तमं कुलं तेन तारितं नात्र संशयः ॥
यो दद्याद्ब्राह्मणे किञ्चित्तस्मिन् क्षेत्रे वरानने ! ।

---

(१) यमस्य ।

कनकं रजतं वस्त्रमन्नाद्यं बहुविस्तरम् ॥
अक्षयं चाव्ययं चैव स्यात्तत्तस्य सुलोचने ! ।
शृणु तत्त्वेन तीर्थस्य विभूतिं व्युष्टिमेव च ॥
तत्र स्नात्वा महाभागे ! भवन्ति विरजा जनाः ।
दशानामश्वमेधानां यज्ञानां यत् फलं भवेत् ॥
तदवाप्नोति धर्मात्मा तत्र स्नात्वा वरानने ! ।
अल्पमल्पं च यो दद्याद्ब्राह्मणे वेदपारगे ॥
शुभां गतिमवाप्नोति अग्निवच्चैव दीप्यते ।
तथा,
उपवासं तु यः कृत्वा विप्रान् सन्तर्पयेन्नरः ।
स सौत्रामणियज्ञस्य फलं प्राप्नोति मानवः ॥
विप्रानिति कपिञ्जलन्यायात्त्रित्वपरम्[1] ।
एकाहारस्तु यस्तिष्ठेन्मासं तत्र वरानने ! ॥
यावज्जीवकृतं पापं मासेनैकेन नश्यति ।
अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः ॥
प्रविशन्ति मुखं ते मामपुनर्भाविनो जनाः ।
कुर्वन्त्यनशनं ये तु मद्भक्ताः कृतनिश्चयाः ॥
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।
अर्चयेद्यस्तु मां देवि ! ह्यविमुक्ते वरानने ! ॥
तस्य धर्मं प्रवक्ष्यामि यावदाप्नोति मानवः ।
दशसौवर्णिकं पुष्पं योऽविमुक्ते प्रयच्छति ॥
अग्निहोत्रफलं धूपे गन्धदानेन तच्छृणु ।
भूमिदानेन तत्तुल्यं गोप्रदानफलं स्मृतम् ॥
सम्मार्जने पञ्चशतं सहस्रमनुलेपने ।

---

१ पू० मी० अ० ११ पा० १ अधि० ८ ।

माल्ये शतसहस्रं तु अनन्तं गीतवादिते ॥

दशेत्यादि । एकस्मिन् पुष्पदाने दशसुवर्णदानजन्यफलम् । धूपेऽग्निहोत्रजन्यं, गन्धे भूमिदानजन्यं, सम्मार्जने गोपश्वशतीदानजन्यम्, अनुलेपने गोसहस्रदानजन्यं, गीतवाद्ये चानन्तगोदानजन्यं फलं भवतीत्यर्थः । सहस्रमित्यत्राविशेषितसहस्रपदस्य गोसहस्रपरत्वमिति कल्पतरौ व्याख्यानात् । अत्राप्यनन्तपदे तथात्वमौचित्यात्, 'गोप्रदानफलं स्मृतम्' इत्यस्यैवोत्तरोत्तरमन्वयाच्च ।

ब्राह्मे वाराणसीं प्रकृत्य—

तत्र दीपप्रदानेन ज्ञानवत् स्फुरतीन्द्रियम् ।
प्राप्नोति धूपदानेन स्थानं रुद्रनिषेवितम् ॥
वृषभं तरुणं सौम्यं चतुर्वत्सतरीयुतम् ।
यश्चाङ्कयित्वा मोचयति स याति परमां गतिम् ॥
पितृभिः सहितो मोक्षं गच्छत्यत्र न संशयः ।

अङ्कः चक्रत्रिशूलाभ्यां दक्षिणवामपार्श्वयोः । अन्यत्र तथादर्शनात् । अत एव इतिकर्तव्यान्तरमपि । न चाङ्कयित्वेति विशेषोपदेशादन्यबाधः । सर्वशाखाप्रत्ययमेकं कर्मेतिन्यायात् वृषोत्सर्गेतिकर्त्तव्यतानामन्यत्रोक्तानामिहान्वयात् । नापि तद्विकृतिभूतेऽत्र गवोत्सर्गे विशेषोपदेशादर्थादन्यबाधः । तेन सहास्य प्रकृतिविकृतिभावाभावात् । न हि तद्धर्मोऽत्रातिदिश्यते निषिध्यते वा येन तथा स्यात् किन्तु कर्मेदं स्वतन्त्रमेव विधीयते गोदानादिवदितिमिश्राः ।

किमत्र बहुनोक्तेन यद्दानं क्रियते नरैः ।
धर्मकर्मार्थमुद्दिश्य तदनन्तफलं स्मृतम् ॥

तथा,

अविमुक्ते महादेवमर्चयन्ति स्तुवन्ति वै ।
सर्वपापविमुक्तास्ते सन्तिष्ठन्त्यजरामराः ॥
अविमुक्तं समासाद्य लिङ्गमर्चयते नरः ।
कल्पकोटिशतैर्वापि तस्य नास्ति पुनर्भवः ॥
अजरो ह्यक्षयश्चैव क्रीडेत्स भवसन्निधौ ।
ये तु ध्यानं समासाद्य युक्तात्मानः समाहिताः ॥
सन्नियम्येन्द्रियग्रामं जपन्ति शतरुद्रियम् ।
अविमुक्ते स्थिता नित्यं कृतार्थास्ते द्विजोत्तमाः ॥

तथा,

एकाहमुपवासं यः करिष्यति यशस्विनि ! ।
फलं वर्षशतस्येह लभते मत्परायणः ॥
वर्षशतस्योपोषितस्येत्यर्थः ।

मात्स्ये,

राजप्रतिग्रहासक्तान् भृतकान् पूजयन्ति ये ।
ते रुद्रशापनिर्दग्धाः पतन्ति नरके ध्रुवम् ॥
ये पुनः सिद्धलिङ्गानां प्रासादानां च शक्तितः ।
कुर्वन्ति पूजां सत्कारं ते मुक्ता नात्र संशयः ॥
सिद्धलिङ्गानां पूजां प्रासादानां च सत्कारमित्यन्वयः ।

तथा,

खण्डस्फुटितसंस्कारं तत्र कुर्वन्ति ये नराः ।
ते रुद्रलोकमासाद्य मोदन्ते सुखिनः सदा ॥

काशीखण्डे,

अविमुक्तं समासाद्य यो लिङ्गं स्थापयेत् सुधीः ।
कल्पकोटिशतैर्वापि नास्ति तस्य पुनर्भवः ॥

तथा,

समागत्येह काश्यां यः कुर्यादेकं शिवालयम्।
तेन त्रैलोक्यमखिलं सालयं कृतमेव हि॥
तपांसि तेन तप्तानि शीर्णपर्णाशनान्यपि।
वाराणसीं समासाद्य येनाकारि शिवालयः॥
ब्रह्मवैवर्त्ते,
काश्यां रुद्रमयाः सर्वे जन्तवः श्रुतिनोदिताः।
ते पिबन्ति जलं यत्र तडागादौ तृषार्द्दिताः॥
तत्पुण्यं न मया वक्तुं शक्यं वर्षशतैरपि।
परन्तु सावधानैः स कर्त्तव्यो हि जलाशयः॥
अपराधो न भवति महापापकृदक्षयः।

पार्व्वत्युवाच।

जलाशये कृते देव! कारिते वा महात्मभिः।
कोऽपराधः पतेदत्र तन्ममाचक्ष्व शङ्कर!॥

महादेव उवाच।

काश्यां तिले तिले लिङ्गं काश्यां तीर्थं पदे पदे।
खननं काशिभूमेस्तु दुर्घटं तेन पार्व्वति!॥
जीर्णोद्धारं च ये कुर्युर्निःसन्देहा भवन्ति ते।
न तत्र लिङ्गपीडा स्यान्न तत्र खननं भवेत्॥
पाद्मे,
द्विजं स्वधर्मनिरतं यो वर्षाशनदानतः।
स्थापयेत् श्रद्धया युक्तस्तस्य पुण्यफलं शृणु॥
यावत्यः सिकताः सन्ति गङ्गायां मुनिसत्तम!।
तावद्वर्षसहस्राणि क्रीडेदिन्द्रेण सङ्गतः॥
पश्चादत्र महाराजो जायते निर्मले कुले।
दीर्घायुर्बहुपुत्रश्च सुखी शङ्करभक्तिमान्॥

अन्ते च लभते काशीं ततो निर्वाणमाप्नुयात् ।
अश्वत्थं पिचुमन्दं वा सहकारमथो लताम् ॥
यो रोपयति यत्नेन तस्याप्येतत्व फलं भवेत् ।

ब्रह्मवैवर्त्ते,

यः काश्यां वासयेदेकं स्थावरं वापि जङ्गमम् ।
यावत्कालं स वसति तावल्लक्षणगुणाधिकम् ॥
शिवलोके वसेत्कालमिति शास्त्रविनिश्चयः ।
यं कश्चिदपि वा काश्यामेकाहमपि वासयेत् ॥
वर्षकोटिशतं ब्रह्मन् ! रुद्रलोके महीयते ।
जन्मान्तरे पुनः काश्यां शिवज्ञानमवाप्स्यति ॥
त्रयो धर्माः सर्वधर्मादधिकास्त्वक्षयाः सदा ।
पिशाचमोचने तीर्थे लोष्टद्रोणं समुद्धरेत् ॥
न पीड्यते परे लोके स्वल्पयापि पिपासया ।
लोष्टद्रोणं द्रोणपरिमितां मृत्तिकामित्यर्थः ।
कुलस्तम्भस्य मूलेऽन्नं दद्यादामलकप्रभम् ।
परलोकेषु शेषेषु क्षुधया नैव पीड्यते ॥
एकं वा वासयेत् काश्यां वृक्षं गुल्मलतास्त्वपि ।
एकाहमपि वा धातर्यमलोकं न पश्यति ॥
क्षेत्रवासं विना वापि क्षेत्रवासफलं लभेत् ।

काशीखण्डे,

वित्तशाठ्यं परित्यज्य प्रासादं योऽत्र कारयेत् ।
तेन दत्तो भवेत्सर्वो मेरुर्नियुतयोजनः ॥
कूपवापीतडागानि शक्त्या योऽत्र तु कारयेत् ।
अन्यत्र करणात्तस्य पुण्यं कोटिगुणं भवेत् ॥
इज्यार्थमत्र यः कुर्यात् सुरम्यां पुष्पवाटिकाम् ।

पुष्पे पुष्पे फलं तस्य सुवर्णकुसुमाधिकम् ॥
इज्यार्थं, पूजार्थम् ।
अत्र ब्रह्मपुरीं कृत्वा यो विप्रेभ्यः प्रयच्छति ।
वर्षाशनेन संयुक्तां तस्य पुण्यफलं शृणु ॥
क्षीयन्ते सलिलान्यब्धेर्भौमाश्च त्रसरेणवः ।
क्षेपो न तस्य पुण्यस्य शिवलोके समासतः ॥
समासतः तिष्ठत इत्यर्थः ।
मठानपि तपस्विभ्यः कारयित्वाऽत्र योऽर्पयेत् ।
जीवनोपायसंयुक्तान् सोऽपि सर्वफलाश्रयः ॥
तथा,
चतुर्णामपि वेदानां पुण्यमध्ययनाच्च यत् ।
तत्पुण्यं जायते काश्यां गायत्रीलक्षजापतः ॥
तथा,
कृच्छ्रचान्द्रायणाद्यैश्च यच्छ्रेयः समुपार्ज्यते ।
तदेकेनोपवासेन भवत्यानन्दकानने ॥
अन्यत्र यत्तपस्तप्त्वा श्रेयः स्याच्छरदां शतम् ।
तदस्तु काश्यां वर्षेण भूमिशय्याव्रतेन हि ॥
आजन्ममौनव्रततो यदन्यत्र फलं स्मृतम् ।
तदस्तु काश्यां पक्षाहःसत्यवाक्यविभाषणात् ॥
अन्यत्र दत्वा सर्वस्वं सुकृतं यत्समाहितः ।
सहस्रभोजनात् काश्यां तद्रूपादयुताधिकम् ॥
तथा,
सन्निहत्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ।
तुलापुरुषदानेन काश्यां भिक्षासमा भवेत् ॥

१ पञ्चदशदिनानीत्यर्थः ।

तद्दिनपर्य्याप्ता भिक्षा दत्तेत्यर्थः। भिक्षाटनमित्यर्थ इति कश्चित्।

तथा,

भिक्षापि यत्र भिक्षुभ्यो दत्त्वाऽऽमलकसम्मिता।
सुमेरुणाऽपि तुलिता वाराणस्यां गुरुर्भवेत्॥
वाराणस्यां वर्षभोज्यं यो दद्यान्निरुपायिने।
स कदाचित्तृट्क्षुधार्तो दुःखं भुङ्क्ते नरर्षभः॥
वाराणस्यां निवसतां यत्पुण्यमुपजायते।
तदेव संवासयितुः फलं त्वविकलं भवेत्॥

तथा,

एकं प्रतिष्ठितं येन लिङ्गमत्रेशभक्तितः।
तेनात्मना समं विश्वं जगदेव प्रतिष्ठितम्॥
रत्नाकरे रत्नसङ्ख्या सङ्ख्यावद्भिरपीष्यते।
लिङ्गप्रतिष्ठापुण्यस्य न तु संङ्ख्येह विद्यते॥

तथा,

दातव्यमिति काश्यां नो वक्तव्यं मनुजैः क्वचित्।
अहोरात्रमतिक्रम्य तद्दानं द्विगुणं भवेत्॥
दशोत्तरं पर्वसु च शतं चन्द्रग्रहे भवेत्।
सूर्य्यग्रहे सहस्रं तु मरणेऽनन्तकं स्मृतम्॥
तस्माद्दातव्यमित्युक्त्वा देयमेव न चान्यथा।
बुधैस्तु देव वक्तव्यं दातुं शक्यं यदेव हि॥
उक्त्वा न दीयते यद्धि यातनावहमेव तत्।
दानमेव कलौ नृणां प्रायश्चित्तं न चेतरत्॥
काश्यामपि कृता दोषा नश्यन्ति हि सुदानतः।

वायवीये,

वाराणस्यां नगर्य्यां तु देयं श्राद्धं प्रयत्नतः।

तस्यां योगेश्वरो नित्यं तस्यां दत्तमथाक्षयम् ॥ इति ।

अथ नानालिङ्गानि ।

तत्र प्रथमं कृत्तिवासाः कीर्त्यते ।

कौर्म्ये,

हत्वा गजाकृतिं दैत्यं शूलेनावज्ञया हरः ।
वासस्तस्याकरोत्कृत्तिं कृत्तिवासेश्वरस्ततः ॥

तथा,

जन्मान्तरसहस्रेण मोक्षोऽन्यत्राप्यते न वा ।
एकेन जन्मना मोक्षः कृत्तिवासेऽत्र लभ्यते ॥

लैङ्गे,

रुद्राणां च शरीरं तु मध्यमेश्वरमीरितम् ।
कृत्तिवासः शिरः प्राहुरेतत् प्रियतमं मम ॥

तथा,

पश्चिमाभिमुखश्चाहं तस्मिन्नायतने स्थितः ।

तथा,

कृत्तिवासेश्वरं देवं ये नमन्ति शुभार्थिनः ।
ते रुद्रस्य शरीरे तु प्रविष्टा अपुनर्भवाः ॥
अनेनैव शरीरेण प्राप्ता निर्वाणमुत्तमम् ।

तथा,

कृत्तिवासेश्वरो देवो द्रष्टव्यश्च पुनः पुनः ।
यदीच्छेत्तारकं ब्रह्म शाश्वतं चामृतप्रदम् ॥

तथा,

दर्शनाद्देवदेवस्य ब्रह्महापि प्रमुच्यते ।
दर्शने पूजने चैव सर्वयज्ञफलं लभेत् ॥
श्रद्धया परया देवं येऽर्चयन्ति सनातनम् ।

फाल्गुनस्य चतुर्दश्यां कृष्णपक्षे समाहिताः ॥
पुष्पैः फलैस्तथान्यैश्च भक्ष्यैरुच्चावचैस्तथा ।
क्षीरेण मधुना चैव तोयेन सह सर्पिषा ॥
तर्पयन्ति परं लिङ्गमर्चयन्ति शिवं शुभम् ।
हुडुङ्कारनमस्कारैर्नृत्यगीतैस्तथैव च ॥
मुखवाद्यैरनेकैश्च स्तोत्रमन्त्रैस्तथैव च ।
उपोष्य रजनीमेकां भक्त्या परमया मुदा ॥
ते यान्ति परमं स्थानं सदाशिवमनामयम् ।
भूतेऽह्नि चैत्रमासस्य पूजयेत्परमेश्वरम् ॥
स वित्तेशपुरं प्राप्य क्रीडते यक्षराडिव ।
वैशाखस्य चतुर्दश्यां योऽर्चयेत् प्रयतः शिवम् ॥
विशाखलोकमासाद्य तस्यैवानुचरो भवेत् ।
ज्येष्ठमासचतुर्दश्यां योऽर्चयेच्छ्रद्धया हरम् ॥
स्वर्गलोके सुमुखि स क्रीडते यावदीप्सितम् ।
श्रावणस्य चतुर्दश्यां कामलिङ्गसमन्वितम् ॥
ददाति वारुणं लोकं क्रीडते चाप्सरैः सह ।
मासि भाद्रपदे युक्तमर्चयित्वा तु शङ्करम् ॥
पुष्पैः फलैश्च विविधैरिन्द्रस्यैति सलोकताम् ।
पितृपक्षे चतुर्दश्यां पूजयित्वा तथेश्वरम् ॥
सम्प्राप्य पितृलोकं तु क्रीडते पूजितस्तु तैः ।
प्रबोधमासे देवेशमर्चयित्वा महेश्वरम् ॥
स चन्द्रलोकमासाद्य क्रीडते यावदीप्सितम् ।
प्रबोधमासे, कार्त्तिकमासे ।
बहुले मार्गशीर्षस्य पूजयित्वा पिनाकिनम् ।
विष्णुलोकमवाप्नोति क्रीडते कालमक्षयम् ॥

अर्चयित्वा तथा पौषे स्थाणुं हृष्टेन चेतसा।
प्राप्नोति नैर्ऋतं स्थानं तेनैव सह मोदते ॥
माघे समर्चयित्वा वै पुष्पमूलफलैः शुभैः।
प्राप्नोति शिवलोकं तु त्यक्त्वा संसारसागरम् ॥
कृत्तिवासेश्वरं देवमर्चयेत्तं प्रयत्नतः।
अविमुक्ते च वस्तव्यं यदीच्छेन्मामकं पदम् ॥
गायन्ति सिद्धाः किल गीतकानि धन्याविमुक्ते तु नरा वसन्ति
स्वर्गापवर्गस्य पदस्य लिङ्गं ये कृत्तिवासं शरणं प्रपन्नाः ॥

कृष्णादिक्रमेण चतुर्दशीस्विमानि कर्माणि। शिवरात्रिमुपक्रम्य फाल्गुनादौ कथनात्।

तथा,

पूर्वजन्मकृतं पापं तपसापि विशुद्ध्यति।
तत्क्षणान्नश्यते पापं तस्य लिङ्गस्य दर्शनात् ॥ इति।

## अथ रत्नेश्वरः।

स्कान्दे,

यानि ब्रह्माण्डमध्येऽत्र सन्ति लिङ्गानि पार्वति !।
तैरर्चितानि सर्वाणि रत्नेशो यैः समर्चितः ॥

तथा,

रत्नेश्वरोऽर्चितो दद्यान्महारत्नानि भक्तितः।
रत्नैः समर्च्य तल्लिङ्गं स्त्रीरत्नादि लभेन्नरः ॥ इति।

## अथ मध्यमेश्वरः।

लैङ्गे,

मन्दाकिनीजले स्नात्वा दृष्ट्वा वै मध्यमेश्वरम्।
एकविंशकुलोपेतो रुद्रलोके वसेच्चिरम् ॥
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्।

पिण्डनिर्वपणं चैव सर्वं भवति चाक्षयम् ॥
तथा,
मन्दाकिनीमुपस्पृश्य राहुग्रस्ते दिवाकरे ।
यत्फलं लभते मर्त्यस्तस्माद्दशगुणं त्विह ॥ इति ।

अथ वृद्धकालेशः ।

काशीखण्डे,
वृद्धकालेश्वरं नाम लिङ्गमेतन्महीपते ! ।
तथा,
दर्शनात्स्पर्शनात्तस्य पूजनाच्छ्रवणान्नतेः ॥
वृद्धकालेशलिङ्गस्य सर्वं प्राप्नोति वाञ्छितम् ।
कूपः कालोदको नाम जराव्याधिविघातकृत् ॥
तदीयजलपानेन न मातुः स्तन्यपानवान् ।
न पुनर्जायत इत्यर्थः ।
कृतकूपोदकस्नानः कृत्वैतल्लिङ्गपूजनम् ।
वर्षेण सिद्धिमाप्नोति मनोभिलषितां नरः ॥
न च कुष्ठं न विस्फोटो न वन्ध्या न विचर्चिका ।
पीतात् स्पृष्टात् प्रतिष्ठन्ति कफाः कालोदकोदकात् ॥
नाग्निमान्द्यं नैव शूलं न मोहो न प्रवाहिका ।
न मूत्रकृच्छ्रं नो पामा पानीयस्यास्य सेवनात् ॥
भूतज्वराश्च ये केचित् ये केचिद्विषमज्वराः ।
ते क्षिप्रमुपशाम्यन्ति ह्येतत्कूपोदसेवनात् ॥
वृद्धकालेश्वरे लिङ्गे सेविते न दरिद्रता ।
नोपसर्गा न वा रोगा न पापं नाघजं फलम् ॥
अघजं फलं, दुःखम् ।
उत्तरे कृत्तिवासस्य वाराणस्यां प्रयत्नतः ।

वृद्धकालेश्वरं लिङ्गं द्रष्टव्यं सिद्धिकामुकैः ॥

लैङ्गे,

तस्य देवस्य चाग्रे तत्कूपं तिष्ठति वै शुभम् ।
तत्र कालोदकं नाम उदकं देवि ! तिष्ठति ॥
तस्यैव प्राशनाद्देवि ! पूतो भवति मानवः । इति ।

### अथापमृत्युहरेश्वरः ।

काशीखण्डे,

कालेश्वरसमीपे तु दक्षिणे वरवर्णिनि ! ।
मृत्युना स्थापितं लिङ्गं सर्वरोगविनाशनम् ॥ इति ।

### अथ घण्टाकर्णह्रद -व्यासेश्वरौ ।

तत्र लैङ्गे,

स्नानं कृत्वा ह्रदे तस्मिन् व्यासेशस्य च दर्शनात् ।
यत्र तत्र मृतो वापि वाराणस्यां मृतो भवेत् ।

काशीखण्डे,

घण्टाकर्णे महातीर्थे श्राद्धं कृत्वा विधानतः ।
अपि दुर्गतिमापन्नानुद्धरेत्सप्त पूर्वजान् ॥ इति ।

### अथ पराशरेश्वरः ।

काशीखण्डे,

पराशरेश्वरं लिङ्गं ज्येष्ठेशादुत्तरे महत् ।
तस्य दर्शनमात्रेण निर्मलं ज्ञानमाप्यते ॥ इति ।

### अथ व्याघ्रेश्वरः ।

काशीखण्डे,

व्याघ्रेश्वरस्य ये भक्तास्तेभ्यो बिभ्यति किङ्कराः ।
यामा अपि महाक्रूरा जय जीवेति वादिनः ॥

लैङ्गे,

व्याघ्रेश्वरेति विख्यातं सर्वदेवैः स्तुतं शुभे ! ।
तेन दृष्टेन लभते उत्तमं पदमव्ययम् ॥ इति ।

अथ ज्येष्ठेश्वरः ।

लैङ्गे,

तेन लिङ्गेन दृष्टेन पूजितेन स्तुतेन च ।
कृतकृत्यो भवेद्देवि ! संसारे न पुनर्विशेत् ॥
पूर्वामुखं तु तल्लिङ्गं ज्येष्ठस्थानमिदं शुभम् ।
मानवानां हितार्थाय तत्र स्थाने स्थितोऽस्म्यहम् ॥

तथा,

ज्येष्ठवाप्यां नरः स्नात्वा तर्पयित्वा पितामहान् ।
ज्येष्ठेश्वरं समालोक्य न भूयो जायते भुवि ॥

तथा,

ज्येष्ठेश्वरोऽर्च्यः प्रथमं काश्यां श्रेयोऽर्थिभिः स्थितैः ।
ज्येष्ठा गौरी ततोऽभ्यर्च्या सर्वज्यैष्ठ्यमभीप्सुभिः ॥ इति ।

अथाग्नीश्वरः ।

लैङ्गे,

तथाग्नीश्वरनामानं सर्वपापक्षयङ्करम् ।
तं दृष्ट्वा मानवो देवि ! अग्निलोके तु गच्छति ॥ इति ।

अथ जैगीषव्येश्वरः ।

लैङ्गे,

तस्मात्तत्संस्कृतं लिङ्गं पूजयिष्यन्ति ये नराः ।
ज्ञानं तेषां ध्रुवं देवि ! न चिरादेव जायते ॥
त्रिरात्रं तत्र कृत्वा वै यो नरः पूजयिष्यति ।
गुहां प्रविशते चैव ज्ञानयुक्तो भवेन्नरः ।

तथा,
जैगीषव्येश्वरं नाम लिङ्गं काश्यां सुदुर्लभम्।
त्रीणि वर्षाणि संसेव्य लभेद्योगं न संशयः॥ इति।

अथ कपर्दीश्वरः।

काशीखण्डे,
कपर्दीनाम गणपः शम्भोरत्यन्तवल्लभः।
पितॄणामुत्तरे भागे लिङ्गं संस्थाप्य शाम्भवम्॥
कुण्डं चखान तस्याग्रे विमलोदकसंज्ञकम्।
यस्य तोयस्य संस्पर्शाद्विमलो जायते नरः॥
तथा,
कपर्दीशं समभ्यर्च्य न नरो निरयं व्रजेत्।
न पिशाचत्वमाप्नोति कृत्वाप्यघमुत्कटम्॥ इति।
कौर्म्मे,
इदं देवस्य तल्लिङ्गं कपर्दीश्वरमुत्तमम्।
स्मृत्वैव शेषपापौघं क्षिप्रमस्य विमुञ्चति॥
कामक्रोधादयो दोषा वरणासीनिवासिनाम्।
विघ्नाः सर्वे विनश्यन्ति कपर्दीश्वरपूजनात्॥ इति।

अथाप्सरसेश्वरः।

काशीखण्डे,
ज्येष्ठेशाद्दक्षिणे भागे लिङ्गमप्सरसां शुभम्।
तत्रैवाप्सरसः कूपः सौभाग्योदकसंज्ञकः॥
तत्कूपजलसुस्नातो विलोक्याप्सरसेश्वरम्।
न दौर्भाग्यमवाप्नोति नारी वा पुरुषोऽथ वा॥ इति।

अथ त्रिलोचनः।

काशीखण्डे,

यत्रास्ति तन्महालिङ्गं वाराणस्यां त्रिलोचनम् ।
तीर्थं पिलिप्पिलाख्यं तत् त्रुनव्यम्भसि विश्रुतम् ॥
सर्वतीर्थमयं तीर्थं तत् काश्यां परिगीयते ।
तथा,
स्नात्वा पिलिप्पिलातीर्थे त्रिविष्टपसमीपतः ।
दृष्ट्वा त्रिलोचनं लिङ्गं किं भूयः परिशोचति ॥ इति ।
तथा,
त्रिलोचनस्य लिङ्गस्य महिमानं न कश्चन ।
सम्यग्वेत्ति महेशानि ! मयैव परिगोपितम् । इति ।

अथ त्रिलोचनप्राच्यां महादेवः ।

ब्रह्मवैवर्त्ते,
वाराणस्यां महादेवं समभ्यर्च्य सकृन्नरः ।
आभूतसम्प्लवं यावच्छिवलोके वसेत्सदा ॥ इति ।

अथ कामेशः ।

लैङ्गे कामकुण्डप्रकरणे,
तस्मादन्येऽपि ये केचित्तीर्थे तस्मिन् समाश्रिताः ।
आराधयन्तो देवेशं कामेशं चैत्र सर्वदा ॥
यो यस्य मनसा कामस्तं तमाप्नोति निश्चितम् ।
दक्षिणेन स्थितं लिङ्गं रुद्रावासस्य सुन्दरि ! ॥
कामेश्वरमिति ख्यातं सर्वकामफलप्रदम् ।
तथा,
गन्धधूपनमस्कारैर्मुखवाद्यैश्च सर्वदा ।
यो मामर्चयते तत्र तस्य तुष्याम्यहं सदा ॥
ददामि सर्वकामांश्च धर्मं मोक्षं तथैव च । इति ।

अथोङ्कारेश्वरः।

कल्पतरौ लिङ्गे,

ओङ्कारेश्वरनामानं देवानामपि दुर्लभम्।
वामदेवस्तु सावर्णिरघोरकपिलस्तथा॥
तत्र सिद्धिं परां प्राप्ता योगे पाशुपते स्थिताः।
अन्ये च ऋषयो देवा यक्षगन्धर्वगुह्यकाः॥
कलौ युगे गमिष्यन्ति तस्मिन् स्थाने स्थिताः सदा।
देव्या हि सा परा मूर्त्तिः कपिलेश्वरसंज्ञिता॥
कदाचिदस्य देवस्य दर्शने जाह्नवी प्रिये!।
मत्स्योदरी समायाति तत्र स्नानं तु मोक्षदम्॥
आराध्य कपिलेशं तु त्रैलोक्ये पालनक्षमाः।
भवन्ति पुरुषा देवि! मम नित्यं च वल्लभाः॥
ओङ्कारं तत्परं ब्रह्म सकलं निष्कलं शुभम्।
रुद्रलोकस्य तत् द्वारं रहस्यं परिकीर्त्तितम्॥

तथा,

अन्यच्च ते प्रवक्ष्यामि तस्मिन् क्षेत्रे सुरेश्वरि!।
तिस्रो नद्यस्तु तत्रस्था वहन्ति च शुभोदकाः॥
तासां दर्शनमात्रेण ब्रह्महत्या निवर्तते।
एकापि तस्य त्रिस्रोता मन्दाकिनी तथापरा॥
मत्स्योदरी तृतीया च एतास्तिस्रस्तु पुण्यदाः।
मन्दाकिनी तथा पुण्या मध्यमेश्वरसंस्थिता॥
पितामहस्रोतिका च अविमुक्ते तु पुण्यदा।
मत्स्योदरी तु ओङ्कारे पुण्यदा सर्वदैव हि॥
तस्मिन् स्थाने यदा गङ्गा आगमिष्यति भामिनि!।
तदा पुण्यतमः कालो देवानामपि दुर्लभः॥

वरणासिक्तसलिले जाह्नवीजलविप्लुते ।
तत्र नादेश्वरे पुण्ये स्नातः किमनुशोचति ॥
तस्मिन् काले च तत्रैव स्नानं देवि ! कृतं मया ।
तेन हस्ततलाद्देवि ! कपालं पतितं क्षणात् ॥
कपालमोचनं नाम तत्रैव सुमहत्सरः ।
पावनं सर्वसत्त्वानां पुण्यदं सर्वदेहिनाम् ॥
मत्स्योदरीजले गङ्गा ओङ्कारेश्वरसान्निधौ ।
तदा तस्मिन् जले स्नात्वा दृष्ट्वा चोङ्कारमीश्वरम् ॥
शोकं जरां मृत्युबन्धं ततो न स्पृशते नरः ।
तस्मिंस्तु यः शिवः साक्षादोङ्कारेश्वरसंज्ञितः ॥
एतद्रहस्यमाख्यातं स्नेहात्तव वरानने ! ।
अकारश्च उकारश्च मकारश्च प्रकीर्त्तितः ॥
तस्मिन् लिङ्गे तु संसिद्धो मुनिः कालिकवृक्षियः ।
अकारस्तत्र विज्ञेयो विष्णुलोकगतिप्रदः ॥
तस्य दक्षिणपार्श्वे तु उकारः परिकीर्त्तितः ।
तत्र सिद्धिं परां प्राप्तो देवाचार्य्यो बृहस्पतिः ॥
ओङ्कारस्तत्र विज्ञेयो ब्रह्मणः पदमव्ययम् ।
तयोस्तथोत्तरे भागे मकारं विष्णुसंज्ञितम् ॥
तस्मिन् लिङ्गे तु संसिद्धः कपिलर्षिर्महामुनिः ।
ब्रह्मवैवर्त्ते ओङ्कारमधिकृत्य-.
यदेतत् परमं स्थानं पञ्चायतनमुत्तमम् ।
सेवितं सूरिभिर्नित्यं वाराणस्यां विमोक्षदम् ॥ इति ।
पञ्चायतनं च स्पष्टीकृतम्—
लैङ्गे,
मत्स्योदरीतटे रम्ये सुरासिद्धनमस्कृते ।

रोचते मे सदा वासस्तस्मिन्नायतने शुभे ॥
इत्याद्युपक्रम्य—
श्रीकण्ठं नाम विख्यातं कपिलेश्वरदक्षिणे ।
तस्मिन् पाशुपतः सिद्ध ऋतध्वज इति स्मृतः ॥
मम चैव प्रसादेन योगैश्वर्यमवाप्नुयात् ।
तस्यैव चाग्रतो भद्रे ! लिङ्गं पूर्वमुखं स्थितम् ॥
तस्मिन् लिङ्गे तु जाबालः सिद्धिं परमिकां गतः ।
अपरं चैव लिङ्गं तु तस्य दक्षिणतः स्थितम् ॥
ओङ्कारेश्वरनामानं देवानामपि दुर्लभम् ।
तत्र सिद्धिं परां प्राप्तो मुनिः कालिकवृक्षियः ॥
सर्वेषामेव सिद्धानामुत्तमोत्तमसंस्थितः ।
तस्यैव दक्षिणे भद्रे ! लिङ्गं पश्चान्मुखं स्थितम् ॥
तस्मिन लिङ्गे तु संसिद्धो गार्ग्यश्च सुमहातपाः ।
पञ्चायतनमेतत्ते मया च कथितं शुभे ! ॥
न कस्य चिन्मयाऽऽख्यातं रहस्यं परमाद्भुतम् ।
पञ्चब्रह्मेतिविख्यातमेतदद्यापि सुन्दरि ! ॥
केचित्तु—
कृत्तिवासेश्वरं लिङ्गं मध्यमेश्वरमुत्तमम् ।
विश्वेश्वरं तथोङ्कारं कपर्दीश्वरमेव च ॥
एतानि गुह्यलिङ्गानि वाराणस्यां द्विजोत्तमाः ! ।
न कश्चिदिह जानाति विना शम्भोरनुग्रहात् ॥
इति ब्रह्मवैवर्त्तादिदमेव पञ्चकं पञ्चायतनमाहुः ।
काशीखण्डे,
अकाराख्यमिदं लिङ्गमुकाराख्यमिदं परम् ।
मकाराख्यमेतच्च नादाख्यं बिन्दुसंज्ञकम् ॥

पञ्चायननमीशानमित्थमेतदुदीरितम् । इति ।

तथा,

ओङ्कारदर्शनादेव वाजिमेधफलं लभेत् ।
तस्मात्काश्यां प्रयत्नेन दृश्य ओङ्कार ईश्वरः ॥

तथा,

ओङ्कारं सकृदप्यत्र नरो नत्वा प्रयत्नतः ।
कृतकृत्यो भवेन्नूनं परमान्मदनुग्रहात् ॥ इति ।

अथ गोप्रेक्षेशः ।

स्कान्दे,

गोप्रेक्षेश्वरमागत्य दृष्ट्वाभ्यर्च्य च मानवः ।
न च दुर्गतिमाप्नोति कल्मषैश्च विमुच्यते ॥ इति ।

अथ शैलेशः ।

लैङ्गे,

पित्रा ते गिरिराजेन स्वयं हिमवता प्रिये ! ।
मम प्रियं तु तत् स्थानं ज्ञात्वा लिङ्गं प्रतिष्ठितम् ॥
शैलेश्वरमितिख्यातं दृश्यतामिह मां स्थितम् ।
दृष्ट्वैनं मनुजो देवि ! न दुर्गतिमवाप्नुयात् ॥

काशीखण्डे,

वरणायां कृतस्नानैः शैलेशो यैः समर्चितः ।
पितॄन् सन्तर्प्य च मुदा दत्त्वा दानानि शक्तितः ॥
न तेषां पुनरावृत्तिरत्र संसारवर्त्मनि । इति ।

अथ कपिलाह्रदमाहात्म्यम् ।

स्कान्दे,

ततस्ता दह्यमानास्तु प्रसवैः सुरभीरपि ।
ह्रदेऽस्मिन् पेतुरभ्येत्य शान्तास्तोयं पपुस्तदा ॥

कपिलाह्रद इत्येवं ततः प्रभृति कथ्यते ।
अत्रापि स्वयमेवाहं वृषध्वज इति स्मृतः ॥
सांनिध्यं कृतवान्देवि ! सदाहं पश्यतां स्थितः ।
कपिलाह्रदतीर्थेऽस्मिन् स्नात्वा संयतमानसः ॥
वृषध्वजमिमं दृष्ट्वा सर्वयज्ञफलं लभेत् ।
स्वर्लोकतां मृतश्चापि अर्चयित्वा तु मामिह ॥
लभते देहभेदेन गणत्वं चातिदुर्लभम् ।
अस्मिन्नेव प्रदेशे तु गावो वै ब्रह्मणा स्वयम् ॥
शान्त्यर्थं सर्वलोकानां सर्वा दुग्धा यथासुखम् ।
भद्रदोहं सरस्तत्तु पुण्यं पापहरं शुभम् ॥
शिवो भूत्वाहमत्रस्थः स्वर्गो मद्दर्शनाद्भवेत् ।
अतोऽहं ब्रह्मणानीय स्थापितः परमेष्ठिना ॥
ब्रह्मणश्चापि सङ्गृह्य विष्णुना स्थापितः पुनः ।
हिरण्यगर्भ इत्येव तत्राहं समुपस्थितः ॥
पुनश्चापि ततो ब्रह्मा स्वर्लीनेश्वरसंज्ञकम् ।
स्थापयामास मे लिङ्गं स्वर्लीने कारणे मम ॥
दृष्ट्वैनमपि देवेशं मम लोके महीयते ।
प्राणानिह नरस्त्यक्त्वा न पुनर्जायते क्वचित् ॥
अनन्ता सा गतिस्तस्य योगिनामेव सा स्मृता ।
अस्मिन्नेव महादेशे दैत्यो दैवतकण्टकः ॥
व्याघ्ररूपं समासाद्य निहतो दर्पतो बली ।
व्याघ्रेश्वर इति ख्यातो नित्यमत्राहमास्थितः ॥
न पुनर्दुर्गतिं याति दृष्ट्वैनममरेश्वरम् ।
कल्परौ लैङ्गे,
पञ्चायतनसमीपे कूपस्तिष्ठति सुन्दरि ! ।

तस्मिन् कूप उपस्पृश्य दीक्षाफलमवाप्नुयात् ॥
तस्य दक्षिणदिग्भागे रुद्रावासः प्रकीर्त्तितः ।
रुद्रस्योत्तरपार्श्वे तु पञ्चायतनदक्षिणे ॥
तत्र कुण्डं महत्प्रोक्तं महापातकनाशनम् ।
तस्मिन् कुण्डे नरः स्नात्वा अभीष्टं फलमाप्नुयात् ॥
चतुर्दश्यां यदा योग आर्द्राऋक्षेण संयुतः ।
तदा पुण्यतमः कालस्तस्मिन् स्थाने महत्फलम् ॥
तस्मिन् तीर्थे नरः स्नात्वा दृष्ट्वा रुद्रं च भामिनि ! ।
यत्र तत्र मृतो देवि ! रुद्रलोकं च गच्छति ॥

तथा,

कपिलाह्रदनामावं ख्यातं सर्वसुरासुरैः ।
तस्मिन् ह्रदे तु यः स्नानं कृत्वा भक्तिपरायणः ॥
वृषध्वजं च यो दद्यात् राजसूयफलं लभेत् ।
नरकस्थितास्तु ये केचित् पितरः सपितामहाः ॥
पितृलोकं तु गच्छन्ति तस्मिन् श्राद्धे कृते तु वै ।
गयातोऽष्टगुणं प्रोक्तं पुराणार्थविशारदैः ॥
तस्मिन् श्राद्धे कृते भद्रे ! पितॄणामनृणो भवेत् ।

तथा,

कपिलाह्रदतीर्थेऽस्मिन् स्नात्वा संयतमानसः ।
वृषध्वजमिमं दृष्ट्वा सर्वयज्ञफलं लभेत् ॥

भारते,

ततो वाराणसीं गत्वा देवमर्च्य वृषध्वजम् ।
कपिलाह्रदमुपस्पृश्य राजसूयफलं लभेत् ॥

काशीखण्डे,

एतस्मिन् कापिले तीर्थे कापिलेयपयोभृते ।

ये पिण्डान्निर्वपिष्यन्ति श्रद्धया श्राद्धदा नराः ॥
तेषां पितॄणां सन्तृप्तिर्भविष्यति ममाज्ञया।

तथा,

अमायां सोमयुक्तायां श्राद्धात् कापिलधारिके।
येषां गर्भे ऽभवत् स्रावो येऽदन्तजनना मृताः ॥
तेषां तृप्तिर्भवेन्नूनं तीर्थे कापिलधारिके। इति।

लैङ्गे,

वरणायास्तटे शुद्धे लिङ्गं तत्रैव संस्थितम्।
वरणेश्वरं तु विख्यातं पश्चिमाभिमुखं स्थितम् ॥

तथा,

ममापि तत्र सान्निध्यं तस्मिन् लिङ्गे यशस्विनि !।
तेन दृष्टेन सुश्रोणि ! गन्धर्वत्वं च विन्दति ॥ इति।

## अथ विष्णुपादोदकम्।

काशीखण्डे,

तदा प्रभृति तत्तीर्थं पादोदकमितीरितम्।
पादौ यदादौ शुभदौ क्षालितौ पीतवाससा ॥
तत्र पादोदके तीर्थे ये स्नास्यन्तीह मानवाः।
तेषां विनश्यति क्षिप्रं पापं सप्तभवार्जितम् ॥
तत्र श्राद्धं नरः कृत्वा दत्त्वा चैव तिलोदकम्।
सप्त सप्त तथा सप्त स्ववंश्यांस्तारयिष्यति ॥

एकविंशतिस्ववंश्यानित्यर्थः।

तथा,

कृतपादोदकस्नानं पीतपादोदकं तथा।
दत्तपादोदपानीयं नरं न निरयः स्पृशेत् ॥

### अथादिकेशवः ।

**काशीखण्डे,**

वेदेश्वरादुदीच्यां तु क्षेत्रेशश्चादिकेशवः ।
दृष्टं त्रिभुवनं सर्वं तस्य सन्दर्शनात् ध्रुवम् ॥

### अथ केदारः ।

**काशीखण्डे,**

तुषाराद्रिं समारुह्य केदारं वीक्ष्य यत्फलम् ।
तत्फलं सप्तगुणितं काश्यां केदारदर्शनात् ॥

**तथा,**

केदारकुण्डे यः स्नात्वा पिण्डान्दास्यति चात्वरः ।
एकोत्तरशतं वंश्यास्तस्य तीर्णा भवाम्बुधिम् ॥
केदारं गन्तुकामस्य बुद्धिर्देया नरैरियम् ।
काश्यां स्पृशंस्त्वं केदारं कृतकृत्यो भविष्यसि ॥
आषण्मासं त्रिकालं यः केदारेशं नमस्यति ।
तं नमस्यन्ति सततं लोकपालाय मादयः ॥

**तथा,**

सायं केदार केदार केदारेति त्रिरुच्चरन् ।
गृहेऽपि निवसन्नूनं यात्राफलमवाप्नुयात् ॥

**ब्रह्मवैवर्ते,**

ज्ञानवाप्यां नरः स्नात्वा तारकेशं विलोक्य च ।
कृतसन्ध्यादिनियमः परितर्प्य पितामहान् ॥
धृतमौनव्रतो धीमान् यावल्लिङ्गविलोकनम् ।
मुच्यते सर्वपापेभ्यः पुण्यं प्राप्नोति शाश्वतम् ॥
अन्ते च तारकं ज्ञानं यस्मात् ज्ञानाद्विमुच्यते ।
मुनेऽन्यच्च महालिङ्गं करुणेश्वरसंज्ञकम् ॥

मोक्षद्वारसमीपे तु मोक्षद्वारेश्वराग्रतः।
दर्शनात्तस्य लिङ्गस्य महाकारुणिकस्य वै॥
न क्षेत्रान्निर्गमो जातु बहिर्भवति कर्हिचित्।
अमृतेश्वरनामेदं लिङ्गमानन्दकानने॥
एतल्लिङ्गस्य संस्पर्शादमृतत्वं भवेद्ध्रुवम्।
इदं स्वर्गद्वारसमीपे। विश्वकर्मेश-पार्वतीश-गङ्गेश-नर्मदे-श्वर-सतीश्वरास्तत्रैव विस्तरेणोक्ताः।
मोक्षद्वारेश्वरं चैव स्वर्गद्वारेश्वरं तथा।
उभौ काश्यां नरो दृष्ट्वा स्वर्गं मोक्षं च विन्दति॥
चक्रपुष्करिणीतीरे ज्योतीरूपेश्वरं परम्।
समभ्यर्च्याप्नुयान्मर्त्यो ज्योतीरूपं न संशयः॥
तथा,
चन्द्रेश्वरस्य पूर्वेण लिङ्गं विद्येश्वराभिधम्।
सर्वा विद्याः प्रसन्नाः स्युस्तस्य लिङ्गस्य सेवनात्॥
ब्रह्मवैवर्त्ते,
मणिकर्णीश्वरं लिङ्गं मोक्षद्वारमपावृतम्।
तस्य दर्शनतः सम्यङ्मणिकर्णी समाप्यते॥
यत्काश्यां दक्षिणद्वारमन्तर्गेहस्य कीर्त्यते।
तत्र ब्रह्मेश्वरं दृष्ट्वा ब्रह्मलोके महीयते॥
गोकर्णेशं महालिङ्गमन्तर्गेहस्य पश्चिमे।
द्वारे समर्च्य वै काश्यां न विघ्नैरभिभूयते॥
भारभूतेश्वरं लिङ्गं भारभूतगणार्चितम्।
अन्तर्गेहोत्तरद्वारि ध्यात्वा शिवपुरे वसेत्॥
अविमुक्तेश्वरात् पश्चान्मोक्षेशं वीक्ष्य मानवः।
न पुनर्मानवे लोके यातायातं करोत्यहो॥

त्रिसन्ध्येश्वरमालोक्य कृतसन्ध्यस्त्रिकालतः ।
त्रिवेदावर्त्तजं पुण्यं प्राप्नुयाच्छ्रद्धया द्विजः ॥
ततोऽनु योगिनीतीर्थे नरस्तत्र कृताप्लुतः ।
दृष्ट्वा तु योगिनीपीठं योगसिद्धिमवाप्नुयात् ॥

तथा,

अग्रे कृत्वा स्थिताः सर्वास्ताः काश्यां मणिकर्णिकाम् ।
तन्नमस्कारमात्रेण नरो विघ्नैर्न बाध्यते ॥

ताः, चतुष्षष्टियोगिन्यः । दशाश्वमेधसमीपे योगिनीपीठमिति त्वाचारमात्रम् ।

तथा,

गङ्गाकेशवसंज्ञं च सर्वपातकनाशनम् ।
तत्र मे शुभदां मूर्त्तिं मुने तत्तीर्थसंज्ञिकाम् ॥
सम्पूज्य श्रद्धया धीमान् मम लोके महीयते ।

तथा,

शुक्रेश्वरस्य ये भक्ताः शुक्रलोके वसन्ति ते ।
विश्वेश्वराद्दक्षिणतः शुक्रेशोऽस्ति परन्तप ! ॥

काशीखण्डे मणिकर्णीशमभिधाय—

ततः पाशुपतं तीर्थमवाच्यां मणिकर्णितः ।
कृतोदकक्रियस्तत्र पश्येत्पशुपतीश्वरम् ॥
यत्र पाशुपतो योग उपदिष्टः पिनाकिना ।
ममापि विधिमुख्यानां सुराणां पशुपाशकृत् ॥
ध्रुवेश्वरं समभ्यर्च्य ध्रुवकुण्डे कृतोदकः ।
ध्रुवलोकमवाप्नोति नरो भोगसमन्वितः ॥

तथाऽगस्त्यं प्रति स्कन्दः—

तव तत्र तु यत्कुण्डमगस्तीश्वरसन्निधौ ।

तत्र स्नात्वा च पीत्वा च कृतसर्वोदकक्रियः ॥
पितॄन् पिण्डैः समभ्यर्च्य श्रद्धाश्राद्धविधानतः ।
कृतकृत्यो भवेज्जन्तुर्वाराणस्याः फलं लभेत् ॥
ईशानेशं समभ्यर्च्य काश्यां देशान्तरेष्वपि ।
विपन्नास्तेन पुण्येन जायन्तेऽत्र पुरोहिताः ॥

लैङ्गे,

ध्रुवेशस्याग्रतो देवि ! मुख्यलिङ्गं च तिष्ठति ।
पश्चान्मुखं तु तल्लिङ्गं तीरे कुण्डस्य भामिनि ! ॥
वैद्यनाथं तु तं विद्यात्सर्वसौख्यप्रदायकम् ।
अगस्त्येशाद्दक्षिणतो लिङ्गं पूर्वमुखं स्थितम् ॥
पुलस्त्येश्वरनामानं सर्वारोग्यविवर्द्धनम् ।
तस्य दक्षिणदिग्भागे लिङ्गमन्यच्च तिष्ठति ॥
पुष्पदन्तेश्वरं नाम सर्वसिद्धिप्रदायकम् । इति ।

अथ धर्मेशः ।

काशीखण्डे,

धर्मेश्वरं यः सकृदेव मर्त्यो विलोकयिष्यत्यवदातबुद्धिः ।
स्नात्वा पुरस्तत्र च धर्मतीर्थे न तस्य दूरे पुरुषार्थसिद्धिः ॥
इदं धर्मं प्रति शिवेनोक्तम् ।

तथा,

यदत्र दास्यन्ति हि धर्मपीठे नरा धुनद्यां कृतमज्जनाश्च ।
तदक्षयं भावियुगान्तरेष्वपि कृतप्रणामास्तव धर्मलिङ्गे ॥

अथ धर्मकूपः ।

ब्रह्मवैवर्त्ते,

धर्मकूपे नरः स्नात्वा परितर्प्य पितामहान् ।
गयां गत्वा किमधिकं कर्त्ता पितृमुदावहम् ॥

यथा गयायां तृप्ताः स्युः पिण्डदाने पितामहाः ।
धर्मतीर्थे तथैव स्युर्न न्यूनं नैव चाधिकम् ॥
तत्कूपे स्वं निरीक्ष्यापि श्राद्धदानफलं लभेत् ।
तत्रापि काकिनीमात्रं यच्छेत् पितृमुदे नरः ॥
अक्षयं फलमाप्नोति धर्मपीठप्रभावतः ।
तत्र यो भोजयेद्विप्रान् यतिनोऽथ तपस्विनः ॥
सिक्थे सिक्थे लभेत्सोऽथ वाजपेयफलं स्फुटम् ।
तत्र वटोऽपि महाफलस्तत्र दर्शितः ।

तथा,

त एव विश्वभोक्तारो विश्वमान्यास्त एव हि ।
ये त्वां विश्वभुजामत्र पूजयिष्यन्ति मानवाः ।
विश्वभुजां विश्वबाहुकेतिख्याताम् ।

अथ वीरेशः ।

सिद्धैः संसेवितं लिङ्गं सर्वसिद्धिकरं परम् ।
दर्शनात्स्पर्शनाद्यस्य मनो निर्वृत्तिभाग्भवेत् ॥
पाश्वमुद्रे महापीठे सिद्धिदे सर्वजन्तुषु ।
यत्र सा विकटा देवी प्रसिद्धा सिद्धिरूपिणी ॥
तिलान्तरापि नो काश्यां भूमिर्लिङ्गं विना क्वचित् ।
परं वीरेशसदृशं न लिङ्गं त्वाशु सिद्धिदम् ॥
धर्मदं मोक्षदं सम्यक् कामदं सुखदं तथा ।
यथा वीरेश्वरं लिङ्गं काश्यां नान्यत्तथा ध्रुवम् ॥
असङ्ख्याताः सहस्राणि सिद्धाः सिद्धिमितो गताः ।
सिद्धलिङ्गमितिख्यातं तस्माद्वीरेश्वरं परम् ॥

लैङ्गे,

चन्द्रेश्वरस्य पूर्वेण लिङ्गं वीरेश्वरं शुभम् ।

लभेद्वैद्याधरं लोकं तस्य लिङ्गस्य दर्शनात् ॥

तथा,

यस्तु वीरेश्वरं लिङ्गं नक्तमभ्यर्चयिष्यति ।
तेन त्रिकोटिसङ्ख्यानि लिङ्गानीहार्चितानि वै ॥
एकामप्याहुतिं दत्त्वा वीरेश्वरसमीपतः ।
कोटिहोमफलं सम्यङ् नात्र कार्य्या विचारणा ॥
अप्येकं यो महारुद्रं जपेद्वीरेशसन्निधौ ।
जापयेद्वा भवेत्तस्य कोटिरुद्रफलं ध्रुवम् ॥
व्रतोत्सर्गादि वीरेशे यत् कृतं व्रतिभिर्नृभिः ।
तत्‌ कोटिगुणसङ्ख्याकं भवत्येव न संशयः ॥

इत्यादि काशीखण्डे द्रष्टव्यम् ।

ब्रह्मपुराणे,

पार्श्वमुद्रे महापीठे वीरेश्वरसमीपतः ।
विकटाख्या महादेवी पूजनीया हितेप्सुभिः ॥

लैङ्गे हरिश्चन्द्रेश्वरं प्रकृत्य—

यत्र सिद्धो महात्मा वै हरिश्चन्द्रो महाबलः ।
तं दृष्ट्वा मानवो देवि ! रुद्रस्य पदमाप्नुयात् ॥
पूर्वामुखं तु तल्लिङ्गं स्वर्लोकस्य प्रदायकम् ।
मोक्षेश्वरं च तत्रैव स्वर्गेश्वरमतः परम् ॥
एतौ दृष्ट्वा सुरेशानि ! स्वर्गं मोक्षं च विन्दति ।
वासुकीश्वरनामानं तयोश्चोत्तरः स्थितम् ॥

स्कान्दे,

चन्द्रेश्वरं समभ्यर्च्य यद्यन्यत्रापि संस्थितः ।
अघौघपटलीं भित्त्वा सोमलोकमवाप्स्यति ॥
कलौ चन्द्रेशमहिमा नाभाग्यैरिह गम्यते ।

सिद्धयोगेश्वरीपीठमेतत्साधकसिद्धिदम् ॥
षण्मासं नियताहारो ध्यायन्विश्वेश्वरीमिह ।
चन्द्रेश्वरार्च्चनायातान् सिद्धान् पश्यति सोऽग्रगान् ॥
सिद्धयोगेश्वरी साक्षाद्वरदा तस्य जायते ।
सन्ति पीठान्यनेकानि क्षितौ साधकसिद्धये ॥
परं योगेश्वरीपीठाद्द्रष्टुं नाशुसिद्धिदम् ।
यत्र चन्द्रेश्वरं लिङ्गं त्वयेदं स्थापितं शशिन् ! ॥
इदमेव हि तत्पीठमदृश्यमकृतात्मभिः ॥
सिद्धयोगेश्वरी, सिद्धेश्वरीतिख्याता ।
ब्रह्मवैवर्त्ते,
चन्द्रेश्वराद्दक्षिणतो वीरेशान्नैर्ऋते स्थितम् ।
आराध्य धिषणेशं वै गुरुलोके महीयते ॥
धिषणेशो, बृहस्पतीश्वरः ।
तथा,
चन्द्रेश्वरात्पूर्वभागे दृष्ट्वा लिङ्गं बुधेश्वरम् ।
न बुद्ध्या हीयते जन्तुरन्तकालेऽपि जातुचित् ॥
तथा,
स्वर्गद्वारं विशेयुर्ये विगाह्य मणिकर्णिकाम् ।
तेषां विधूतपापानां क्वापि स्वर्गो न दूरतः ॥
तथा,
प्रभासतीर्थं विख्यातं ततोऽपि शुभदं नृणाम् ।
सोमेश्वरस्य पुरतस्तत्र स्नातो न गर्भभाक् ॥
जरासन्धेशतीर्थं च जरासन्धेशसन्निधौ ।
संसारज्वरपीडाभिस्तत्र स्नातो न मुह्यति ॥
लैङ्गे,

तस्यैव दक्षिणे भागे जरासन्धेश्वरं स्थितम्।
चतुर्मुखं तु तल्लिङ्गं दृष्टं देवि! फलप्रदम्॥
ब्रह्मवैवर्त्ते,
वाराणस्यां विशालाक्षी क्षेत्रस्य परमेष्टदा।
विशालतीर्थं गङ्गायां कृत्वा पृष्ठे व्यवस्थिता॥
स्नात्वा विशालतीर्थे वै विशालाक्षीं प्रणम्य च।
विशालां लभते लक्ष्मीं परत्रेह च शर्मदाम्॥
तथा,
ततोऽन्यल्ललितातीर्थं गङ्गाकेशवसन्निधौ।
तत्रास्ति ललिता गौरी क्षेत्ररक्षाकरी परा॥
सा च पूज्या प्रयत्नेन सर्वसम्पत्समृद्धये।
ललितापूजकानां च जातु विघ्नो न जायते॥
अन्यास्ति काश्यां वाराही क्रतुवाराहसन्निधौ।
तां प्रणम्य नरो भक्त्या विपदब्धौ न मज्जति॥
चित्रकूपे नरः स्नात्वा विचित्रफलदे नृणाम्।
चित्रगुप्तेश्वरं वीक्ष्य चित्रघण्टां प्रणम्य च॥
न चित्रगुप्तलेख्यः स्याच्चित्रघण्टार्चको नरः।
सन्ति पीठान्यनेकानि काश्यां सिद्धिप्रदान्यपि॥
महालक्ष्मीपीठसमं नान्यल्लक्ष्मीकरं परम्।
स्नात्वा श्रीकुण्डतीर्थे तु समर्च्य जगदम्बिकाम्॥
दत्त्वा दानानि विधिवन्न लक्ष्म्या परिमुच्यते।
भीमचण्डीं नरो दृष्ट्वा भीमकुण्डे कृतोदकः॥
भीमाकृतीन्न वै पश्येद्याम्यान् भूतान् कचित्कृती।
काशीखण्डे,
अग्नीश्वरं समभ्यर्च्य काश्यां सर्वसमृद्धिदम्।

अन्यत्रापि मृतो दैवादग्निलोके महीयते ॥
ततः काशीं समासाद्य कल्पान्ते मोक्षमाप्नुयात् ।
लैङ्गे,
अन्यदायतनं वक्ष्ये वाराणस्यां सुरेश्वरि ! ।
रामेण स्थापितं लिङ्गं लङ्कायामागतेन ह ॥
तस्य दक्षिणपार्श्वे तु लिङ्गं पूर्वमुखं स्थितम् ।
त्रिपुरान्तकरं नाम सर्वपापप्रणाशनम् ।
तस्यैव दक्षिणे लिङ्गं दत्तात्रेयप्रतिष्ठितम् ॥
ज्ञानं चोत्पद्यते देवि ! तस्य लिङ्गस्य दर्शनात् ।
तस्य पश्चिमदिग्भागे हरिकेशेश्वरं शुभम् ॥
तत्रैवाराधितो देवि ! हरिकेशेन सुव्रते ! ।
हरिकेशेश्वरो देवः सर्वकिल्बिषनाशनः ॥ इति ।

अथाऽऽदित्याः ।

तत्र काशीखण्डे,
लोलार्क उत्तरार्कश्च साम्बादित्यस्तथैव च ।
चतुर्थो द्रुपदादित्यो मयूखादित्य एव च ॥
खखोल्कश्चारुणादित्यो वृद्धकेशवसंज्ञकौ ।
दशमो विमलादित्यो गङ्गादित्यस्तथैव च ॥
द्वादशश्च यमादित्यः काशिपुर्य्यां घटोद्भव ! । इति ।

तत्रादौ लोलार्कः ।

काशीखण्डे,
लोलार्कस्त्वासिसम्भेदे दक्षिणस्यां दिशि स्थितः ।
योगक्षेमं सदा कुर्यात् काशिवासिजनस्य च ॥
मार्गशीर्षस्य सप्तम्यां षष्ठ्यां वा रविवासरे ।
विधाय वार्षिकीं यात्रां नरः पापैः प्रमुच्यते ॥

कृतानि यानि पापानि नरैः संवत्सरावधि।
नश्यन्ति क्षणतस्तानि षष्ठ्यर्के लोलदर्शनात्॥
एतद्वचनात् षष्ठ्यर्कमात्र एवेदं फलमित्येके। वस्तुतः प्रकरणान्मार्गशीर्षषष्ठ्यर्क एवेदं फलमिति।
तथा,
सूर्योपरागे लोलार्के स्नानदानादिकाः क्रियाः।
कुरुक्षेत्राद्दशगुणा भवन्तीह न संशयः॥
तथा,
प्रत्यर्कवारं लोकार्कं यः पश्यति शुचिव्रतः।
न तस्य दुःखं लोकेऽस्मिन् कदाचित् सम्भविष्यति॥
न तस्य दुःखं नो पामा न दद्रुर्न विचर्चिका।
लोलार्कमर्के यः पश्येत् तत्पादोदकसेवकः॥
वाराणस्यामुषित्वापि यो लोलार्कं न सेवते।
सेवन्ते तं नरं नूनं क्लेशाः क्षुद्व्याधिसम्भवाः॥ इति।

अथोत्तरार्कः।

काशीखण्डे,
अथोत्तरस्यामाशायां कुण्डमर्काख्यमुत्तमम्।
तत्र नाम्नोत्तरार्केण रश्मिमाली व्यवस्थितः॥
तापयन् दुःखसङ्घातं साधूनाप्याययन्नितिः।
उत्तरार्को महातेजाः काशीं रक्षति सर्वदा॥ इति।

अथ साम्बादित्यः।

तत्र काशीखण्डे,
साम्बकुण्डे नरः स्नात्वा रविवारेऽरुणोदये।
साम्बादित्यं च सम्पूज्य व्याधिभिर्नाभिभूयते॥
न स्त्री वैधव्यमाप्नोति साम्बादित्यस्य सेवनात्।

वन्ध्याऽपत्यं प्रसूयेत श्रुतरूपसमन्वितम् ॥
शुक्लायां द्विज सप्तम्यां माघे मासि रवेर्दिने ।
महापर्व समाख्यातं रविपर्वसमं शुभम् ॥
रविपर्व, सूर्य्यग्रहणम् ।
महारोगात्प्रमुच्येत तत्र स्नात्वाऽरुणोदये ।
तत्र, साम्बकुण्डे सूर्यकुण्डत्वेन ख्याते ।
साम्बादित्यं प्रपूज्यापि धर्ममक्षयमाप्नुयात् ॥
सन्निहत्यां कुरुक्षेत्रे यत्पुण्यं राहुदर्शने ।
तत्पुण्यं रविसप्तम्यां माघे काश्यां न संशयः ॥
काश्यां, प्रकरणात् साम्बादित्यदर्शनादितिशेषः ।
माघे[1] मासि रवेर्वारे यात्रा साम्वत्सरी भवेत् ।
अशोकैस्तत्र सम्पूज्य कुण्डे स्नात्वा विधानतः ॥
साम्बादित्यं नरो जातु न शोकैः परिभूयते ।
सम्वत्सरकृतात् पापाद्बहिर्भवति तत्क्षणात् ॥ इति ।

अथ द्रुपदादित्यः ।

काशीखण्डे,

रविरुवाच ।

विश्वेशाद्दक्षिणे भागे यो मां त्वत्पुरतः स्थितम् ।
आराधयिष्यति नरः क्षुद्बाधा तस्य नश्यति ॥
अन्यश्च मे वरो दत्तो विश्वेशेन पतिव्रते ! ।
तपसा परितुष्टेन तन्निशामय वच्मि ते ॥
प्राग्रते ! त्वां समाराध्य यो मां द्रक्ष्यति मानवः ।
तस्य त्वं दुःखतिमिरमपानुद निजैः करैः ॥
अतो धर्मप्रिये ! नित्यं प्राप्य विश्वेश्वराद्वरम् ।

---

१ मघौ इति पाठे चैत्रे इत्यर्थः ।

काशीस्थितानां जन्तूनां नाशयाम्यघसञ्चयम् ॥
ये मामत्र भजिष्यन्ति मानवाः श्रद्धयान्विताः। इति।

अथ मयूखादित्यः।

काशीखण्डे,

अपरं द्युमणे! वच्मि तव चात्र तपस्यतः।
मयूखा एव ते[1] दृष्टा न च दृष्टं कलेवरम् ॥
मयूखादित्य इत्याख्या ततस्तेऽदितिनन्दन!।
नृणां त्वदर्चनात् कश्चिन्न व्याधिः प्रभविष्यति ॥
भविष्यति न दारिद्र्यं रविवारे त्वदीक्षणात्। इति।

अथ खखोल्कः।

काशीखण्डे,

विनतादित्य इत्याख्यः खखोल्कस्तत्र संस्थितः।
इत्थं खखोल्क आदित्यः काशीविघ्नतमोहरः ॥
तस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते।

अथारुणादित्यः।

येऽर्चयिष्यन्ति सततमरुणादित्यसंज्ञकम्।
मामत्र तेषां नो दुःखं न दारिद्र्यं न पातकम् ॥
व्याधिभिर्नाभिभूयन्ते नोपसर्गैश्च कैश्चन।
शोकाग्निना न दह्यन्ते ह्यरुणादित्यसेवनात् ॥ इति।

अथ वृद्धादित्यः।

काशीखण्डे,

वृद्धेनाराधितो यस्माद्धारीतेन तपस्विना।
आदित्यो वार्द्धकहरो वृद्धादित्यस्ततः स्मृतः ॥
वृद्धादित्यं समाराध्य वाराणस्यां घटोद्भव!।

1 खे इति च पाठः।

जरादुर्गतिरोगघ्नं बहवः सिद्धिमागताः ॥
वृद्धादित्यं नमस्कृत्य वाराणस्यां रवौ नरः ।
लभेदभीप्सितां सिद्धिं न क्वचिद्दुर्गतिं लभेत् ॥ इति ।

अथ केशवादित्यः ।

काशीखण्डे,

केशवादित्यमाराध्य वाराणस्यां नरोत्तमः ।
परमं ज्ञानमाप्नोति येन निर्वाणभाग्भवेत् ॥ इति ।

अथ विमलादित्यः ।

काशीखण्डे,

विमलादित्य इत्याख्या भक्तानां वरदा सदा ।
सर्वव्याधिनिहन्त्री च सर्वपापक्षयङ्करी ॥

तथा,

इत्थं स विमलादित्यो वाराणस्यां शुभप्रदः ।
तस्य दर्शनमात्रेण कुष्ठरोगः प्रणश्यति ॥ इति ।

अथ गङ्गादित्यः ।

काशीखण्डे,

गङ्गादित्यश्च तत्रान्यो विश्वेशाद्दक्षिणेन वै ।
तस्य दर्शनमात्रेण नरः शुद्धिमियादिह ॥

तथा,

गङ्गादित्यं समाराध्य वाराणस्यां नरोत्तमः ।
न जातु दुर्गतिं क्वापि लभते न च रोगभाक् ॥ इति ।

अथ यमादित्यः ।

काशीखण्डे,

यमादित्यं नरो दृष्ट्वा यमलोकं न पश्यति ।
यमतीर्थे नरः स्नात्वा भूतायां भौमवासरे ॥

यमेश्वरं विलोक्याशु सर्वैः पापैः प्रमुच्यते।

तथा,

यमेन स्थापितो यस्मादादित्यस्तत्र कुम्भज !।
अतः स हि यमादित्यो यामीं हरति यातनाम्॥
यमेशं च यमादित्यं यमेन स्थापितं नमन्।
यमतीर्थे चतुर्दश्यां भरण्यां भौमवासरे॥
तर्पणं पिण्डदानं च कृत्वा पितृनृणी भवेत्।
अभिलष्यन्ति सततं पितरो नरकौकसः॥
भौमे भरण्यां भूतायां यदि योगोऽयमुत्तमः।
काश्यां कश्चिद्यमे तीर्थे कृत्वा स्नानं महामतिः॥
अपि यस्तर्पणं कुर्यात् सलिलं नो विमुक्तये।
किं गयागमनैः पुंसां किं श्राद्धैर्भूरिदक्षिणैः॥
यदि काश्यां यमे तीर्थे योगेऽस्मिन् श्राद्धमाप्यते। इति।

## अथ चण्डिकाः।

तत्र स्कान्दे,

अतः परं प्रवक्ष्यामि चण्डिकाः क्षेत्ररक्षिकाः।
दक्षिणे रक्षते दुर्गा नैर्ऋते चोत्तरेश्वरी॥
ओङ्कारेशी पश्चिमे वै वायव्ये भद्रकारिका।
उत्तरे भीमचण्डी च महामत्तेशशानतः॥
ऊर्ध्वकेशीसमायुक्ता शङ्करी पूर्वतः स्थिता।
अधःकेशी तथाग्नेय्यां चित्रघण्टा च मध्यतः॥
एतास्तु चण्डिका देवीर्यो वै द्रक्ष्यति मानवः।
तस्य तुष्टाश्च सर्वाश्च क्षेत्रं रक्षन्ति मत्पराः॥
विघ्नं कुर्वन्ति सततं पापानां देवि ! सर्वदा।
तस्माद्देवि ! सदा पूज्याश्चण्डिकाः सत्त्विनायकाः॥

यदि चेत्सततं देवि ! वाराणस्यां शुभार्थिभिः । इति ।

अथ त्रिकण्टकाद्या योगाः ।

लिङ्गपुराणे,

अविमुक्तं च स्वर्लीनं तथा मध्यमकं पदम् ।
एतत्त्रिकण्टकं देवि मृत्युकालेऽमृतपदम् ॥

मध्यमकं पदं, मध्यमेश्वरः ।

चतुष्कमपि तत्रैव,

शैलेशं सङ्गमेशं च स्वर्लीनं मध्यमेश्वरम् ।
दृष्ट्वा न जायते मर्त्यः संसारे दुःखसागरे ॥

पञ्चायतनं च—

कृत्तिवासो मध्यमेश ओङ्कारेशः कपर्दिकः ॥
विश्वेश्वर इति ज्ञेयं पञ्चायतनमुत्तमम् ।

षडायतनमपि—

विश्वेश्वरो विशालाक्षी द्युनदी कालभैरवः ।
श्रीमान् ढुण्ढिर्दण्डपाणिः षडङ्गो योग उच्यते ॥
एवं षडङ्गयोगं यो नित्यं काश्यां निषेवते ।
सम्प्राप्य योगनिद्रां स दीर्घाममृतमश्नुते ॥

तथा,

ओङ्कारः कृत्तिवासश्च केदारश्च त्रिविष्टपः ।
वीरेश्वरोऽथ विश्वेशः षडङ्गोऽयमिहापरः ॥

त्रिविष्टपोऽत्र त्रिलोचन इति वदन्ति ।

अष्टायतनमपि—

लैङ्गे,

अतः परं प्रवक्ष्यामि अष्टायतनमुत्तमम् ।
येन क्रमेण कर्त्तव्यं तच्छृणुष्व वरानने ! ॥

आग्नीशाने च कर्त्तव्यं स्नानं वै दीर्घिकाजले ।
दृष्ट्वा देवं ततो गच्छेदुर्वशीश्वरमुत्तमम् ॥
तं दृष्ट्वा मनुजो देवि ! नकुलीशं ततो व्रजेत् ।
तं दृष्ट्वा मनुजो देवि ! आपाढीशं ततो व्रजेत् ॥
दृष्ट्वा चापाढिनं देवं भारभूतं ततो व्रजेत् ॥
तं दृष्ट्वा मनुजो देवि ! गच्छेद्व त्रिपुरान्तकम् ।
तं दृष्ट्वा मनुजो देवि लाङ्गलीशं ततो व्रजेत् ॥
दक्षिणे नकुलीशस्य त्र्यम्बकं च ततो व्रजेत् ।
अष्टायतनमेतद्धि करिष्यन्ति च ये नराः ॥
ते मृता अवहिःक्षेत्रे रुद्रलोकस्य भाजनाः ।
एकादशायतनमपि काशीखण्डे,
अन्या यात्रा प्रकर्त्तव्यैकादशायतनोद्भवा ।
आग्नीध्रकुण्डे सुस्नातः पश्येदाग्नीध्रमीश्वरम् ॥
उर्वशीशं ततो गच्छेत्ततस्तु नकुलीश्वरम् ।
आपाढीशं ततो दृष्ट्वा भारभूतेश्वरं ततः ॥
लाङ्गलीशमथालोक्य ततस्तु त्रिपुरान्तकम् ।
ततो मनःप्रकामेशं प्रीतिकेशमथो व्रजेत् ॥
मदालसेश्वरं तस्मात्तिलपर्णेश्वरं ततः ।
यात्रैकादशलिङ्गानामेषा कार्या प्रयत्नतः ॥
इमां यात्रां प्रकुर्वाणो रुद्रत्वं प्राप्नुयान्नरः ।

अथ चतुर्दशलिङ्गयात्रा ।

तत्र काशीखण्डे,
ओङ्कारं प्रथमं पश्येन्मत्स्योदर्यां कृतोदकः ।
त्रिविष्टपं महादेवं ततो वै कृत्तिवाससम् ॥
रत्नेशं चाथ चन्द्रेशं केदारं च ततो व्रजेत् ।

धर्मेश्वरं च वीरेशं गच्छेत्कामेश्वरं ततः ॥
विश्वकर्मेश्वरं चाथ मणिकर्णीश्वरं ततः ।
अविमुक्तेश्वरं दृष्ट्वा ततो विश्वेशमर्चयेत् ॥
एषा यात्रा प्रयत्नेन कर्त्तव्या क्षेत्रवासिना ।
यस्तु क्षेत्रमुषित्वा वै नैतां यात्रां समाचरेत् ॥
विघ्नास्तस्योपतिष्ठन्ते क्षेत्रोच्चाटनसूचकाः ।

तथा,

अपरापि शुभा यात्रा योगक्षेमकरी सदा ।
सर्वविघ्नोपहन्त्री च कर्त्तव्या क्षेत्रवासिभिः ॥
शैलेशं प्रथमं वीक्ष्य वरणास्नानपूर्वकम् ।
स्नानं तु सङ्गमे कृत्वा द्रष्टव्यः सङ्गमेश्वरः ॥
स्वर्लीनतीर्थे सुस्नातः पश्येत्स्वर्लीनमीश्वरम् ।
स्नात्वा मन्दाकिनीतीर्थे द्रष्टव्यो मध्यमेश्वरः ॥
पश्येद्धिरण्यगर्भेशं तत्र तीर्थे कृतोदकः ।
मणिकर्ण्यां ततः स्नात्वा पश्येदीशानमीश्वरम् ॥
ततः कूपमुपस्पृश्य गोप्रेक्षमवलोकयेत् ।
कापिलेयह्रदे स्नात्वा वीक्षेत वृषभध्वजम् ॥
उपशान्तशिवं पश्येत् तत्कूपे विहितोदकः ।
पञ्चचूडाह्रदे स्नात्वा ज्येष्ठेशानं ततोऽर्चयेत् ॥
चतुःसमुद्रकूपे तु स्नात्वा देवं क्रमचर्चयेत् ।
देवस्याग्रे तु या वापी तत्रोपस्पर्शने कृते ॥
शुक्रेश्वरं ततः पश्येत्तत्कूपविहितोदकः ।
दण्डखाते ततः स्नात्वा व्याघ्रेशं पूजयेत्ततः ॥
शौनकेश्वरकुण्डे तु स्नानं कृत्वा ततोऽर्चयेत् ।
जम्बुकेशं महालिङ्गं कृत्वा यात्रामिमां नरः ॥

क्वचिन्न जायते भूयः संसारे दुःखसागरे।
समारभ्य प्रतिपदं यावत् कृष्णा चतुर्दशी॥
एतत्क्रमेण कर्त्तव्यान्येतान्यायतनानि वै।
इमां यात्रां नरः कृत्वा न भूयोऽप्यभिजायते॥ इति।
एवं लैङ्गेऽपि। अन्यापि चतुर्दशलिङ्गयात्रा–
काशीखण्डे,
अमृतेशस्तारकेशो ज्ञानेशः करुणेश्वरः।
मोक्षद्वारेश्वरश्चैव स्वर्गद्वारेश्वरस्तथा॥
ब्रह्मेशो लाङ्गलीशश्च वृद्धकालेश्वरस्तथा।
वृषेशश्चैव चण्डीशो नन्दिकेशो महेश्वरः॥
ज्योतीरूपेश्वरं लिङ्गं ख्यातमत्र चतुर्दशम्।
काश्यां चतुर्दशैतानि महालिङ्गानि सुन्दरि !॥
इमानि मुक्तिहेतूनि लिङ्गान्यानन्दकानने।
कलिकल्मषबुद्धीनां नाऽऽख्येयानि कदाचन।
एतान्याराधयेद्यस्तु लिङ्गानीह चतुर्दश॥
न तस्य पुनरावृत्तिः संसाराध्वनि कर्हिचित्॥ इत्यादि।
चैत्रकृष्णप्रतिपदं समारभ्य प्रयत्नतः।
आचतुर्दशि पूज्यानि लिङ्गान्येतानि सत्तमैः॥
एतेषां वार्षिकी यात्रा सुमहोत्सवपूर्वकम्।
कार्य्या मुमुक्षुभिः सम्यक् क्षेत्रसंसिद्धिदायिनी॥
मुने ! चतुर्दशैतानि महालिङ्गानि यत्नतः।
दृष्ट्वा न जायते जन्तुः संसारे दुःखसागरे॥
एकैकस्यास्य लिङ्गस्य महिमाद्यन्तवर्जितः।

इत्यादि काशीखण्डे त्रिसप्ततितमेऽध्याये द्रष्टव्यम्। आचतुर्दशीति। प्रतितिथि एकैकलिङ्गयात्रा चतुर्दशलिङ्गयात्रा वा

कार्य्येत्यर्थः ।

अथ तिथियात्रा ।

योगिनीरुपक्रम्य काशीखण्डे,

चैत्रकृष्णप्रतिपदि तत्र यात्रा प्रयत्नतः ।
क्षेत्रविघ्नप्रशान्त्यर्थं कर्त्तव्या पुण्यकृज्जनैः ॥
यात्रां च सांवत्सरिकीं यो न कुर्यादवज्ञया ।
तस्य विघ्नं प्रयच्छन्ति योगिन्यः काशिवासिनः ॥

शारदनवरात्रेऽपि योगिनीनां पूजा महासिद्धिदेति तत्रैवोक्तम् । चैत्रनवरात्रे दुर्गायात्रेति शिष्टाः । विशालाक्षीपुरःस्थितविश्वभुजायात्रा नवरात्रे कार्य्या । तामेव प्रकृत्योक्तम्—

शारदं नवरात्रं च कार्य्या यात्रा प्रयत्नतः ।
देव्या विश्वभुजाया वै सर्वकामसमृद्धये ॥ इति ।

तथा दुर्गेति प्रकृत्य—

नवरात्रं प्रयत्नेन प्रत्यहं सा समर्चिता ।
नाशयिष्यति विघ्नौघान् सुमतिं च प्रदास्यति ॥

तथा,

यो न सांवत्सरीं यात्रां दुर्गायाः कुरुते कुधीः ।
काश्यां विघ्नसहस्राणि तस्य स्युश्च पदे पदे ॥ इति ।

अथ द्वितीया ।

तत्र प्रतिमाघकृष्णद्वितीयासु सङ्गमेश–त्रिलोचनेश–तारकेशयात्रा विहिता । कार्त्तिक्यनन्तरमार्गकृष्णद्वितीयायां दण्डपाणिप्रादुर्भावः, सा दण्डपाणिद्वितीया, तस्यामुपोष्य प्रातर्ब्राह्मणभोजनं तत्प्रीतये कार्य्यमिति शिष्टाः ।

अथ तृतीया ।

सर्वासु कृष्णतृतीयासु स्वर्लीनेश–महादेव–ज्ञानेश्वरया-

त्रा चैत्रादिमासत्रयकृष्णतृतीयासु वा क्रमेणेत्युक्तं काशीखण्डे ।
सर्वासु शुक्लतृतीयासु मुखप्रेक्षणिकादियात्रा उक्ता—

तत्रैव,

अतः परं प्रवक्ष्यामि गौरीयात्रामनुत्तमाम् ।
शुक्लपक्षे तृतीयायां यात्रा सर्वसमृद्धिदा ॥

सर्वसम्पत्तिहेतुरित्यर्थः ।

गोप्रेक्षतीर्थे सुस्नाय मुखनिर्मालिकां व्रजेत् ।

मुखनिर्मालिकां, मुखप्रेक्षणिकाम् ।

ज्येष्ठवाप्यां नरः स्नात्वा ज्येष्ठां गौरीं समर्चयेत् ॥
सौभाग्यगौरीं सम्पूज्य ज्ञानवाप्यां कृतोदकः ।
ततः शृङ्गारगौरीं च तत्रैव च कृतोदकः ॥

तत्र, ज्ञानवाप्याम् ।

स्नात्वा विशालगङ्गायां विशालाक्षीं ततो व्रजेत् ।
सुस्नातो ललितातीर्थे ललितामर्चयेन्नरः ॥
स्नात्वा भवानीतीर्थे च भवानीं परिपूजयेत् ।
मङ्गलां च ततोऽभ्यर्च्य बिन्दुतीर्थे कृतोदकः ॥
ततो गच्छेन्महालक्ष्मीं स्थिरलक्ष्मीसमृद्धये ।
इमां यात्रां नरः कृत्वा क्षेत्रेऽस्मिन् मुक्तिजन्मनि ॥
न दुःखैरभिभूयेत इहामुत्रापि कुत्रचित् ।
इमां च मङ्गलां गौरीं नारी वा पुरुषोऽपि वा ॥
चैत्रशुक्लतृतीयायामुपोषणपरायणः ।
महोपचारैः सम्पूज्य दुकूलाभरणादिभिः ॥
रात्रौ जागरणं कृत्वा गीतनृत्यकथादिभिः ।
प्रातः कुमारीः सम्पूज्य द्वादशाच्छादनादिभिः ॥
सम्भोज्य परमान्नाद्यैर्दत्त्वाऽन्येभ्योऽपि दक्षिणाम् ।

होमं कृत्वा विधानेन जातवेदसइत्यृचा ॥
अष्टोत्तरशताभिश्च तिलाज्याहुतिभिः प्रिये ! ।
एकं गोमिथुनं दत्त्वा ब्राह्मणाय कुटुम्बिने ॥
श्रद्धया समलङ्कृत्य भूषणैर्द्विजदम्पती ।
भोजयित्वा महार्हैश्च प्रीयतां मङ्गलेश्वरी ॥
इति मन्त्रं समुच्चार्य्य प्रातः कृत्वाऽथ पारणम् ।
न दुर्भगत्वमाप्नोति न दारिद्र्यं कदाचन ॥
न वै सन्तानविच्छित्तिं भोगोच्छित्तिं न जातुचित् ।
स्त्री वैधव्यं न चाप्नोति न ना योषिद्वियोगभाक् ॥
अपि वन्ध्या प्रसूयेत कृत्वैतन्मङ्गलाव्रतम् ।
एतद्व्रतस्य करणात् कुरूपत्वं न जातुचित् ॥
कुमारी विन्दतेऽत्यन्तं गुणरूपयुतं पतिम् ।
कुमारोऽपि व्रतं कृत्वा विन्दति स्त्रियमुत्तमाम् ॥
मनोरथतृतीयायां यस्ते भक्तिं विधास्यति ।
तन्मनोरथसंसिद्धिर्भवत्री मदनुग्रहात् ॥
मनोरथतृतीया चैत्रशुक्लतृतीया। व्रतप्रकारस्तत्रैवानुसन्धेयः।
तथा,
तत्रैव चित्रघण्टां प्रकृत्य—
चैत्रशुक्लतृतीयायां कार्य्या यात्रा प्रयत्नतः ।
महामहोत्सवः कार्य्यो निशि जागरणं तथा ॥
महापूजाप्रकरणैश्चित्रघण्टां समर्च्य च ।
शृणोति नान्तकस्येह घण्टां महिषकण्ठगाम् ॥
तथा,
राधशुक्लतृतीयायां स्नात्वा पैप्पिलिके ह्रदे ।
उपोषणपरा भक्त्या रात्रौ जागरणान्विताः ॥

त्रिलोचनं पूजयित्वा प्रातः स्नात्वा तु तत्र वै।
पुनर्लिङ्गं समभ्यर्च्य दत्त्वा धर्मघटानपि॥
पिण्डान् सम्प्रक्षिपेयुश्च पितॄनुद्दिश्य हर्षिताः[1]।
विधाय पारणं पश्चाच्छिवभक्तजनैः सह॥
विसृज्य पार्थिवं देहं तेन पुण्येन नोदिताः।
भवन्ति देवि! नियतं गणा मम पुरोगमाः॥

राधो, वैशाखः। भाद्रकृष्णतृतीयायां विशालाक्षीयात्रा।

काशीखण्डे,

भाद्रकृष्णतृतीयायामुपोषणपरैर्नृभिः।
कृत्वा जागरणं रात्रौ विशालाक्षीसमीपतः॥
प्रातर्भोज्याः प्रयत्नेन चतुर्दश कुमारिकाः।
अलङ्कृता यथाशक्ति स्रगम्बरविभूषणैः॥
विधाय पारणं पश्चात् पुत्रभृत्यसमन्वितैः।
सम्यग्वाराणसीवासफलं लभ्येत कुम्भज!॥
तस्यां तिथौ महायात्रा कार्य्या क्षेत्रनिवासिभिः।
उपसर्गप्रशान्त्यर्थं निर्वाणकमलाप्तये॥

निर्वाणकमला, मोक्षलक्ष्मीः। आश्विनकृष्णतृतीयायां ललितादेवीयात्रा तत्रैवोक्ता—

इषे कृष्णतृतीयायां ललितां परिपूज्य वै।
नारी वा पुरुषो वाऽपि लभते वाञ्छितं पदम्॥ इति।

इषे, आश्विने।

## अथ चतुर्थी।

काशीखण्डे,

---

१ साक्षान्सदक्षिणान् देवि! पितॄनुद्दिश्य हर्षिताः। इति मुद्रितकाशीखण्डे पाठः।

कुर्यात्प्रतिचतुर्थीह यात्रां विघ्नेशितुः सदा ।
ब्राह्मणेभ्यस्तदुद्देशाद्देया वै मोदका मुदे ॥

प्रतिचतुर्थि समर्चयन्तीन्यादि ढुण्ढिस्तोत्रे प्रागेव प्रतिपादितम् । माघशुक्लचतुर्थ्यां ढुण्ढियात्रा च तत्रैव ।

तथा,

अङ्गारकचतुर्थ्यां ये स्नात्वोत्तरवहाम्भसि ।
अभ्यर्च्याङ्गारकेशानं नमस्यन्ति नरोत्तमाः ॥
न तेषां ग्रहपीडा च कदाचित्क्वापि जायते ।

श्रावणभाद्रशुक्लचतुर्थ्यां ढुण्ढियात्रेति शिष्टाः । माघशुक्लचतुर्थ्यां मुखप्रेक्षणिकापूजोपवासादिकं कार्यम् ।

लैङ्गे तां प्रकृत्य—

माघमासे चतुर्थ्यां तु तस्मिन् काले उपोषितः ।
अर्चयित्वा तु यो देवि ! जागरं तत्र कारयेत् ॥
तस्यर्द्धिमत्कुलं देवि ! त्रैलोक्ये चातिदुर्लभम् । इति ।

सर्वासु कृष्णचतुर्थीषु मध्यमेश–कृत्तिवासः–करुणेश्वरयात्रा चैत्रादिमासत्रयकृष्णचतुर्थीषु वा क्रमेण कार्येति शिष्टाः ।

## अथ पञ्चमी ।

तत्र श्रावणमासशुक्लपञ्चम्यां कर्कोटकवापीसमीपस्थवासुकिकुण्डे स्नात्वा वासुकिं प्रपूजयेत् ।

यः स्नातो नागपञ्चम्यां कुण्डे वासुकिसंज्ञके ।
न तस्य विषसंसर्गो भवेत्सर्पसमुद्भवः ॥
कर्तव्या नागपञ्चम्यां यात्रा वर्षासु तत्र वै ।
नागाः प्रसन्ना जायन्ते कुले तस्यापि सर्वदा ॥

इति काशीखण्डात् । इदानीं तस्यामेव तिथौ कर्कोटवापीयात्राव्यवहारः । सर्वकृष्णपञ्चमीषु हिरण्यगर्भेश्वर–मोक्षद्वारे-

श्वरयात्रा चैत्रादिमासत्रयकृष्णपञ्चमीषु वा क्रमेणेत्युक्तम्।

अथ षष्ठी।

तत्र षष्ठ्यामर्कवारे लोलार्कयात्रेत्यादि प्रपञ्चितम्। एवं रवियुक्तसर्वषष्ठ्यामेव सर्वसूर्ययात्रा।

रविवारे रवेर्यात्रा षष्ठ्यां वा रविसंयुजि।

इति शिष्टसङ्गृहीतवचनात्। मार्गशीर्षसप्तम्यां लोलार्कयात्रा वार्षिकी। भाद्रपदशुक्लषष्ठ्यां लोलार्कयात्रेत्यपि वदन्ति। सर्वासु कृष्णषष्ठीषु वेत्युक्तमिति।

अथ सप्तमी।

रविसप्तम्यां सर्वस्यां रवियात्रा महाफला।
रविवारे रवेर्यात्रा षष्ठ्यां वा रविसंयुजि।
तथैव रविसप्तम्यां सर्वविघ्नोपशान्तये॥

इति वचनात्। मार्गरविसप्तम्यां लोलार्कयात्रा आदित्यप्रकरणेऽभिहिता। माघशुक्लसप्तम्यां च।

लोलार्के रथसप्तम्यां स्नात्वा गङ्गासिसङ्गमे।
सप्तजन्मकृतैः पापैर्मुक्तो भवति तत्क्षणात्॥

इतिवचनात्। माघशुक्लरविसप्तम्यां साम्बादित्ययात्रा तत्रैवोक्ता। तथा,

अगस्ते! रथसप्तम्यां रविवारो यदाप्यते।
तदा पादोदके तीर्थे आदिकेशवसन्निधौ॥
स्नात्वोपासि नरो मौनी केशवादित्यपूजनात्।
सप्तजन्मार्जितात्पापान्मुक्तो भवति तत्क्षणात्॥
यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु।
तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी॥

---

१ मकरसम्बन्धिनी माघीत्यर्थः।

एतज्जन्मार्जितं पापं यच्च जन्मान्तरार्जितम् ।
मनोवाक्कायजं यच्च ज्ञाताज्ञाते च ये पुनः ॥
इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके[1] ! ।
सप्तव्याधिसमायुक्तं हर माकरि ! सप्तमि ! ॥
एतन्मन्त्रत्रयं जप्त्वा स्नात्वा पादोदके नरः ।
केशवादित्यमालोक्य क्षणान्निष्कलुषो भवेत् ॥

मौनीति पूजनपर्यन्तं मौनीत्यर्थः । स्नानेतिकर्त्तव्यतामाह-यद्यदित्यादिना । सर्वासु कृष्णसप्तमीषूपशान्तेश–केदारेश–ब्रह्मेशयात्रा चैत्रादित्रयकृष्णसप्तमीषु वा ।

अथाष्टमी ।

सर्वास्वष्टमीषु भैरवयात्रा ।

अष्टम्यां च चतुर्दश्यां रविभूमिजवासरे ।
यात्रां च भैरवीं कृत्वा नरः पापैः प्रमुच्यते ॥

इति वचनात् ।

अष्टम्यां च चतुर्दश्यां भौमवारे विशेषतः ।
सम्पूज्य सततं काश्यां दुर्गां दुर्गार्त्तिनाशिनीम् ॥
नवम्यामथ वाष्टम्यां चण्डीयात्रा शुभावहा ।

इति वचनात् सर्वासु अष्टमीषु दुर्गायात्रा कार्य्या । एवम्–

अष्टम्यां च चतुर्दश्यामीशानेशं यजन्ति ये ।
त एव रुद्रा विज्ञेया इहामुत्राप्यसंशयम् ॥

इति वचनात् सर्वास्वष्टमीषु ईशानेशयात्रा ।

ये तु प्रत्यष्टमि जनास्तथा प्रतिचतुर्दशि ।
सिद्धयोगेश्वरीपीठे पूजयिष्यन्ति भाविताः ॥

---

१ सप्त सप्तयस्तुरङ्गा यस्याः सा सप्तसप्तिका सौरी शक्तिरित्यर्थः । तत्सम्बोधनम् ।

अदृष्टरूपां सुभगां पिङ्गलां सर्वसिद्धिदाम् ।
धूपनैवेद्यदीपाद्यैस्तेषामाविर्भविष्यति ॥

इतिवचनात् सर्वास्वष्टमीषु चन्द्रेश्वरसमीपस्था पिङ्गला पूज्या। आविर्भविष्यति, दर्शनविषयीभविष्यतीत्यर्थः। अग्निसङ्गमसमीपस्थां स्वप्नेश्वरीमधिकृत्य—

अष्टम्यां च चतुर्दश्यां नवम्यां निशि वा दिवा ।
प्रयत्नतः समर्च्या सा काश्यां ज्ञानार्थिभिर्नरैः ॥
इतिवचनात्सर्वाष्टम्यां स्वप्नेश्वरी पूज्या ।
प्रतिमासं सदाष्टम्यां चतुर्दश्यां च भामिनि ! ॥
आयान्ति सर्वतीर्थानि द्रष्टुं देवं त्रिविष्टपम् ॥
इतिवचनादष्टम्यां त्रिविष्टपेशयात्रा । त्रिविष्टपस्त्रिलोचनः ।
अष्टम्यां च चतुर्दश्यां तीर्थानि सह सागरैः ।
षष्टिकोटिसहस्राणि मत्स्योदर्यां विशन्ति हि ॥

इतिवचनादष्टम्यां मत्स्योदरीयात्रापि। तीर्थानां प्रवेशः स्नानस्य महाफलत्वज्ञापनायोक्तः। अङ्गारकाष्टम्यामङ्गारकुण्डे स्नात्वा मङ्गलेशदर्शनं महाफलम्। एवम्—

गुरुपुष्यसिताष्टम्यां व्यतीपातो यदा भवेत् ।
तदात्र श्राद्धकरणात् गयाकोटिगुणं भवेत् ॥

अत्र, ज्ञानवाप्यां प्रकरणात्। तेन तद्दिने ज्ञानवाप्यां श्राद्धं महाफलम्।

चैत्राष्टम्यां महायात्रां भवान्याः कारयेत् सुधीः ।
अष्टाधिकाः प्रकर्त्तव्याः शतकृत्वः प्रदक्षिणाः ॥
प्रदक्षिणीकृता तेन सप्तद्वीपवती मही ।

इति वचनात् चैत्रशुक्लाष्टम्यां भवानीयात्रा ।

ज्येष्ठे मासि सिताष्टम्यां तत्र कार्यो महोत्सवः ।

तत्र जागरणं कार्य्यं सर्वसम्पत्समृद्धये ॥
ज्येष्ठां गौरीं नमस्कृत्य ज्येष्ठवापीपरिप्लुता ।
सौभाग्यभाजनं भूयाद्योषा सौभाग्यभागपि ॥

इतिवचनात् ज्येष्ठसिताष्टम्यां स्त्रीभिर्ज्येष्ठागौरीयात्रा कार्य्या। ज्येष्ठा, ज्येष्ठेश्वरसमीपस्था गौरी । भाद्रशुक्लाष्टम्यां सूर्य-कुण्डसमीपस्थमहालक्ष्मीयात्रा ।

महालक्ष्म्यष्टमीं प्राप्य तत्र यात्राकृतां नृणाम् ।
सम्पूजितेह विधिवत् पद्मा सद्म न मुञ्चति ॥

इतिवचनात् । महालक्ष्म्यष्टमी भाद्रशुक्लाष्टमी । ए-तामष्टमीमारभ्याग्रिमकृष्णाष्टमीपर्यन्तं लक्ष्मीव्रतमाचारादनु-तिष्ठन्ति ।

आश्विनशुक्लाष्टम्यां भवानीयात्रा ।

कुर्याज्जागरणं रात्रौ महाष्टम्यां व्रती नरः ।
प्रातर्भवानीमभ्यर्च्य प्राप्नुयाद्वाञ्छितं फलम् ॥

इतिवचनात् । व्रती, उपवासी । मार्गशीर्षकृष्णाष्टमी का-लाष्टमीतिप्रसिद्धा सा च कार्त्तिकपव्यवहिताष्टमी शिष्टाचारात् ।

मार्गशीर्षसिताष्टम्यां कालभैरवसन्निधौ ।
उपोष्य जागरं कुर्वन् सर्वपापैः प्रमुच्यते ॥

तथा,

कृत्वा च विविधां पूजां महासम्भारविस्तरैः ।
नरो मार्गसिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् ॥

इति वचनात्। अत्र तिथिद्वैधेऽस्तगामिन्यष्टमी ग्राह्या सायंस-मये भैरवोत्पत्तेरित्याहुः। सर्वासु कृष्णाष्टमीषु वृषभध्वजेश -धर्मे-श -लाङ्गलीशयात्रा कार्य्या चैत्रादित्रयकृष्णसप्तमीषु वेत्युक्तम्।

## अथ नवमी।

नवम्यामथवाष्टम्यां चण्डीयात्रा शुभावहा।

इतिवचनात् सर्वनवमीषु चण्डीयात्रा प्रशस्ता। एवं कुलस्तम्भयात्राऽपि।

नवम्यां पञ्चदश्यां च कुलस्तम्भं समर्चयेत्।

दुःखं रुद्रपिशाचत्वं न भवेत्तस्य पूजनात्॥ इतिवचनात्। नवम्यामासिसङ्गमस्था स्वप्नेश्वरी च पूज्या। सर्वासु कृष्णनवमीषु उपशान्तशिव -वीरेश्वर -वृद्धकालेश्वराणां यात्रा कार्या क्रमेण चैत्रादिमासत्रयकृष्णनवमीषु वा इति।

## अथ दशमी।

ब्रह्मवैवर्त्ते,

ज्येष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता।
तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः॥
यां काञ्चित्सरितं प्राप्य दद्याद्दर्भतिलोदकम्।
मुच्यते दशभिः पापैः सुमहापातकोपमैः॥
हरते दश पापानि तस्माद्दशहरा स्मृता।

एषां स्नानदानतर्पणानां फलसम्बन्धे समुच्चयो बोध्यते। न तु समुच्चितानां फलसम्बन्ध इति।

भविष्योत्तरे,

ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता।
हरते दश पापानि तस्माद्दशहरा स्मृता॥
ज्येष्ठशुक्लदशम्यां तु तत्र भौमदिनं यदि।
ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः॥

भविष्ये,

ज्येष्ठशुक्लदशम्यां तु हस्तयोगेन जान्हवी।

हरते दश पापानि तस्माद्दशहरा स्मृता ॥
तस्माज्ज्येष्ठदशम्यां तु कुजहस्तसमागमे ।
गङ्गा स्वर्गादपावृत्ता मर्त्यलोकमवातरत् ॥
शतजन्मकृतं पापं दश पापानि चैव हि ।
आवृणोत्यप्रयत्नेन तस्माद्दशहरा स्मृता ॥

यद्यप्येतानि वचनानि ज्येष्ठशुक्लदशम्यामेव यत्र क्वापि गङ्गायाः स्नाने फलवत्तां बोधयन्ति तथापि काशीखण्डे द्विपञ्चाशदध्याये ज्येष्ठशुक्लप्रतिपदमारभ्य दशमीपर्यन्तं दशाश्वमेधे स्नानमुक्तम् । तथाहि--

ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम् ।
दशाश्वमेधिके स्नात्वा मुच्यते जन्मपातकैः ॥
ज्येष्ठशुक्लद्वितीयायां स्नात्वा रुद्रसरोवरे ।
जन्मद्वयकृतं पापं तत्क्षणादेव नश्यति ॥
एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः ।
आशुक्लपक्षदशमि प्रतिजन्माघमुत्सृजेत् ॥
तिथिं दशहरां प्राप्य दशजन्माघहारिणीम् ।
दशाश्वमेधिके स्नात्वा यामीं पश्येन्न यातनाम् ॥
लिङ्गं दशाश्वमेधेशं दृष्ट्वा दशहरातिथौ ।
दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः ॥
स्नातो दशहरायां यः पूजयेल्लिङ्गमुत्तमम् ।
भक्त्या दशाश्वमेधेशं न तं गर्भदशा स्पृशेत् ॥
ज्येष्ठे मासि सिते पक्षे स्नात्वा रुद्रसरे नरः ।
कुर्वन् वै वार्षिकीं यात्रां न विघ्नैरभिभूयते ॥
दशाश्वमेधावभृथैर्यत्फलं सम्यगाप्यते ।
दशाश्वमेधे तन्नूनं स्नात्वा दशहरातिथौ ॥

तथा,

ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते।
गङ्गातीरे तु पुरुषो नारी वा भक्तिभावतः॥
निशायां जागरं कुर्य्याद्गङ्गां दशविधैर्हरे!।
पुष्पैः सुगन्धैर्नैवेद्यैः फलैर्दशदशोन्मितैः॥
प्रदीपैर्दशभिर्धूपैर्दशाङ्गैर्गरुडध्वज!।
पूजयेच्छ्रद्धया धीमान् दशकृत्वो विधानतः॥
साज्यांस्तिलान् क्षिपेत्तोये गङ्गायाः प्रसृतीर्दश।
गुडसक्तुमयान् पिण्डान् दद्याच्च दश मन्त्रतः॥
नमः शिवायै प्रथमं नारायण्यै पदं ततः।
दशहरायै पदमिति गङ्गायै मन्त्र एष वै॥
स्वाहान्तः प्रणवादिश्च भवेद्विंशाक्षरो मनुः।
पूजा दानं जपो होमोऽनेनैव मनुना स्मृतः॥
हेम्ना रूप्येण वा शक्त्या गङ्गामूर्त्तिं विधाय च।
वस्त्राच्छादितवक्रस्य पूर्णकुम्भस्य चोपरि॥
प्रतिष्ठाप्यार्चयेद्देवीं पञ्चामृतविशोधिताम्।
चतुर्भुजां त्रिनेत्रां च नदीनदनिषेविताम्॥
लावण्यामृतनिःस्यन्दसंशील[1]च्छालभञ्जिकाम्।
पूर्णकुम्भसिताम्भोजवरदाभयसत्कराम्॥
ततो ध्यायेत्सुसौम्यास्यां चन्द्रायुतसमप्रभाम्।
चामरैर्वीज्यमानां च श्वेतच्छत्राभिशोभिताम्॥
सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम्।
त्रैलोक्यपूजितपदां देवर्षिभिरभिष्टुताम्॥
ध्यात्वा समर्च्य मन्त्रेण धूपदीपोपहारतः।

१ संशीलद्गात्रयष्टिकाम् इति मुद्रितकाशीखण्डे पाठः।

मां च त्वां च विधिं ब्रघ्नं हिमवन्तं भगीरथम् ॥
प्रतिमाग्रे समभ्यर्च्य चन्दनाक्षतनिर्मितान् ।
मां, शिवम् । त्वां, विष्णुम् ।
दशप्रस्थतिलान् दद्याद्दशविप्रेभ्य आदरात् ॥
पलं च कुडवः प्रस्थ आढको द्रोण एव च ।
धान्यमानेन बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥
मत्स्यकच्छपमण्डूकमकरादिजलेचरान् ।
हंसकारण्डवबकचक्रटिट्टिभसारसान् ॥
यथाशक्ति स्वर्णरूप्यताम्रपिष्टविनिर्मितान् ।
अभ्यर्च्य गन्धकुसुमैर्गङ्गायां प्रक्षिपेद्व्रती ॥
शक्तितारतम्येनैते पक्षाः ।
एवं कृत्वा विधानेन वित्तशाठ्यविवर्जितः ।
उपवासी वक्ष्यमाणैर्दशपापैः प्रमुच्यते ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥
एतैर्दशविधैः पापैर्दशजन्मसमुद्भवैः ।
मुच्यते नात्र सन्देहः सत्यं सत्यं गदाधर ! ॥
उद्धरेन्नरकाद्घोराद्दश पूर्वान् दशापरान् ।
वक्ष्यमाणमिदं स्तोत्रं गङ्गाग्रे श्रद्धया जपेत् ॥

---

१ पृष्टेत्यपि पाठः । तदा च सौवर्णादिपात्रोपरि चन्दनादिभिर्लिखितामित्यर्थः ।

ओंनमः शिवायै गङ्गायै वरदायै नमो नमः ।
नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमोऽस्तु ते ॥
नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमो नमः ।
सर्वदेवस्वरूपिण्यै नमो भेषजमूर्त्तये ॥
सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोऽस्तु ते ।
स्थास्नुजङ्गमसम्भूतविषहन्त्र्यै नमोऽस्तु ते ॥
संसारविषनाशिन्यै जीवनायै नमोऽस्तु ते ।
तापत्रितयसंहर्त्र्यै प्राणेश्यै ते नमो नमः ॥
शान्तिसन्तानकारिण्यै नमस्ते शुद्धमूर्त्तये ।
सर्वसंशुद्धिकारिण्यै नमः पापारिमूर्त्तये ॥
भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः ।
भोगोपभोगदायिन्यै भोगवत्यै नमोऽस्तु ते ॥
मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ।
नमस्त्रैलोक्यभूषायै क्षमावत्यै नमो नमः ॥
त्रिहुताशनसंस्थायै त्रिपथायै नमो नमः ।
नमस्त्रिशुक्रसंस्थायै तेजोवत्यै नमो नमः ॥
नन्दायै लिङ्गधारिण्यै सुधाधारात्मने नमः ।
नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ॥
बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमोऽस्तु ते ।
नमस्ते विश्वमित्रायै नन्दिन्यै ते नमो नमः ॥
पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः ।
परापरशताढ्यायै तारायै ते नमो नमः ॥
पाशजालनिकृन्तिन्यै अभिन्नायै नमोऽस्तु ते ।
शान्तायै च वरिष्ठायै वरदायै नमो नमः ॥
उग्रायै सुखजग्ध्यै च सञ्जीविन्यै नमोऽस्तु ते ।

ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ॥
प्रणतार्तिप्रभञ्जिन्यै जगन्मात्रे नमोऽस्तु ते ।
सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः ॥
शरणागतदीनार्त्तपरित्राणपरायणे ! ।
सर्वस्यार्त्तिहरे ! देवि ! नारायणि ! नमो ऽस्तु ते ॥
निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः ।
परापरपरायै च गङ्गे निर्वाणदायिनि ! ॥
गङ्गे ! ममाग्रतो भूया गङ्गे मे तिष्ठ पृष्ठतः ।
गङ्गे ! मे पार्श्वयोरेधि गङ्गे ! त्वय्यस्तु मे स्थितिः ।
आदौ त्वमन्ते मध्ये च सर्वं त्वं गाङ्गते ! शिवे ! ॥
त्वमेव मूलप्रकृतिस्त्वं पुमान् पर एव हि ।
गङ्गे ! त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ! ॥
य इदं पठति स्तोत्रं शृणुयाच्छ्रद्धयापि यः ।
दशधा मुच्यते पापैः कायवाक्चित्तसम्भवैः ॥
रोगस्थो रोगतो मुच्येद्विपद्भ्यश्च विपद्गतः ।
मुच्येत बन्धनाद्बद्धो भीतो भीतेः प्रमुच्यते ॥
सर्वान्कामानवाप्नोति प्रेत्य च त्रिदिवं व्रजेत् ।
दिव्यं विमानमारुह्य दिव्यस्त्रीपरिवीजितः ॥
गृहेऽपि लिखितं यस्य सदा तिष्ठति धारितम् ।
नाग्निचौरभयं तस्य न सर्पादिभयं क्वचित् ॥
ज्येष्ठे मासे सिते पक्षे दशमी हस्तसंयुता ।
संहरेत्त्रिविधं पापं बुधवारेण संयुता ॥
तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः ।
यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः ॥
सोऽपि तत्फलमाप्नोति गङ्गां सम्पूज्य यत्नतः ।

पूर्वोक्तेन विधानेन यत्फलं सम्यकीर्त्तितम् ॥
यथा गौरी तथा गङ्गा तस्माद्गौर्यास्तु पूजने।
यो विधिर्विहितः सम्यक् सोऽपि गङ्गाप्रपूजने ॥
यथाऽहं त्वं तथा विष्णो यथा त्वं तु तथाह्युमा ॥
उमा यथा तथा गङ्गा चतूरूपं न भिद्यते।
विष्णुरुद्रान्तरं चैव श्रीगौर्योरन्तरं तथा ॥
गङ्गागौर्यन्तरं चैव यो ब्रूते मूढधीस्तु सः।
इति दशहरास्तोत्रं समाप्तम्।

तथा,
ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः।
गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ ॥
दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते।

गराख्यं करणं, ज्येष्ठशुक्लदशम्यां बुधहस्तयोरानन्दाख्यो योगो भवति तेन योगानां दशत्वसम्पत्तिः। स्नातुर्हर्षविशेष एवाऽऽनन्दस्तमादाय दशत्वमित्यन्ये। अस्यामेव तिथौ गङ्गेशः पूजनीयः।

तिथौ दशहरायां च यो गङ्गेशं समर्चयेत्।
तस्य जन्मसहस्रस्य पापं सङ्क्षीयते क्षणात् ॥ इति वचनात्।

सर्वासु कृष्णदशमीषु ज्येष्ठेश-कामेश-वृषेशानां यात्रा चैत्रादिमासत्रयकृष्णदशमीषु वा।

अथैकादशी।

सर्वैकादशीषु मुक्तिमण्डपगो विष्णुः पूज्यः। विशेषतस्तु शयनीबोधन्योरित्युक्तम्। कार्त्तिकशुक्लैकादशीमारभ्यापि पौर्णमासीपर्यन्तं पञ्चनदे स्नानं महाफलम्।

एकादशीं समासाद्य प्रबोधकरणीं मम।

बिन्दुतीर्थे कृतस्नानो रात्रौ जागरणान्वितः ॥
दीपान् प्रबोध्य बहुशो मामलङ्कृत्य शक्तितः ।
तौर्य्यत्रिकविनोदेन पुराणश्रवणादिभिः ॥
महामहोत्सवं कृत्वा यावत् पूर्णा तिथिर्भवेत् ।
तत्रान्नदानं बहुशः कृत्वा मत्प्रीतये नरः ॥
महापातकयुक्तोऽपि न विशेत्प्रमदोदरम् । इतिवचनात् ।

अथ द्वादशी ।

ज्ञानवापीं प्रक्रम्य काशीखण्डे,
एकादश्यामुपोष्याथ प्राश्नाति चुलुकत्रयम् ।
हृदये तस्य जायन्ते त्रीणि लिङ्गान्यसंशयम् ॥
उपोष्येत्यनेन द्वादश्यां प्रातश्चुलुकपानमित्यवसीयते । यस्मिन् कस्मिन्नपि प्रदोषे त्रिलोचनदर्शनं महाफलम् ।
क्षोणीं प्रदक्षिणीकृत्य यत्फलं सम्यगाप्यते ।
प्रदोषे तत्फलं काश्यां सप्तकृत्वस्त्रिलोचने ॥ इतिवचनात् ।
द्वादश्यां शनिप्रदोषे त्रिलोचनयात्रायां तत्फलमिति शिष्टाः ।
अतः परन्तु संवेद्यं गङ्गावरणसङ्गमम् ।
श्रवणद्वादशीयोगे बुधवारो यदा भवेत् ॥
श्राद्धं कुर्य्याच्च यस्तत्र तस्मिन् तीर्थे यशस्विनि ! ।
तारयित्वा पितॄन् सर्वान् विष्णुलोकं स गच्छति ॥
भविष्ये तु बुधाभावेऽपि यात्रोक्ता—
द्वादशी श्रवणोपेता यदा भवति भारत ! ।
सङ्गमे सरितां स्नात्वा जाह्नवीस्नानजं फलम् ॥
सोपवासः समाप्नोति नात्र कार्य्या विचारणा । इति ।
सर्वासु कृष्णद्वादशीषु क्रमेण चैत्रादिमासत्रये वा शुक्रेश-मणिकर्णीश-नन्दिकेशानां यात्रेति ।

### अथ त्रयोदशी।

यः प्रदोषे त्रयोदश्यां शनिवासरसंयुजि।
संस्नास्यति नरो धीमान् कामकुण्डे त्वदास्पदे॥
त्वत्स्थापितं च कामेशं लिङ्गं द्रक्ष्यति मानवः।
स वै कामकृतादोषाद्यामीं नाप्स्यति यातनाम्॥

इति काशीखण्डात् शनित्रयोदश्यां कामेशयात्रा। तथा तदेव प्रकृत्य—

चैत्रशुक्लत्रयोदश्यां तत्र यात्रा च कामदा। इति।

कृष्णत्रयोदशीमात्रे चैत्रादिमासत्रये वा व्याघ्रेशाविमुक्तेश्वमहेश्वरयात्रा।

### अथ चतुर्दशी।

प्रतिचतुर्दशि उपवासं कृत्वा कृत्तिवासेश्वरे जागरणं प्रशस्तम्।

वसामि कृत्तिवासेऽहं सदा प्रतिचतुर्दशि।
अत्र जागरणं कृत्वा चतुर्दश्यां न गर्भभाक्॥

तथा,

माघकृष्णचतुर्दश्यामुपोष्य निशि जागृयात्।
कृत्तिवासेशमभ्यर्च्य यः स यायात् परां गतिम्॥ इति।

शिवरात्रिचतुर्दश्यामित्यर्थः। माघत्वं चात्र दर्शान्तमासमतेन। एवमग्रेऽपि।

सन्ति लिङ्गान्यनेकानि पुण्येष्वायतनेषु च।
आयान्ति तानि लिङ्गानि माघीं प्राप्य चतुर्दशीम्॥
कृष्णायां माघभूतायामविमुक्तेशजागरात्।
सदा विगतनिद्रस्य योगिनो गतिभाग्भवेत्॥ इति।

आर्द्रायुतचतुर्दश्यां रुद्रकुण्डे स्नानं महाफलम्।

चतुर्दश्यां यदा योग आर्द्राऋक्षेण संयुतः।

तदा पुण्यतमे तस्मिन् स्नानं तत्र महाफलम् ॥

चैत्रकृष्णचतुर्दश्यामुपोष्यामायां केदारकुण्डस्नातस्य तदुद-
कगण्डूषत्रयपानात् हृदये लिङ्गमुत्पद्यत इत्यप्युक्तम् । चै-
त्रशुक्लचतुर्दश्यामुपोष्य पशुपतीश्वरे जागरणपूजादि कार्यम् ।
पशुपतीश्वरमुपक्रम्य—

तत्र चैत्रचतुर्दश्यां शुक्लायां भुवि मानवैः ।
कार्या यात्रा प्रयत्नेन रात्रौ जागरणं तथा ॥
पूजयित्वा पशुपतिमुपोषणपरायणाः ।
पशुपाशैर्न बध्यन्ते दर्शे विहितपारणाः ॥ इति वचनात् ।

वैशाखशुक्लचतुर्दश्यामोङ्कारयात्रा ।

राधशुक्लचतुर्दश्यामद्यापि क्षेत्रवासिनः ।
तत्र यात्रां प्रकुर्वन्ति महोत्सवपुरःसराः ॥
तत्र जागरणं कृत्वा चतुर्दश्यामुपोषिताः ।
प्राप्नुवन्ति परं ज्ञानं यत्र कुत्रापि ते मृताः ॥
ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सर्वतः ।
तानि वैशाखभूतायामायान्त्योङ्कृतिदर्शने ॥ इति वचनात् ।

ज्येष्ठशुक्लचतुर्दश्यां ज्येष्ठविनायकयात्रा । श्रावणशुक्लचतु-
र्दश्यां त्रिलोचनसमीपस्थमहादेवोपरि पवित्रार्पणं महाफलम् ।
कार्त्तिकशुक्लचतुर्दश्यां विश्वेश्वरेण स्वयमेव स्वं लिङ्गं मह-
त्संभारेण पूजितम् । अतस्तस्यां विश्वेशयात्रा महाफलेति
सनत्कुमारसंहितायामुक्तम् ।

काशीखण्डे,

कार्त्तिकस्य चतुर्दश्यां विश्वेशं यो विलोकयेत् ।
स्नात्वा चोत्तरवाहिन्यां न तस्य पुनरागतिः ॥ इति ।

मार्गशुक्लचतुर्दश्यां पिशाचमोचनयात्रा । तत्प्रकरणे—

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि — मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीमदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम् — बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीब्रजनाथभट्टकृता ( वेदान्तः ) ... २

(२५) काण्डपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्योः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च काण्डपत्राणि ... २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । ११

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा — संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्मामृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... १

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविट्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकरणे श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्रीश्रीपुरुषोत्तमजीमहाराज विरचित ६

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(७६) याज्ञवल्क्यस्मृतिः। बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता। व्यवहाराध्यायः ... ... ... ११
(७४) गादाधरी। श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता। श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता। ४
(७५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणीता। रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपादः। ५
(७६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता। श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता। १०
(७७) व्याकरणसिद्धान्तसुधानिधीः। पर्वतीय विश्वेश्वरसूरिविरचितः। ६
(७८) वीरमित्रोदयः। लक्षणप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ७
(७९) बृहदारण्यकवार्तिकसारः श्रीमद्विद्यारण्यस्वामिविरचितः। महेश्वरतीर्थकृतयाल घुसंग्रहाख्यया टीकयासमलंकृतः। ४
(५०) वीरमित्रोदयः। राजनीतिप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ५
(५१) पूर्वमीमांसा अधिकरणकौमुदी। श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत १
(५२) प्रशस्तपादभाष्यटीकासंग्रहः। तत्र कणादरहस्यम्। श्रीशंकरमिश्रविरचितम् १
(५३) क्रमदीपिका। श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता। विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेता २
(५४) वीरमित्रोदयः। तीर्थप्रकाशः। महामहोपाध्याय श्रीमित्रमिश्रविरचितः। ३

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 242.

# वीरमित्रोदयः

तीर्थप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः ।

## VÎRAMITRODAYA,

TIRTHP-RAKÂSA,

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MIŚRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. X.

FASCICULUS IV

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE BENARES.
AGENTS:—
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
BENARES.
*Price Rupee one.*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२४२


१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभा अमुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ...


साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्ड ... ... ... ... २

(२) शब्दकौस्तुभ । भट्टोजिदीक्षितकृतः १२

(३) श्लोकवार्त्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः (मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः ( मीमांसा ) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्ण । ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम् विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्ण (वेदान्तः) १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५

(१३) विधिरसायनम् । श्रीमदप्पय्यदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... ... १

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) ११

मार्गशुक्लचतुर्दश्यां कपर्दीश्वरसन्निधौ ।
स्नात्वान्यत्रापि मरणान्न पैशाच्यमवाप्नुयुः ॥ इतिवचनात्
ग्रामादिकाघलोपाय प्रतिभूतं विभोर्गृहम् ।
कुर्यात् प्रदक्षिणं नित्यं तत्कल्मषजिहीर्षया ॥
इति पद्मपुराणात् प्रतिचतुर्दशि अन्तर्गृहयात्रा कार्या ।
पद्मपुराणे,
त्रिचतुर्दशलिङ्गानां भूते पूजापरो भवेत् ।
चतुर्दशानामपि च भूते भूतेऽर्चको भवेत् ॥ इति ।
तथा कृष्णपक्षचतुर्दशीषु दुर्गासमीपस्थयोगिनीनां काशीखण्डोक्तविधिना पूजा कार्या । भौमचतुर्दश्यां यमेश्वरयात्रा ।
यमतीर्थे चतुर्दश्यां भरण्यां भौमवासरे ।
तर्पणं पिण्डदानं च कृत्वा पितॄनृणी भवेत् ॥ इतिवचनात्
फलशेषं प्रकृत्य—
तत्र भौमचतुर्दश्यां यस्तु यात्रां करिष्यति ।
अपिपातकयुक्तः स यमयात्रां न यास्यति ॥ इति ।
सर्वकृष्णचतुर्दशीषु चैत्रादिमासत्रयकृष्णचतुर्दशीषु वा त्र्यम्बकेश्वर-विश्वेश्वर-ज्योतीरूपेश्वराणां यात्रेति ।

अथामावास्या ।

सोमवत्यमावास्यायां कपिलधाराख्यतीर्थे श्राद्धं महाफलम् ।
कुहूसोमसमायोगे दत्तं श्राद्धमिहाक्षयम् ।
संवर्त्तकाले सम्प्राप्ते जलराशिजलान्यपि ॥
क्षीयन्ते न क्षयेत्तत्र श्राद्धं सोमकुहूकृतम् ।
अमासोमसमायोगे श्राद्धं यद्यत्र लभ्यते ॥
तीर्थे कापिलधारेऽस्मिन् गयया पुष्करेण किम् ।
इति वचनात् । शनित्रयोदश्यामेकभक्तं कृत्वा चतुर्द-

श्यामुपोष्य सोमामायां चन्द्रकूपे स्नानसन्ध्याश्राद्धानि कृत्वा चन्द्रेशपूजनं ब्राह्मणभोजनं च कार्यमित्युक्तं काशीखण्डे । श्रावणामावास्यायां कपालमोचन-पापमोचन-कुलस्तम्भ-वैतरणीसंज्ञकपञ्चतीर्थीयात्रा कार्येतिशिष्टाः । कुलस्तम्भमादाय पञ्चसङ्ख्यापूर्त्तिः । पितृकुण्डे पितृपक्षे प्रत्यहं यात्रा तदभावेऽमावास्यायां वा । मातृकुण्डे प्रमाणं न पश्यामः । अमावास्यामात्रे वृषध्वजे श्राद्धं महाफलम् ।

सूर्येन्दुसङ्गमे येऽत्र पितॄणां तृप्तिकामुकाः ।
ब्राह्मणान् भोजयिष्यन्ति तेषां श्राद्धमनन्तकम् ॥ इतिवचनात् ।
काशीखण्डे,
भौमवारे यदा दर्शस्तदा यः श्राद्धदो नरः ।
केदारकुण्डमासाद्य गयाश्राद्धेन किं ततः ॥ इति ।

अथ पौर्णमासी ।

सोमं प्रति शिववाक्यम् ।
स्थापितं यत्त्विदं लिङ्गं मम चन्द्रेश्वराभिधम् ।
ततो हि लिङ्गे त्वत्रास्ति सोमेशोमार्द्धरूपधृक् ॥
प्रतिमासं पञ्चदश्यां शुक्लायां सर्वगोऽप्यहम् ।
अहोरात्रं वसिष्यामि त्रैलोक्यैश्वर्य्यसंयुतः ॥
ततोऽत्र पूर्णिमायां तु कृता स्वल्पापि सत्क्रिया ।
जपहोमार्चनध्यानदानब्राह्मणपूजनम् ॥
जीर्णोद्धारादिकरणं नृत्यवाद्यादिकारणम् ।
ध्वजारोपणकर्मादि तपस्विप्रतितर्पणम् ॥
चन्द्रेश्वरे कृतं सर्वं तदानन्त्याय कल्पते ।

अस्यामेव पौर्णमास्यां चन्द्रेशयात्रा चित्रायुक्तचैत्रपौर्णमास्यामपि ।

तथा,

शुक्लायां पञ्चदश्यां यश्चैत्र्यां कृत्वा महोत्सवम्।
कृत्तिवासेश्वरे लिङ्गे न स गर्भे प्रवेक्ष्यते॥

अतश्चैत्रपौर्णमास्यां कृत्तिवासेश्वरे महापूजोत्सवः कार्यः।

तथा,

उदीच्यां भारभूतेशादाषाढीशं समर्चयन्।
आषाढ्यां पञ्चदश्यां वै न पापैः परितप्यते॥

तथा,

नभस्यपञ्चदश्यां च कुलस्तम्भं समर्चयेत्।
दुःखं रुद्रपिशाचत्वं न भवेत्तस्य पूजनात्॥ इति।

नवम्यां पञ्चदश्यां चेति क्वचित्पाठे पञ्चदशीमात्रे यात्रेयमिति।

## अथ मासयात्रा।

लैङ्गे,

अतः परं प्रवक्ष्यामि यात्राकालं तु सर्वगे!।
चैत्रमासे तु देवैस्तु यात्रेयं च कृता शुभे!॥
तस्यैव कामकुण्डे तु स्नानपूजनतत्परैः।
वैशाखे दैत्यराजैस्तु यात्रेयं च कृता पुरा॥
विमलेश्वरकुण्डे तु स्नानपूजनतत्परैः।
ज्येष्ठे मासे तु देवैस्तु यात्रेयं च कृता पुरा॥
रुद्रावासस्थकुण्डे तु स्नानपूजनतत्परैः।
आषाढे चापि गन्धर्वैर्यात्रेयं च कृता मम॥
श्रियो देव्याश्च कुण्डस्थैः स्नानपूजनतत्परैः।
विद्याधरैस्तु यात्रेयं श्रावणे मासि तत्परैः॥
लक्ष्मीकुण्डस्य संस्थैश्च स्नानपूजनतत्परैः।

पितृभिश्चापि यात्रेयमाश्विने मासि तत्परैः ॥
कापिलह्रदसंस्थैश्च स्नानपूजनतत्परैः ।
ऋषिभिश्चापि यात्रेयं कार्त्तिके मासि तत्परैः ॥
मार्कण्डेयरुद्रस्थैश्च स्नानपूजनतत्परैः ।
विद्याधरैस्तु यात्रेयं मासि मार्गशिरे कृता ॥
कपालमोचनस्थैश्च स्नानपूजनतत्परैः ।
गुह्यकैश्चैव यात्रेयं पुष्यमासे तु तत्परैः ॥
धनदेश्वरकुण्डस्थैः स्नानपूजनतत्परैः ।
यक्षेशैश्चापि यात्रेयं माघमासे च तत्परैः ॥
कोटितीर्थे तु संस्थैश्च स्नानपूजनतत्परैः ।
पिशाचैश्चैव यात्रेयं फाल्गुने मासि तत्परैः ॥
गोकर्णकुण्डसंस्थैश्च स्नानपूजनतत्परैः ।
पिशाचैश्च यदा तस्मिन् फाल्गुनस्य चतुर्दशी ॥
तेन सा प्रोच्यते देवी पैशाची नाम विश्रुता ।
अतः परं प्रवक्ष्यामि यात्रीयां निष्कृतिं पराम् ॥
उदकुम्भास्तु दातव्या मिष्टान्नेन समन्विताः ।
तेन देवि ! तदा प्राप्तं पूर्वोक्तफलमेव च ॥ इति ।

तथा,

काश्यां माघः प्रयागे यैर्न स्नातो मकरार्कगः ।
अरुणोदयमासाद्य तेषां निःश्रेयसं कुतः ॥
काश्युद्भवे प्रयागे च तपसि स्नान्ति मानवाः ।
दशाश्वमेधजनितं फलं तेषां भवेद्ध्रुवम् ॥
प्रयागमाधवं भक्त्या प्रयागेशं च कामदम् ।
प्रयागे तपसि स्नात्वा येऽर्चयन्त्यन्वहं सदा ॥
धनधान्यसुतश्रीस्ते लब्ध्वा भोगान् मनोरमान् ।

भुक्त्वेह परमानन्दं परं मोक्षमवाप्नुयुः ॥ इति।

अथ वारयात्रा।

माघे मासि रवेर्वारे यात्रा सांवत्सरी भवेत्।
अशोकैस्तत्र सम्पूज्य कुण्डे स्नात्वा विधानतः ॥
साम्बादित्यं नरो जातु न शोकैरभिभूयते।
संवत्सरकृतात् पापाद्बहिर्भवति तत्क्षणात् ॥

मधौ मासीतिपाठे चैत्रे। अत्राविशेषाद्वारचतुष्टयेऽपि यात्रा। मङ्गलागौरीसमीपस्थमयूखादित्यमधिकृत्य—

त्वदर्चनान्नृणां कश्चिन्न व्याधिः सम्भविष्यति।
भविष्यति न दारिद्र्यं रविवारे त्वदीक्षणात् ॥ इति।

तथा,

वृद्धादित्यं नमस्कृत्य रवौ न दुर्गतिं लभेत्।

इति रविप्रकरणे दर्शितम्।

तथा,

काश्यां गङ्गासिसम्भेदे नामतोऽर्कविनायकः।
दृष्टोऽर्कवासरे पुंभिः सर्वतापप्रशान्तये ॥ इति।

एवं प्रत्यर्कवारं लोलार्कदर्शनमपि दुःखापहमिति प्रागेव दर्शितम्।

तथा,

रविवारे रवेर्यात्रा षष्ठ्यां वा रविसंयुजि।
तथैव रविसप्तम्यां सर्वविघ्नोपशान्तये ॥
तथाऽष्टम्यां चतुर्दश्यां रविभूमिजवासरे।
यात्रां च भैरवीं कृत्वा नरः पापात् प्रमुच्यते ॥ इति।

श्रावणमासे रविचतुष्टये साम्बादित्यस्य यात्रेति वदन्ति। नवरात्रान्तर्गतरविवारे कृमिकुण्डस्य यात्रेत्यपि शिष्टाः। तथा

पौषमासरविचतुष्टये वर्करीकुण्डयात्राऽनुदिते सूर्ये उत्तरार्क-कुण्डे स्नात्वा कार्येत्यप्याहुः। वर्करीमुपक्रम्य—

अन्वयादर्ककुण्डेऽस्मिन् पुष्ये मासि रवेर्दिने।
स्नातं त्वनुदिते सूर्ये शीतादक्षुब्धचित्तया॥
इत्यर्थवादोऽत्र मूलम्।

अथ सोमवासरे।

काशीखण्डे,

ईशानतीर्थे यः स्नात्वा विशेषात् सोमवासरे।
सन्तर्प्य देवर्षिपितॄन् दत्त्वा दानं स्वशक्तितः॥
ततः समर्च्य श्रीलिङ्गं महासम्भारविस्तरैः।
अत्रापि दत्त्वा स्वानर्थान् कृतकृत्यो भवेन्नरः॥ इति।

ईशानतीर्थं, ज्ञानवापी। श्रीलिङ्गं, विश्वेश्वरः। ईशानेशो ज्ञानेशो वेत्यन्ये। श्रावणे सोमवारे केदारकुण्डे स्नात्वा केदारेशोऽभ्यर्च्य इति शिष्टाः।

अथ भौमे।

भौमवारे सदा पूज्या देवी निगडभञ्जिनी।
कृत्वैकभक्तं भक्त्याऽत्र बन्दीमोक्षणकाम्यया॥
अष्टम्यां च चतुर्दश्यां भौमवारे विशेषतः।
सम्पूज्या सततं काश्यां दुर्गा दुर्गार्तिहारिणी॥

तथा,

भौमे भैरवयात्रा तु कर्त्तव्या पापहारिणी। इति।

श्रावणभौमचतुष्टये कामाख्यायात्रेत्याचारः। केवलबुधे यात्रा न श्रूयते।

अथ बृहस्पतौ।

बृहस्पतीश्वरं लिङ्गं रुद्रकुण्डाच्च पश्चिमे।

गुरुपुष्यसमायोगे दृष्ट्वा दिव्यां लभेद्गिरम् ॥ इति ।

अथ शुक्रे ।

आवर्षं प्रति शुक्राय कृच्छ्रव्रतपरायणाः ।
त्वद्दिने शुक्रकूपे तु कृतसर्वोदकक्रियाः ॥
शुक्रेशमर्चयिष्यन्ति शृणु तेषां तु यत्फलम् ।
अवन्ध्यशुक्रास्ते मर्त्याः पुत्रवन्तोऽभिरेतसः ।
पुंस्त्वसौभाग्यसम्पन्ना भविष्यन्ति न संशयः ॥
व्यपेतविघ्नास्ते सर्वे जनाः स्युः सुखवासिनः ।
इति दत्त्वा वरान् देवस्तत्र लिङ्गे लयं ययौ ॥ इति ।

अथ शनौ ।

शनैश्चरेश्वरं देवं वाराणस्यां शुशोभनम् ।
दृष्ट्वा बाधा न जायेत शनिवारे तदर्चनात् ॥ इति ।

इति नानालिङ्गयात्रा समाप्ता ।

उक्तं च लैङ्गे नानालिङ्गानि प्रकृत्य--
उद्देशमात्रं कथितं मया तुभ्यं वरानने ! ।
न शक्यो विस्तरो वक्तुं वर्षकोटिशतैरपि ॥ इति ।

अथ काश्यां नानातीर्थानि ।

काशीखण्डे,
दुर्गाकुण्डे नरः स्नात्वा सर्वदुर्गार्त्तिहारिणीम् ।
दुर्गां सम्पूज्य विधिवन्नवजन्माघमुत्सृजेत् ॥
सा दुर्गा शक्तिभिः सार्द्धं काशीं रक्षति सर्वतः ।
ताः प्रयत्नेन सम्पूज्याः कालरात्रिमुखा नव ॥
रक्षन्ति क्षेत्रमेतद्वै तथान्या नव शक्तयः ।
उपसर्गसहस्रेभ्यस्ता वै दिग्देवताः क्रमात् ॥
शतनेत्रा सहस्रास्या तथायुतभुजा परा ।

अश्वारूढा गजास्या च त्वरिता शववाहिनी ॥
विश्वा सौभाग्यगौरी च स्मृताः प्राच्यादिमध्यतः ।
एता यत्नेन सम्पूज्याः क्षेत्ररक्षणदेवताः ॥

तथा,

सर्वेषामेव तीर्थानां स्नानाद्यत्प्राप्यते फलम् ।
तत्फलं सम्यगाप्येत नरैर्गङ्गासिसङ्गमे ॥ इति ।

ब्रह्मवैवर्त्ते,

देव्युवाच ।

सप्त पुर्य्यः काशिकायां सन्ति शङ्कर ! शङ्कराः ।
श्रुतास्त्वत्तो महादेव तासां स्थानानि मे वद ॥
यात्रादिनानि च ब्रूहि फलं तासां विमुक्तिदम् ।

ततः शिवेनोक्तम्--

शृणु पार्वति ! वक्ष्यामि यद्गोप्यं मम सर्वदा ।
यत्र या पूः समुद्दिष्टा काश्यां तत्र वदामि ताम् ॥
शङ्खोद्धारप्रदेशे तु द्वारका परिकीर्त्तिता ।
बिन्दुमाधवपार्श्वस्था विष्णुकाञ्चीति विश्रुता ॥
उत्तरार्कादुत्तरतो मथुरा वरणावधिः ।
अयोध्या वायुकोणे तु सोमेश्वरसमीपतः ॥
यत्र रामेश्वरं लिङ्गं वसेत्सीतापतिः स्वयम् ।
विभीषणादिभिर्यत्र राक्षसैर्वानरैरपि ॥
स्थापितान्ययुतं सार्द्धं लिङ्गानि परितः पृथक् ।
असिसम्भेदकोणे तु गङ्गाद्वारं प्रकीर्त्तितम् ॥
वृद्धकालात्पुरोभागे कृत्तिवासेश्वरावधि ।
महाकालपुरी ज्ञेया ह्यवन्ती सर्वपापहृत् ॥
एताः काश्यां पुरः पूर्वं देवैर्ब्रह्मादिभिः शिवे ! ।

कृताः प्रकाशिता काशी जनित्री भोगमोक्षयोः ॥
प्रावृट्टतौ द्वारवती तथा मोक्षकरी शुभा।
शरत्काले विष्णुकाञ्ची गन्तव्या प्रत्यहं बुधैः ॥
मथुरा वसन्तसमये गन्तव्या भक्तिवर्धिनी।
अयोध्या ग्रीष्मकाले तु तापत्रयविनाशिनी ॥
अवन्तिका हिमर्त्तौ तु महाजाड्यनिवारिणी।
मायापुरी तु शिशिरे रजोगुणविनाशिनी ॥
काश्याः सर्वा निःसृताः सृष्टिकाले काश्यामेताः स्थितिकाले वसन्ति।
काश्यां लीनाः सर्वसंहारकाले ज्ञातव्यास्ता मुक्तिपुर्यो भवानि! ॥

प्रावृट्टतौ इति श्रावणेऽप्याचारात् कर्कसङ्क्रान्तिदिने शङ्खोद्धारयात्रा। काशीमादाय पुरां सप्तत्वं बोध्यम्। सिंहबृहस्पतौ प्रत्यहं गोदावरीकुण्डे यात्रा प्रथमदिने वा।

अथ पञ्चतीर्थी।

**काशीखण्डे,**

सन्त्यनेकानि पुण्यानि त्वयोक्तान्यल्पशः पुनः।
तत्रापि नितरां श्रेष्ठा पञ्चतीर्थी नृपाङ्गज! ॥
यस्यां स्नात्वा नरो भूयो गर्भवासं न संस्मरेत् ॥
प्रथमं चासिसम्भेदं तीर्थानां प्रवरं परम्।
ततो दशाश्वमेधाख्यं सर्वतीर्थनिषेवितम् ॥
ततः पादोदकं तीर्थमादिकेशवसन्निधौ।
ततः पञ्चनदं पुण्यं स्नानमात्रादघौघहृत् ॥
एतेषामपि तीर्थानां चतुर्णामपि सत्तम!।
पञ्चमं मणिकर्ण्याख्यं मनोऽवयवशुद्धिदम् ॥
पञ्चतीर्थ्यां नरः स्नात्वा न देहं पाञ्चभौतिकम्।
गृह्णाति जातुचित् काश्यां पञ्चास्यो वाऽभिजायते ॥ इति।

यदि देहग्रहणं तदा पञ्चास्यः शिव एव जायते। चन्द्रार्द्धमौलयः सर्वे इत्यादिवचनैश्चेदं स्पष्टीकृतं प्रागेव।

अथ कपालमोचनम्।

कल्पतरौ लैङ्गे,

कपालमोचनं नाम त्रिषु लोकेषु विश्रुतम्।
कपालं पतितं तत्र स्नातस्य मम सुन्दरि!॥
तस्मिन् स्नातो वरारोहे! ब्रह्महत्यां व्यपोहति।
कपालेश्वरनामा तु तस्मिंस्तीर्थे व्यवस्थितः॥
अश्वमेधमवाप्नोति दर्शनात्तस्य सुन्दरि!।
तस्यैव चोत्तरे पार्श्वे तीर्थं त्रैलोक्यविश्रुतम्॥
तत्र स्नात्वा वरारोहे! ऋणैर्मुक्तो भवेन्नरः।
ऋणमोचनकं नाम विख्यातं भुवि सुन्दरि!॥
त्रीणि लिङ्गानि तत्रैव तिष्ठन्ति मम सुन्दरि!।
तानि दृष्ट्वा तु सुश्रोणि! नश्यति त्रिविधं ऋणम्॥ इति।

ब्रह्मपुराणे कपालमोचनं प्रकृत्य—

तस्मिंस्तीर्थे तु ये गत्वा पिण्डदानेन वै पितॄन्।
श्राद्धैश्च प्रीणयिष्यन्ति तेषां लोकाक्षया दिवि॥ इति।

लैङ्गे,

कोटीश्वरस्य देवस्य आग्नेय्यां दिशि संस्थितः।
श्मशानस्तम्भसंज्ञोऽयं विख्यातः सुप्रतिष्ठितः॥
मानवास्तत्र पात्यन्ते इह यैर्दुष्कृतं कृतम्।
तत्र स्तम्भे सदा देवि! अहं तिष्ठामि भामिनि!॥
अत्र गत्वा तु यः पूजां महादेवि! करिष्यति।
सर्वपापविनिर्मुक्तो गच्छेच्च परमां गतिम्॥ इति।

समुद्रकूपं प्रकृत्य—

चतुःसमुद्रे स्नानेन यत्फलं लभते नरः।
तत्फलं सकलं तस्य उदकस्पर्शनाच्छुभे!॥
कर्कोटवापीमधिकृत्य चोक्तम्—
इन्द्रेश्वराद्दक्षिणतो वापी कर्कोटकस्य च।
तत्र तीर्थे नरः स्नात्वा दृष्ट्वा कर्कोटकेश्वरम्॥
नागानां चाधिपत्यं तु लभते नात्र संशयः। इति।

अथ दण्डखातः।

दण्डखातं प्रकृत्य—
तत्र स्नाने कृते देव! कृतकृत्यो भवेन्नरः।
दण्डखाते नरः स्नात्वा तर्पयित्वा स्वकान् पितॄन्॥
नरकस्थास्तु ये देवि! पितृलोके वसन्ति ते।
पिशाचत्वं गता ये च नराः पापेन कर्मणा॥
तथा पिण्डप्रदानेन देहस्योद्धरणं स्मृतम्।
दण्डखाते नरः स्नात्वा किंभूयः परिशोचति॥ इति।
लैङ्गे,
जम्बुकोऽत्र हतो दैत्यो मयातो जम्बुकेश्वरः।
तमेनं मां तत्र दृष्ट्वा सर्वान् कामानवाप्नुयात्॥
काशीखण्डे,
कपर्दीनाम गणपः शम्भोरत्यन्तवल्लभः।
पित्रीशादुत्तरे भागे लिङ्गं संस्थाप्य शाम्भवम्॥
कुण्डं चखान तस्याग्रे विमलोदकसंज्ञकम्।
यस्य तोयस्य संस्पर्शाद्विमलो जायते नरः॥
इत्याद्यभिधाय,
पिशाचमोचनं तीर्थमद्यारभ्य ममाख्यया।
अन्येषामपि पैशाच्यमिदं स्नानाद्धरिष्यति॥

अस्मिंस्तीर्थे महापुण्ये ये स्नास्यन्तीह मानवाः ।
पिण्डांश्च निर्वपिष्यन्ति सन्ध्यातर्पणपूर्वकम् ॥
दैवात्पैशाच्यमापन्नास्तेषां पितृपितामहाः ।
तेऽपि पैशाच्यमुत्सृज्य यास्यन्ति परमां गतिम् ॥

ममाख्ययेति । इदं तु तदवगाहननिर्मुक्तपैशाच्यस्य कस्यचित् पिशाचस्य वचनम् ।

तथा,

पिशाचमोचने स्नात्वा कपर्दीशं प्रणम्य च ।
कृत्वा तत्रान्नदानं च नरोऽन्यत्रापि निर्भयः ॥ इति ।

अथ गङ्गा ।

काशीखण्डे,

कामप्रदानि तीर्थानि त्रैलोक्ये यानि कानिचित् ।
तानि सर्वाणि सेवन्ते काश्यामुत्तरवाहिनीम् ॥
स्वःसिन्धुः सर्वतः पुण्या ब्रह्महत्यापहारिणी ।
काश्यां विशेषतो विष्णो ! यत्र चोत्तरवाहिनी ॥
गायन्ति गाथामेतां वै देवर्षिपितरो गणाः ।
अपि दृग्गोचरो नः स्यात्काश्यामुत्तरवाहिनी ॥
यत्रत्यामृतसन्तृप्तास्तापत्रयविवर्जिताः ।
स्याम त्वमृतमेवाद्धा विश्वनाथप्रसादतः ॥
गङ्गैव केवला मुक्त्यै निर्णीता परितो हरे ! ।
अविमुक्ते विशेषेण ममाधिष्ठानगौरवात् ॥

तथा तत्रैव,

एतानि यानि लिङ्गानि तथा कुण्डानि येऽन्धवः ।
या वाप्यस्तानि सर्वाणि श्रद्धेयानि मनीषिभिः ॥
एतेषां दर्शनात् स्नानात्फलमत्रोत्तरोत्तरम् ॥ इति ।

अन्धवः कूपाः।

इति नानातीर्थयात्रा समाप्ता।

इदं त्ववधेयम्। काश्यादिमरणान्मुक्तिरित्यत्र प्रयोजकत्वे पञ्चमी। तज्जन्यादात्मज्ञानादेव मोक्षोत्पत्तेः। ज्ञानेन विना मिथ्याज्ञाननिवृत्तेरसम्भवात्। "अत्र हि जन्तोः प्राणेपूत्क्रमाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे" इतिश्रुतेश्च। यत्तु काश्यां देहावसाने रुद्रोपदेशश्रुतेरस्तु ज्ञानापेक्षा न तु सर्वत्र। प्रयागमरणादौ विनैवात्मसाक्षात्कारमपवर्गोदयात्। अत एव प्रयागमधिकृत्य—

कालिदासोऽप्याह,

समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात्।
तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः॥इति।

ब्रह्मज्ञानेन मुच्यन्ते प्रयागमरणेन वा। इतिवचनात्,

वाराणस्यां विमुच्यन्ते तारकज्ञानभाविताः।
विना ज्ञानं प्रयागेऽस्मिन् मुच्यन्ते सर्वजन्तवः॥

इति पद्मपुराणाच्चेति।

तदसत्। विना ज्ञानं मिथ्याज्ञाननिवृत्तेरसम्भवात्। लोकेऽपि "स्थाणुः"इतिविभ्रमस्य तद्विपरीतविषयिणा विशेषदर्शनजन्मना "पुरुष" इति ज्ञानेन निवृत्तिः। तद्विपरीतविषयस्य तु प्राचीनसंस्कारस्य पुरुष इतिज्ञानेन तत्प्रसूतेन वा संस्कारेणेत्यन्यदेतदिति। प्रकृते च देहात्मसम्भेदावगाहिनो मिथ्याज्ञानस्य तद्वासनायाश्च तत्त्वज्ञानादेव निवृत्तिः। ननु यथा प्राग्भवीयसंस्काराणां मरणादेव निवृत्तिस्तथाऽत्रापि प्रयागमरणमेव मिथ्याज्ञानवासनां निवर्तयतु किं ज्ञानेन। अत एव न सर्वो जातिस्मर इति। कस्य चित्तु तत्स्मरणं

फलबलेन क्वचित् संस्कारे कस्यचिन्मरणस्य नाशकत्वाकल्पनात् इति चेत्, मरणस्य मिथ्याज्ञानवासनानाशकत्वासम्भवात्। अन्यथा देशान्तरमरणादपि तन्नाशापत्तेः। एवमपि हि पूर्वपूर्वभवसम्भवस्य पुण्यपापपुञ्जस्य प्रक्षयासम्भवात्। नहि प्रयागमरणोत्तरं भोगः स्मर्य्यते येन स एव तन्निवर्तकः स्यात्। न च प्रयागमरणमेव पूर्वोपचिते पुण्यपापे प्रक्षिणोतीतिवक्तुं युक्तम्। प्रयागमरणस्य तत्राहेतुत्वात्। तेन विनापि भोगादिना पुण्यपापनिवृत्तेः। अथ तन्निवर्त्यतावच्छेदकं वैजात्यं कल्प्यमिति चेत्, न। पुण्यत्वादिना सङ्करात्। अथ यागदानादिजन्यतावच्छेदिकानां पुण्यत्वादिव्याप्यजातीनामपि व्याप्यानि नानैव तन्निवर्त्यतावच्छेदकानि वैजात्यानि, एवं वधबन्धनादिजन्यतावच्छेदकपापत्वव्याप्यजातीनामपि व्याप्यानि कानि चित् कल्प्यन्त इति चेत्, न। नानाविधयागजन्येषु अपूर्वेषु मणिकनकरजतगवाश्वादिदानजन्येषु चानन्तवैजात्यकल्पने गौरवात्। तत्त्वज्ञानस्य तु धर्माधर्मनाशकतायाः श्रुतिस्मृतिसिद्धत्वात्।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इत्यभिधानात्। अमूत्रयच्च—

भगवान् बादरायणः, तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्। (ब्र०सू०अ०४ पा०१ सू०१३)। इति। अश्लेषव्यपदेशो यथा "यथा पुष्करपलाश आपो न श्लिष्यन्ति एवमेवंविदि पापं कर्म न श्लिष्यते(छा० ४।१४।३) इति। विनाशव्यपदेशो यथा "यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते"(छा० ५।२४।३।) इति। यानि तु प्रयागमरणादपि पापक्षयबोधकानि वाक्यानि तानि तत्त्वज्ञानद्वारैव तथेति न

श्रुतिः। काम्यप्रयागीयमरणविषयाणि वा। किञ्च "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इतिश्रुतिविरोधादपि तत्त्वज्ञानं विना कृतस्य प्रयागमरणस्य न निर्वाहकत्वम्।

ब्रह्मज्ञानेन मुच्यन्ते प्रयागमरणेन वा।

इत्यादिवाक्यानां का गतिरितिचेत्। या गतिः प्रौढप्रतापस्य सर्वत्र सावहितस्य राजचक्रवर्त्तिनोऽहितमनुमन्त्रयतां मन्त्रिणामिति। न हि स्मृतेरन्यथात्वभिया श्रुतेरन्यथात्वं वर्णयितुमुचितम्। प्रयागमरणस्तुत्यर्थं वा ज्ञानसमकक्षतया तत्कीर्त्तनम्। "विना ज्ञानं प्रयागेऽस्मिन्" इतिवाक्यस्यापि चिरकालादरनैरन्तर्यसेवितयोगविधिसमासादिततादृशज्ञानं विनेत्यर्थः। प्रयागेऽप्युपदेशः श्रूयते—

काशीखण्डे,

यज्वनां पुनरावृत्तिर्न प्रयागौद्ध्वर्ष्मणाम्।

यत्र स्थितः स्वयं साक्षाच्छूलटङ्को महेश्वरः॥

तत्राप्लुतानां जन्तूनां मोक्षमार्गोपदे॰ ॰। इति।

एवं च सिद्धं प्रयागमरणस्यापि तत्त्वज्ञानं विना न निर्वाणनिर्माणहेतुत्वमिति।

इदं तु विचार्यते। किं काशीमरणप्राक्काल एव गिरीशोपदेश उत मरणोत्तरं विशिष्टशरीरपरिग्रहे सतीति। अत्र केचित्—प्रायणप्राक्काल एव तदुपदेशः। ननु तदानीं विविधव्याधिवेदनाविदीर्य्यमाणमर्मणां कथमुपदेशोपलम्भः कथं वा तदुपदिष्टार्थविज्ञानमितिचेत्, यथा धनञ्जयशरनिकरप्रहारजर्जरकलेवरस्य भागीरथीगर्भसम्भूतेः शन्तनुतनुजन्मनो भगवत्पाणिपाथोजपत्रस्पर्शनिरस्तसमस्तसन्तापस्य निखिलश्रुतिस्मृतीतिहासपुराणार्थसार्थस्फूर्त्तिस्तथेहापि भगवतो भवानीपतेः कृपालेशाद्वि-

मूलितनिखिलक्लेशस्य तदुपदिष्टार्थज्ञानेन निर्वाणसम्पत्तिरिति। अत एव—

मात्स्ये,

अन्तकाले मनुष्याणां छिद्यमानेषु मर्म्मसु।
वायुना प्रेर्य्यमाणानां स्मृतिर्नैवोपपद्यते॥

इत्यभिधाय—

अविमुक्ते त्वन्तकाले भक्तानामीश्वरः स्वयम्।
कर्म्मभिः प्रेर्य्यमाणानां कर्णजापं प्रयच्छति॥
ईश्वरप्रेरितो याति दुष्प्रापमकृतात्मभिः।

इत्यभिहितम्। अत्र तुशब्देन क्षेत्रान्तरापेक्षया विशेष उक्तः। ननु चाण्डालादीनामनधिकारिणां कथमुपदेशः कथं वा ततोऽपवर्ग इति। मैवम्। तपःप्रभावेण विश्वामित्रदेह इव श्रीविश्वनाथानुग्रहमहिम्ना तत्रैव द्विजत्वसम्भवात्। ननु प्रायणोत्तरं विशिष्टशरीरान्तरपरिग्रहेणोपदेशोपपत्तौ किमनया कष्टकल्पनयेतिचेत्, "अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे"इत्यादिश्रुतिमुपालभस्व किमन्येनोपालब्धेन। यतो जन्तुमात्रश्रवणात् कीटपतङ्गादीनामप्युपदेशान्मुक्तिरित्यास्थीयते। अत एव—

काशीखण्डे,

दीक्षितो वा दिवाकीर्त्तिः पण्डितो वाप्यपण्डितः।
तुल्यास्ते मोक्षदीक्षायां सम्प्राप्य मणिकर्णिकाम्॥
ददामि जन्तुमात्राय सर्वस्वं चिरसञ्चितम्।

इत्यत्र जन्तुमात्रमुक्तमित्याहुः।

अन्ये तु काशीमरणोत्तरं विशिष्टशरीरपरिग्रहेण ब्रह्मज्ञानान्मुक्तिः। न हि काशीमरणं साक्षात्तद्धेतुः किन्तु तत्त्वज्ञानप-

तिबन्धकाधर्मविनाशेन तत्त्वज्ञानमुत्पाद्य। न च मरणात् पूर्वमुपदेशार्थज्ञाने तत् सम्भवति। तदुक्तम्–

वार्त्तिकाचार्यैः,

पृथूदकादौ मरणं तदप्यत्यन्तशुद्धिकृत्। इति।

अत्र चादिपदात् काश्यादिसङ्ग्रहः। नन्वेवम् "अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु" इत्यादिश्रुतेः "मुमूर्षोर्दक्षिणे कर्णे" इत्यादेश्च विरोधो दुष्परिहर इतिचेत्, न।

अधर्म्मिष्ठस्य तत्क्षेत्रे यातनान्ते दिशेन्मतिम्।

इतिवचनविरोधस्य त्वयाऽपि दुष्परिहरत्वात्। अथ यातनान्तशरीरेऽपि प्राणोत्क्रमेण मुमूर्षुत्वसम्भवान्नानुपपत्तिस्तर्हि मरणोत्तरोपात्तविशिष्टशरीरस्यापि मुमूर्षुत्वादिसम्भवान्नानुपपत्तिरिति श्रद्दधीथाः। अत एव चाण्डालादीनामधिकारे न कष्टकल्पनापि प्रागुक्तेत्यवधेयम्। शूद्रस्य वेदश्रवणनिषेधः स्मर्य्यते च–"अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणम्" इति–"पद्युं ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्" इति। अथ निषेध एतदतिरिक्तपर इति चेत्, न। असङ्कोचेनोक्तरीत्योपपत्तौ सङ्कोचकल्पनाया अन्याय्यत्वात्। ननु काशीमरणेनान्तःकरणशुद्धिद्वारा तत्त्वज्ञानमुत्पाद्यत इति न युक्तं शुद्धान्तःकरणानामेव काशीमरणसम्भवात्। तदुक्तम्—

ब्राह्मे,

अनेकजन्मसंसिद्धान् वर्जयित्वा महामुनीन्।

नान्येषां मरणं तत्र यच्छत्यन्यो विभीषणात्॥ इति,

मैवम्। अनेकजन्मकृतकर्मणा काशीमरणप्रतिबन्धकाधर्मनिरासे सति काशीमरणमुत्पद्यते इति तदाशयात्। काशीम-

१ पादयुक्तं चरणसञ्चरणशालीत्यर्थः।

रणेन तत्त्वज्ञानप्रतिबन्धकाधर्मनिवृत्तौ तत्त्वज्ञानोत्पत्तिरित्यत्र तस्याविरोधित्वात् । किञ्च । सर्वेषां प्राणिनां प्रायणप्राक्काले नोपदेशादिसम्भवः । बधिराणामगृहीतपदपदार्थसङ्केतानां चाण्डालाण्डजादीनां पदार्थस्मरणाभावेन शाब्दबोधाभावात् । न च प्रमथनाथप्रभावसमुद्बुद्धप्राग्भवसम्भववासनावशात्तदिति वाच्यम् । तथापि कृमिकीटादीनां दक्षिणकर्णे उपदेशासम्भवात् । न हि शारीरयत्किञ्चिच्छिद्रमेव श्रोत्रं, घ्राणादेरपि तथात्वापत्तेः । नच शब्दग्राहकेन्द्रियमेव श्रोत्रं तच्च कीटादीनामपीति वाच्यम् । तथापि तत्र दक्षिणत्वासम्भवात् । न चैवं शरीरान्तरे यद्युपदेशस्तदा जन्तुमात्रस्य कीटपतङ्गादेर्मुक्तिरुक्ता विरुध्येतेति वाच्यम् । तेषामेवात्मनां शरीरान्तरपरिग्रहेण मोक्षोत्पत्तेरविकलत्वात् । तस्माच्छरीरान्तरपरिग्रहे तत्रैवोपदेशः । नच तच्छरीरेऽपि कथमधिकारः । "यातनान्ते दिशेन्मतिम्" इति वचनेन रुद्रपिशाचशरीर इव तत्रापि तत्सम्भवात् । तदुपर्य्यपि बादरायणः सम्भवात्(अ० १ पा० ३। सू० २६) इति व्याससूत्रे निष्टङ्कितमेतदिति प्राहुः ।

विप्रादीनां त्रयाणां वर्णानां पदपदार्थज्ञानवतां प्रायणप्राक्काले उपदेशः अन्येषां प्रायणोत्तरमित्यन्ये ।

## अथ काशीप्रवेशादिनकृत्यम् ।

वाराणस्यां लोचनगोचरीकृतायां यानं त्याज्यम् ।

पञ्चक्रोश्याश्च सीमानं प्राप्य देवो जनार्दनः ।
वैनतेयादवारुह्य करे धृत्वा ध्रुवं ततः ॥
मणिकर्ण्यां परिस्नाय विश्वेशमभिपूज्य च ।
इति काशीखण्डे विष्णुयात्रायां दर्शनात् ।

तथाच व्यासः,

निशामय महाभाग ! लोमहर्षण ! वच्मि ते ।
यथा प्रथमतो यात्रा कर्त्तव्या यात्रिकैर्मुदा ॥
सचैलमादौ स्नात्वा तु चक्रपुष्करिणीजले ।
सन्तर्प्य पितृदेवांश्च अन्यानपि जलार्थिनः ॥
आदित्यं द्रौपदीं विष्णुं दण्डपाणिं महेश्वरम् ।
नमस्कृत्य ततो गच्छेद् द्रष्टुं ढुण्ढिविनायकम् ॥
ज्ञानवापीमुपस्पृश्य नन्दिकेशं ततो व्रजेत् ।
तारकेशं ततोऽभ्यर्च्य महाकालेश्वरं ततः ॥
ततः पुनर्दण्डपाणिमित्येषा पञ्चतीर्थिका ।
ततो वैश्वेश्वरी यात्रा कार्या सर्वार्थसिद्धिदा ॥ इति ।

त्र्यहं पञ्चरात्रं वा वसेत् । "त्र्यहं पञ्चरात्रं वा वसेत्" इति देवलोक्तेः । एतदावश्यकम् । अन्यां यात्रां यथाशक्ति कुर्यात् ।

तदयं प्रयोगः । क्षेत्रं दृष्ट्वा यानं विहाय प्रणम्य ओमद्येत्यादिसर्वपापविमुक्तिकामो ऽविमुक्तप्रवेशमहं करिष्य इति सङ्कल्प्य प्रविशेत् । ततो मणिकर्णिकां गत्वा सचैलं स्नात्वा मुण्डनं विधाय मुण्डनाप्रायत्यनिवृत्तये मज्जनं विधाय ओमद्येत्यादि दशाश्वमेधजन्यफलसमफलप्राप्तिकामो मणिकर्णिकायां स्नानमहं करिष्य इति सङ्कल्प्य स्नात्वा सन्ध्यातर्पणतीर्थश्राद्धानि विधाय ब्राह्मणेभ्यो यथाशक्ति दत्त्वा आदित्यं द्रौपदीं विष्णुं दण्डपाणिं महेश्वरं च प्रणम्य ढुण्ढिमभ्यर्च्य ज्ञानवापीमुपस्पृश्य नन्दिकेशतारकेशमहाकालेशान् क्रमेणाभ्यर्च्य पुनर्दण्डपाणिं नत्वा श्रीविश्वेश्वरमभ्यर्चयेत् । तत्र च यथाकथञ्चि-

१ अप्रायत्यमशुचित्वम् ।

द्विश्वेश्वरपूजायाः सहस्रहेमकमलपूजाजन्यफलसमं फलं, पञ्चामृतादिघटितमहापूजायां तु पुरुषार्थचतुष्टयसिद्धिः फलं, त्रिरात्रवासे सर्वपापक्षयः, मासवासे तु सम्यक्चीर्णदिव्यपाशुपतव्रतफलसमफलमिति ।

काशीखण्डे,

मानसान्यपि भौमानि नानातीर्थादिकानि च ।

इत्यादिकमभिधाय—

एतानि यानि तीर्थानि काशीप्राप्तिकराणि च । इति ।

तत्र यथाश्रुत एवार्थः । अथ वा एतानि स्नानादिना स्वर्गादिवत् काशीप्राप्तिमपि जनयन्तीत्यर्थ इति ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमल—
श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज—
श्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकर—
श्रीवीरसिंहोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनु—
सकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्र-
विद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते
वीरमित्रोदयनिबन्धे तीर्थप्रकाशे काशीपरिच्छेदः समाप्तः ।

## अथ प्रयागमाहात्म्यम् ।

तत्र श्रुतिः, सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति । ये वै तन्वां विसृजन्ति धीरास्ते जनासोऽमृतत्वं भजन्ते ॥ इति ।

महाभारते आरण्यकपर्वणि पुलस्त्यतीर्थयात्रायाम् ।

ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्तुतम् ।
यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ॥
लोकपालाश्च सिद्धाश्च नियताः पितरस्तथा ।
सनत्कुमारप्रमुखास्तथैव च महर्षयः ॥
अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽपरे ।
तथा नागाः सुपर्णाश्च सिद्धाश्चक्रधरास्तथा ॥
सरितः सागराश्चैव गन्धर्वाप्सरसस्तथा ।
हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥
तत्र त्रीण्यग्निकुण्डानि तेषां मध्ये तु जाह्नवी ।
प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ॥
तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता ।
यमुना गङ्गया सार्द्धं सङ्गता लोकभाविनी ॥
गङ्गायमुनयोर्मध्यं पृथिव्या जघनं स्मृतम् ।
प्रयागं जघनस्यान्तमुपस्थमृषयो विदुः ॥
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरावुभौ ।
तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः ॥
तत्र वेदाश्च यज्ञाश्च मूर्त्तिमन्तो युधिष्ठिर ! ।
प्रजापतिमुपासन्त ऋषयश्च महाव्रताः ॥
यजन्ते क्रतुभिर्देवास्तथा चक्रधरा नृपाः ।
ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत ! ॥

प्रयागं सर्वतीर्थेभ्यः प्रवदन्त्यधिकं विभो ! ।
श्रवणात्तस्य तीर्थस्य नामसङ्कीर्तनादपि ॥
मृत्तिकालम्भनाद्वापि सर्वपापैः प्रमुच्यते ।
तत्राभिषेकं यः कुर्यात् सङ्गमे संशितव्रतः ॥
पुण्यं सुमहदाप्नोति राजसूयाश्वमेधयोः ।
एषा यजनभूमिर्हि देवानामपि सत्कृता ॥
दत्तं तत्र स्वल्पमपि महद्भवति भारत ! ।
न वेदवचनात्तात ! न लोकवचनादपि ॥
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ।
दशतीर्थसहस्राणि षष्टिकोट्यस्तथाऽपराः ॥
तेषां सान्निध्यमत्रैव कीर्त्तितं कुरुनन्दन ! ।
चातुर्विद्ये च यत्पुण्यं यत्पुण्यं सत्यवादिषु ॥
स्नात एव तदाप्नोति गङ्गायमुनसङ्गमे ।
धौम्यतीर्थयात्रायाम्,
पवित्रमृषिभिर्जुष्टं पुण्यं पावनमुत्तमम् ।
गङ्गायमुनयोर्वीर ! सङ्गमं लोकविश्रुतम् ॥
यत्रायजत भूतात्मा पूर्वमेव पितामहः ।
प्रयागमितिविख्यातं तस्माद्भारतसत्तम ! ॥ इति ।
मत्स्यपुराणे,
भगवन् ! श्रोतुमिच्छामि पूर्वकल्पे यथास्थितम् ।
ब्रह्मणा देवमुख्येन यथावत्कथितं मुने ! ॥
कथं प्रयागे गमनं नराणां तत्र कीदृशाम् ।
मृतानां का गतिस्तत्र स्नातानां चैव किं फलम् ॥
ये वसन्ति प्रयागे तु ब्रूहि तेषां च किं फलम् ।
एतन्मे सर्वमाख्याहि परं कौतूहलं हि मे ॥

मार्कण्डेय उवाच ।

कथयिष्यामि ते वत्स ! यच्छ्रेष्ठं तत्र यत्फलम् ।
पुरा ऋषीणां विप्राणां कथ्यमानं मया श्रुतम् ॥
आ प्रयागं प्रतिष्ठानाद्यत्पुरो वासुकेर्ह्रदात् ।
कम्बलाश्वतरौ नागौ नागाच्च बहुमूलकात् ॥
एतत् प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् ।
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥
तत्र ब्रह्मादयो देवा रक्षां कुर्वन्ति सङ्गताः ।
अन्ये च बहवस्तीर्थाः सर्वपापहराः शुभाः ॥
न शक्याः कथितुं राजन् ! बहुवर्षशतैरपि ।
सङ्क्षेपेण प्रवक्ष्यामि प्रयागस्य तु कीर्त्तनम् ॥
षष्टिर्धनुःसहस्राणि यानि रक्षन्ति जाह्नवीम् ।
यमुनां रक्षति सदा सविता सप्तवाहनः ॥
प्रयागं तु विशेषेण स्वयं रक्षति वासवः ।
मण्डलं रक्षति हरिर्दैवतैः सह सङ्गतः ॥
तं वटं रक्षति सदा शूलपाणिर्महेश्वरः ।
स्थानं रक्षन्ति वै देवाः सर्वपापहरं शुभम् ॥
अधर्मेणावृतो लोको नैव गच्छति तत्पदम् ।
अल्पमल्पतरं पापं यदा तस्य नराधिप ! ॥
प्रयागं स्मरमाणस्य सर्वमायाति सङ्क्षयम् ।
दर्शनात्तस्य तीर्थस्य नामसङ्कीर्तनादपि ॥
मृत्तिकालम्भनाद्वापि नरः पापात्प्रमुच्यते ।
पञ्च कुण्डानि राजेन्द्र ! येषां मध्ये तु जाह्नवी ॥
प्रयागस्य प्रवेशात्तु पापं नश्यति तत्क्षणात् ।
तथा,

सत्यवादी जितक्रोधो अहिंसापरमास्थितः ।
धर्मानुसारी तत्त्वज्ञो गोब्राह्मणहिते रतः ॥
गङ्गायमुनयोर्मध्ये स्नातो मुच्येत किल्बिषात् ।
मनसा चिन्तितान् कामांस्तांश्च प्राप्नोति पुष्कलान् ॥
ततो गत्वा प्रयागं तु सर्वदेवाभिरक्षितम् ।
ब्रह्मचारी वसेन्मासं पितॄन्देवांश्च तर्पयेत् ॥
ईप्सितान् लभते कामान् यत्र यत्राभिजायते ।
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ॥
समागता महाभागा यमुना यत्र निम्नगा ।
यत्र सन्निहितो नित्यं साक्षाद्देवो महेश्वरः ॥
दुष्प्रापं मानुषैः पुण्यं प्रयागं तु युधिष्ठिर ! ।
देवदानवगन्धर्वा ऋषयः सिद्धचारणाः ॥
तत्रोपस्पृश्य राजेन्द्र ! स्वर्गलोकमुपासते ।

**तथा,**

शृणु राजन् ! प्रयागस्य माहात्म्यं पुनरेव हि ।
नैमिषं पुष्करं चैव गोतीर्थं सिन्धुसागरम् ॥
गया च धेनुकं चैव गङ्गासागरमेव च ।
एते चान्ये च बहवो ये च पुण्याः शिलोच्चयाः ॥
दश तीर्थसहस्राणि त्रिंशत्कोट्यस्तथाऽपराः ।
प्रयागे संस्थिता नित्यमेवमाहुर्मनीषिणः ॥
त्रीणि चाप्यग्निकुण्डानि तेषां मध्ये तु जाह्नवी ।
प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ॥
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ।
यमुना गङ्गया सार्द्धं सङ्गता लोकपावनी ॥
गङ्गायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् ।

प्रयागं राजशार्दूल ! कलां नार्हन्ति षोडशीम् ॥
तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् ।
दिवि भुव्यन्तरिक्षे च तत्सर्वं जाह्नवी स्मृता ॥
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरावुभौ ।
भोगवत्यथ या चैषा वेदिरेषा प्रजापतेः ॥
तत्र वेदाश्च यज्ञाश्च मूर्त्तिमन्तो युधिष्ठिर ! ।
प्रजापतिमुपासन्ते ऋषयश्च तपोधनाः ॥
यजन्ते क्रतुभिर्देवांस्तथा चक्रधरा नृपाः ।
ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत ! ॥
प्रभावात्सर्वतीर्थेभ्यः प्रभवत्यधिकं प्रभो ! । इति ।

त्रीणीति । एकं प्रयागनगरे, द्वितीयं प्रतिष्ठाननगरे, तृतीयं यमुनादक्षिणेऽलर्कनगरे । कुण्डानि कूपा इत्यर्थः ।

कौर्मे,

यत्र गङ्गा महाभागा बहुतीर्थसमागता ।
सिद्धिक्षेत्रं हि तज्ज्ञेयं नात्र कार्य्या विचारणा ॥
क्षितौ तारयते मर्त्त्यान्नागांस्तारयतेऽप्यधः ।
दिवि तारयते देवांस्तेन त्रिपथगा स्मृता ॥

तथा तत्रैव,

सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ।
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥ इति ।

काशीखण्डे,

यज्वनां पुनरावृत्तिर्न प्रयागाद्रिवर्ष्मणाम् ।
यत्र स्थितः स्वयं साक्षाच्छूलटङ्को महेश्वरः ॥
तत्राप्लुतानां जन्तूनां मोक्षमार्गोपदेशकः ।
तत्राक्षयवटोऽप्यस्ति सप्तपातालमूलवान् ॥

प्रलयेऽपि यमारुह्य मृकण्डुतनयोऽवसत् ।
हिरण्यगर्भो विज्ञेयः स साक्षाद्वटरूपधृक् ॥
तत्समीपे द्विजान् भक्त्या सम्भोज्याक्षयपुण्यभाक् ।
यत्र लक्ष्मीपतिः साक्षाद्वैकुण्ठादेत्य मानवान् ॥
श्रीमाधवस्वरूपेण नयेद्विष्णोः परं पदम् ।

अत्र केचित्– सर्वत्रादिमं तीर्थमुद्दिश्य यात्रा कार्य्या । आन्तरालिकानि तीर्थानि प्रासङ्गिकानि । तथा च प्राच्यैः प्रयागमुद्दिश्यैव यात्रा कार्या । गया काशी च तेषां प्रासङ्गिकी । तत्र चार्द्धफलम् ।

अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ।

इतिवचनात् । एवं दाक्षिणात्यैर्गयामुद्दिश्य यात्रा कार्य्या काश्यादिकं प्रासङ्गिकमित्याहुः । तत्र प्रमाणं न पश्यामः । न हि बलदेवयुधिष्ठिरादीनामतिबहुलतीर्थयात्रायां किञ्चिदेकं मुख्यमासीदित्यत्र साधकमुपलभामहे । तस्माद्यैर्बहूनि तीर्थानि गन्तव्यानि तैः "तीर्थयात्रामहं करिष्ये" इत्येव सङ्कल्पनीयम् । यद्वा प्राच्यैर्गयामुद्दिश्य यात्रा कार्य्या तत्रागत्य काशीमुद्दिश्य । एवमन्यत्रापि । एतेनानेकगृहदाहादिनिमित्तकक्षामवत्यादीष्टेरस्तु तन्त्रता नैमित्तिकत्वात्, नित्यनैमित्तिकयोर्हि सा दृष्टा, काम्यानां तु युगपत्प्रसक्तेरभावात् कथं सा स्यात्, न्यूनातिरिक्तमार्गगमनरूपतया प्रकृतेऽसम्भवाच्चेत्यपास्तम् । काम्येऽपि युगाद्यश्राद्धादौ एकस्मिन् ब्राह्मणे पितृपितामहादिश्राद्धतन्त्रदर्शनात् । "अर्घ्येऽक्षय्योदके चैव" इत्यादिनाऽर्घदानेऽपि तन्त्रतासिद्धेः । काम्यदर्शेऽपि पयोयागे तन्त्रेणानुष्ठानदर्शनात् । ग ।प्राप्तिस्वरूपयोग्यगमनस्यैव काशीप्राप्तिस्वरूपयोग्यत्वाच्च । न हि तन्मार्गगमनसमये गयां गच्छतीति न व्यवहार इति ।

अथ प्रयागशब्दार्थनिर्वचनम् ।

भारते,

यत्रायजत भूतात्मा पूर्वमेव पितामहः ।
प्रयागमिति विख्यातं तस्माद्भारतसत्तम ॥ इति ।

अनेन प्रकृष्टो यागो यत्र तत् प्रयागमिति लब्धम्। एवं च क्षेत्रादिपदसामानाधिकरण्ये प्रयागशब्दस्य नपुंसकत्वं तीर्थराजादिपदसामानाधिकरण्ये तु पुंस्त्वम् ।

ब्राह्मे,

प्रकृष्टत्वात् प्रयागोऽसौ प्राधान्याद्राजशब्दवान् । इति ।

## अथ प्रयागादिपरिमाणम् ।

मात्स्ये,

आ प्रयागं प्रतिष्ठानाद्यत्पुरो वासुकेर्ह्रदात् ।
कम्बलाश्वतरौ नागौ नागाच्च बहुमूलकात् ॥
एतत् प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् । इति ।

आ प्रतिष्ठानात् प्रयागमित्यन्वयः । एवम् आकम्बलाश्वतरौ नागौ इत्याद्यूह्यम् । गङ्गापूर्वकूले प्रतिष्ठानं नाम नगरं तत्रैव सामुद्रो नाम कूपः स एव प्रतिष्ठानशब्देनात्र लक्ष्यते ।

पूर्वपार्श्वे तु गङ्गायास्त्रिषु लोकेषु भारत ! ।
कूपं चैव तु सामुद्रं प्रतिष्ठानं च विश्रुतम् ॥

इति मात्स्यात् । एवं च गङ्गापूर्वतः सामुद्रकूपः, दक्षिणे बहुमूलकः, पश्चिमे कम्बलाश्वतरौ, उत्तरस्यां वासुकिह्रद इति दिशामवधयः । अनेन क्रमेण कोणसूत्रं साधयित्वा चतुरस्रं प्रयागक्षेत्रं ज्ञातव्यमिति वदन्ति । परे तु दक्षिणे कम्बलाश्वतरौ ।

कम्बलाश्वतरौ नागौ यमुनादक्षिणे तटे ।

इति कल्पतरुलिखितमत्स्यपुराणादिति ।

यामुने चोत्तरे कूले प्रयागस्य तु दक्षिणे ।
ऋणप्रमोचनं नाम तीर्थं तत्परमं स्मृतम् ॥

इति वचनाद्यमुनोत्तरकूलपर्य्यन्तं प्रयागदक्षिणसीमेति । प्रयागस्तु ब्रह्मयूपोपलक्षितप्रदेश इति वदतां प्रामाणिकानामपीदृशक्षेत्र एव तात्पर्यम् । प्रयागमण्डलं तु पञ्चयोजनपरिमितम् ।

पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम् ।

इतिमात्स्यात् । एवं च ब्रह्मयूपमवधीकृत्य सार्द्धयोजनद्वयमिते सूत्रे चतुर्दिक्षु भ्रामिते वर्त्तुलं प्रयागमण्डलं ज्ञेयम्। प्रयागव्याप्त्या विंशतिधनुःप्रमाणा वेणी ।

माघः सितासिते विप्र ! राजसूयैः समो भवेत् ।
धनुर्विंशतिविस्तीर्णसितनीलाम्बुसङ्गमे ॥

इति पाद्मात् । इदं क्षेत्रतीर एव अवध्यन्तराकथनात् । एवं च वेणीव्यापकं प्रयागं तद्व्यापकं प्रयागमण्डलं तन्मते । कल्पतरुकारैस्तु एतद्वाक्यस्यालिखनात् सितासितसङ्गममात्रं वेणीति तन्मते गम्यते ।

## अथ प्रयागस्मरणफलम् ।

मात्स्ये,

देशस्थो यदि वाऽरण्ये विदेशे यदि वा गृहे ।
प्रयागं स्मरमाणोऽपि यस्तु प्राणान् परित्यजेत् ॥
ब्रह्मलोकमवाप्नोति वदन्ति ऋषिपुङ्गवाः ।

स्कान्दे,

बहु वाल्पतरं वापि पापं यस्य नराधिप ! ।
प्रयागं स्मरमाणस्य सर्वमायाति सङ्क्षयम् ॥ इति ।

अथ प्रयागगमनमहिमा।

कौर्मे,

प्रयागगमनं श्रेष्ठं नराणां पापकर्मणाम्।
तत्र देवो महादेवो रुद्रो विश्वामरेश्वरः॥
सहास्ते भगवान् ब्रह्मा स्वयम्भूरपि दैवतैः।

तथा,

पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम्।
प्रवेशात्तस्य तद्भूमावश्वमेधः पदे पदे॥ इति।

अथ प्रयागदर्शननामकीर्त्तनमृत्तिकालम्भनानां फलम्।

मात्स्ये,

दर्शनात्तस्य तीर्थस्य नामसङ्कीर्त्तनादपि।
मृत्तिकालम्भनाद्वापि नरः पापात्प्रमुच्यते॥ इति।

अथ प्रयागवासफलम्।

तत्रैव,

प्रयागमनुगच्छेद्वा वसते वापि यो नरः।
सर्वपापविशुद्धात्मा रुद्रलोकं स गच्छति॥ इति।

अथ मासवासफलम्।

तत्रैव,

ततो गत्वा प्रयागं तु सर्वदेवाभिरक्षितम्।
ब्रह्मचारी वसेन्मासं पितॄन् देवांश्च तर्पयेत्॥
ईप्सितान् लभते कामान् यत्र यत्राभिजायते। इति।

अयं तु मासः सावनः कश्चिदेव ग्राह्यः।

स्कान्दे,

ब्रह्महत्यादिपापानां प्रायश्चित्तचिकीर्षुणां।
सेव्यं सितासितं तीर्थं प्रकृष्टं जगतीतले॥ इति।

इदमात्यन्तिकवासपरमिति वदन्ति।

## अथ सितासितस्नानफलम् ।

पद्मपुराणे,

कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिनः ।
तस्माद्दशगुणा प्रोक्ता यत्र विन्ध्येन सङ्गता ॥
तस्माच्छतगुणा प्रोक्ता काश्यामुत्तरवाहिनी ।
काश्याः शतगुणा प्रोक्ता गङ्गायमुनसङ्गमे ॥
सहस्रगुणिता सापि भवेत् पश्चिमवाहिनी ।
सा राजन् ! दर्शनादेव ब्रह्महत्यापहारिणी ॥
पश्चिमाभिमुखी गङ्गा कालिन्द्या सह सङ्गता ।
हन्ति कल्पकृतं पापं सा माघे नृप ! दुर्लभा ॥
अमृतं कथ्यते राजन् ! सा वेणी भुवि कीर्तिता ।
तस्यां माघे मुहूर्त्ते तु देवानामपि दुर्लभम् ॥

मुहूर्त्तपदादेकदिनस्नाने माघे इदमेव फलं बोध्यम् ।

तथा,

पृथिव्यां यानि तीर्थानि पुर्यः सन्तीह याः पुनः ।
स्नातुमायान्ति ता वेण्यां माघे मासि नराधिप ! ॥
ब्रह्मविष्णुमहादेवा रुद्रादित्यमरुद्गणाः ।
गन्धर्वलोकपालाश्च यक्षकिन्नरगुह्यकाः ॥
अणिमादिगुणोपेता ये चान्ये तत्त्वदर्शिनः ।
ब्रह्माणी पार्वती लक्ष्मीः शची मेधाऽदिती रतिः ॥
सर्वास्ता देवपत्न्यश्च तथा नागाङ्गना नृप ! ।
घृताची मेनका रम्भा उर्वशी च तिलोत्तमा ॥
गणाश्चाप्सरसां सर्वे पितॄणां च गणास्तथा ।
स्नातुमायान्ति ते सर्वे माघे वेण्यां नराधिप ! ॥
कृते युगे स्वरूपेण कलौ प्रच्छन्नरूपिणः ।

सर्वतीर्थानि कृष्णानि पापिनां सङ्गदोषतः ॥
भवन्ति शुक्लवर्णानि प्रयागे माघमज्जनात् ।
तथा,
मकरस्थे रवौ माघे गोविन्दाच्युत ! माधव ! ।
स्नानेनानेन मे देव ! यथोक्तफलदो भव ॥
इमं मन्त्रं समुच्चार्य स्नायान्मौनं समाश्रितः ।
वासुदेवं हरिं कृष्णं माधवं च स्मरेत्पुनः ॥
तप्तेन वारिणा स्नानं यद्गेहे क्रियते नरैः ।
षडब्देन फलं तद्धि मकरस्थे दिवाकरे ॥
वहिःस्नानं तु वाप्यादौ द्वादशाब्दफलं स्मृतम् ।
तडागे द्विगुणं राजन् ! नद्यादौ तु चतुर्गुणम् ॥
दशधा देवखाते तु शतधा तु महानदी ।
शतं चतुर्गुणं राजन् ! महांनद्यास्तु सङ्गमे ॥
सहस्रगुणितं सर्वं तत्फलं मकरे रवौ ।
गङ्गायां स्नानमात्रेण लभते मानुषो नृप ! ॥
गङ्गां येऽत्रावगाहन्ते माघे मासि नराधिप ! ।
चतुर्युगसहस्रं ते न पतन्ति सुरालयात् ! ॥
शतेन गुणितं माघे सहस्रं राजसत्तम ! ।
निर्दिष्टमृषिभिः स्नानं गङ्गायमुनसङ्गमे ॥
पापौघभूरिभारस्य दाहदेशं प्रजापतिः ।
प्रयागं विदधे भूप ! प्रजानां च हिते रतः ॥
सूनास्थानामिदं सम्यक् सितासितजलं किल ।
पापरूपपशूनां हि ब्रह्मणा विहितं पुरा ॥
सितासिता तु या धारा सरस्वत्या विदर्भिता ।
तन्मार्गं ब्रह्मलोकस्य सृष्टिकर्त्ता ससर्ज वै ॥

तथा,

ज्ञानकृन्मानसे माघस्तत्त्वमोक्षफलप्रदः ।
हिमवत्पृष्ठतीर्थेषु सर्वपापप्रणाशनः ॥
इन्द्रलोकप्रदो माघो निर्दिष्टो वेदवादिभिः ।
सर्वकामप्रदो माघो मोक्षदो बदरीवने ॥
पापहा दुःखहारी च सर्वकामफलप्रदः ।
रुद्रलोकप्रदो माघो नार्मदः पापनाशनः ॥
सारस्वतोऽघौघध्वंसी ब्रह्मलोकफलस्तथा ।
विशालकुलदो माघो विशालायां द्विजोत्तम ? ॥
पापेन्धनदवाग्निस्तु गर्भहेतुक्षयावहः ।
विष्णुलोकाय मोक्षाय जाह्नवः परिकीर्त्तितः ॥
सरयूर्गण्डकी सिन्धुश्चन्द्रभागा च कौशिकी ।
तापी गोदावरी भीमा पयोष्णी कृतकौशिकी ॥
कावेरी तुङ्गभद्रा च याश्चान्याश्च समुद्रगाः ।
तासु स्नायी नरो याति स्वर्गलोकं विकिल्बिषः ॥
नैमिषे विष्णुसारूप्यं पुष्करे ब्रह्मणोऽन्तिकम् ।
आखण्डलस्य लोको हि कुरुक्षेत्रे च साध्यते ॥
माघो देवह्रदे विप्र ! योगसिद्धिफलप्रदः ।
प्रभासे मकरादित्ये स्नातो रुद्रगणो भवेत् ॥
देवकात् देवतादेहो नरो भवति.माघतः ।
माघस्नानेन भोविप्र ! गोमत्यां न पुनर्भवः ॥
हेमकूटमहाकाल ओङ्कारे ह्यपरे तथा ।
नीलकण्ठाम्बुदे माघाद्रुद्रलोके महीयते ॥
सर्वासां सरितां विप्र ! सम्प्लवो मकरे रवौ ।
स्नानेन सर्वकामानामवाप्तिर्जायते नृप ! ॥

माघस्तत्राप्यते धन्यैः प्रयागे द्विजसत्तम!।
अपुनर्भवदं तत्र सितासितजलं यतः॥
गायन्ति देवाः सततं दिविष्ठा
माघः प्रयागे किल नो भविष्यति।
स्नाता नरा यत्र न गर्भवेदनां
पश्यन्ति तिष्ठन्ति च विष्णुसन्निधौ॥

**तथा,**

तीर्थैर्व्रतैर्दानतपोभिरध्वरैः
सार्द्धं विधात्रा तुलया धृतः पुरा।
माघः प्रयागश्च तयोर्द्वयोरभूत्
माघो गरीयांश्च तयोश्च सोऽधिकः॥
वाताम्बुपर्णाशनदेहशोषणै-
स्तपोभिरुग्रैश्चिरकालसञ्चितैः।
योगैश्च संयान्ति नराश्च यां गतिं
स्नाता हि ये माकरभास्करोदये॥
तीर्थे प्रयागे सुरसिन्धुयोगे
तेषां गृहद्वारमलङ्करोति।
भृङ्गावली कुञ्जरकर्णताडिता
ये राजसूयाश्वमेधयज्ञतः॥
स्नानात्फलं सम्प्रददाति चाखिलं
पापानि सर्वाणि विलुप्य लीलया।

**तथा समयमात्रे,**

चतुर्वेदिषु यत्पुण्यं सत्यवादिषु चैव हि।
स्नात एव समाप्नोति गङ्गायमुनसङ्गमे॥
सितासिते तु यो मज्जेदपि पापशताहृतः।

मकरस्थे रवौ माघे न स गर्भेषु मज्जति ॥
दुर्जया वैष्णवी माया देवैरपि सुदुस्त्यजा ।
प्रयागे दह्यते सा तु माघे मासि नराधिप ! ॥
तेषु तेषु च लोकेषु भुक्त्वा भोगाननेकशः ।
पश्चाच्चक्रिणि लीयन्ते प्रयागे माघमज्जिनः ॥
उपस्पृशति यो माघे मकरार्के सितासिते ।
तस्य पुण्यस्य सङ्ख्या नो चित्रगुप्तोऽपि वेत्त्यलम् ॥
राजसूयसहस्रस्य राजन्नविकलं फलम् ।
सितासिते च माघे च स्नातानां भवति ध्रुवम् ॥
भविष्ये,
गङ्गायमुनयोश्चैव सङ्गमो लोकविश्रुतः ।
स एव कामिकं तीर्थं तत्र स्नानेन भक्तितः ॥
यस्य यस्य च यः कामस्तस्य तस्य भवेद्धि सः ।
भोगकामस्य भोगाः स्युः स्याद्राज्यं राज्यकामिनः ॥
स्वर्गः स्यात् स्वर्गकामस्य मोक्षः स्यान्मोक्षकामिनः ।
कामप्रदानि तीर्थानि त्रैलोक्ये यानि कानि चित् ॥
तानि सर्वाणि सेवन्ते गङ्गायमुनसङ्गमम् ।
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥
स्नात्वैव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेत् ।
भारते,
सितासिते तु यत्स्नानं माघमासे युधिष्ठिर ! ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥
पाद्मे,
स्वर्णभारसहस्रेण कुरुक्षेत्रे रविग्रहे ।
यत्फलं लभते माघे वेण्यां तच्च दिने दिने ॥

तथा,

धनुर्विंशतिविस्तीर्णे सितनीलाम्बुसङ्गमे ।
माघादपुनरावृत्ती राजसूयी पुनर्भवेत् ॥
माघमासीयवातोऽपि सितासितजलं स्पृशन् ।
अधन्यान् स्पृशेन्नूनं महापातकहा हि सः ॥

भविष्ये,

सर्वेषामेव वर्णानां सर्वाश्रमवतामपि ।
माघस्नानं तु धर्मस्य धाराभिः खलु वर्षति ॥ इति ।

## अथ मुण्डनम् ।

तत्र यद्यपि कल्पतरुकारेण मुण्डनं नाभिहितं, तथापि शिष्टपरिग्रहात् प्रमाणवचनमभिलिख्यते । तथा हि,

प्रयागे वपनं कुर्य्याद्गयायां पिण्डपातनम् ।
दानं दद्यात्कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत् ॥
किं गयापिण्डदानेन काश्यां वा मरणेन किम् ।
किं कुरुक्षेत्रदानेन प्रयागे वपनं यदि ॥ इति ।

अत्र "प्रयागे वपनं कुर्य्यात्" इति विधिः । तत्र फलाकाङ्क्षायां रात्रिसत्रवदर्थवादिकमेव फलं तत्रान्वेति। तच्च "किं गयापिण्डदानेन" इत्यादिश्रवणाद्गयापिण्डदानादिजन्यफलसमफलम्। नन्वस्तु रात्रिसत्रे प्रतिष्ठा फलम्, अर्थवादेन प्रतिष्ठाया उपस्थितेः । इह तु "किं गयापिण्डदानेन" इत्यादिना न किञ्चित् फलमुपस्थापितमिति चेत्, न । गयापिण्डदानेन किं फलमित्यनेनार्थात् तत्फलकत्वावगतेः । नन्वेवं गयापिण्डदानस्य नानाफलं श्रुतमस्ति तदप्यत्र स्यात् इति चेत्, तर्हि गयाश्राद्धस्यापि नानाफलकत्वं त्यज्यताम्। गौरवात् । अथोपस्थितत्वात् तत्र नानाफलमपि कल्प्यते । तर्हि तुल्यम् । इयान् विशेषः ।

गयाश्राद्धे तत्तद्वाक्यात् तत्तत्फलोपस्थितिः, इह तु अर्थादिति। एवं च गयापिण्डदानजन्यकाशीमरणजन्यकुरुक्षेत्रदानजन्यफलसमफलप्राप्तिकामोऽधिकारी।

केचित्तु "किं गयापिण्डदानेन" इत्यादि प्रशंसामात्रम्। "यानि कानि च पापानि" इतिमन्त्रनिर्दिष्टपापक्षय एव फलम्। यथा "सूक्तवाकेन प्रस्तरं प्रहरति" इत्यत्र सूक्तवाकप्रकाशितायुराद्याशासनं प्रस्तरप्रहरणफलमित्याहुः। अत्र च "वपनं करिष्ये" इतिप्रयोगः। प्रपञ्चितमेतत् सामान्यतस्तीर्थधर्मेषु मुण्डनप्रकरणे। "वपनं कारयिष्ये" इति प्रयोग इतिमिश्राः। इदं तु बोध्यम्।

केशानां यावती सङ्ख्या छिन्नानां जाह्नवीजले।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥
यावन्ति नखलोमानि वायुना प्रेरितानि वै।
पतन्ति जाह्नवीतोये नराणां पुण्यकर्मणाम्॥
तावदब्दसहस्राणि स्वर्गलोके महीयते।

इत्यादिभिः शिष्टपरिगृहीतवचनैर्गङ्गाप्राप्तिनिमित्तक एव मुण्डने फलवत्त्वम् "किं गयापिण्डदानेन" इत्यादिना च प्रयागप्राप्तिनिमित्तक एव तादृशफलवत्त्वं चोच्यते। नित्येऽग्निहोत्रे "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यनेन स्वर्गफलकत्ववत् एकेनैव मुण्डनेन तन्त्रेणैव द्वयोर्नैमित्तकयोः सिद्धिः। उभयफलकामनया क्रियमाणेनाप्येकेनैव काम्ययोर्वपनयोर्निर्वाहः। न चोभयफलकामनया एकस्यानुष्ठाने योगसिद्ध्यधिकरणविरोधः। तस्य केवलकाम्यविषयत्वात्। दृष्टं च श्रौतेऽपि यमलपुत्रजन्मनि जाते[1] युगपदनेकगृहदाहादिनिमित्तकक्षामवत्यादीष्टीनां च तन्त्रे-

१ पू० मी० अ० ४ पा० ३ अधि० ११।

णानुष्ठानम्। स्मार्त्तेऽपि सङ्क्रान्तिव्यतीपातदर्शादिश्राद्धानां तन्त्रेणानुष्ठानं हेमाद्रिप्रभृतिभिर्दर्शितम्।

मिश्रास्तु—"स्वर्गफलकं गङ्गायां मुण्डनं, मोक्षफलकं च प्रयागीयं मुण्डनम्। न चानयोस्तन्त्रेण प्रसङ्गेन वा सिद्धिः। नानाफलकामाधिकारिकत्वात्। कामनयोर्युगपदसम्भवात्। ततश्च क्रमाकाङ्क्षायां गङ्गामुण्डनमाद्यम्। "गङ्गां प्राप्य" इत्यादिश्रवणात्। ननु प्रयागेऽपि—

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।

इत्यनेन मुण्डनोपवासयोरेककालीनत्वं प्राप्यते। उपवासश्च तत्र प्राप्तिदिने कर्त्तव्य इति तत्र मुण्डनमपि तथास्तु इति चेत्, सत्यम्। उपवासमुण्डनयोर्द्वयोस्तत्र प्राप्तिनिमित्तकत्वात् तस्य मुण्डनस्य गङ्गामुण्डनेन काम्येन प्रसङ्गतो निर्वाहात्। काम्यं तु प्रयागमुण्डनमन्यदेव। तच्चानियतकालम्। अतो दिनान्तरे प्रयागमण्डलाभ्यन्तरस्थले तदनुष्ठेयम्। नन्विदं केवलकाम्यं चेत्? स्नानवत् प्रतिदिनमापद्येत। प्राप्तिनिमित्तकं चेत्? प्रथमाह एव क्रियेत। निमित्तकामनयोस्तदहरेव सन्निपातात्। अथ—

संवत्सरे द्विमासोने पुनस्तीर्थं व्रजेद्यदि।
मुण्डनं चोपवासं च ततो यत्नेन वर्जयेत्॥

इतिवचनादेकोपाधिप्रयुक्तं दशमासाभ्यन्तरे पुनस्तीर्थवपनं न कार्य्यम्। न चैवं प्रयागीयं प्रथममुण्डनमपि न स्यात्। तस्यापि तदवच्छिन्नगङ्गामुण्डनापेक्षया द्वितीयत्वात् इति वाच्यम्। तस्य प्रयागे विहितस्य गङ्गामुण्डनेन भिन्नाधिकारिकेण प्रसङ्गेन तन्त्रेण वाऽनिष्पत्तेः पृथगनुष्ठानस्य तत्र न्याय्यत्वादिति। मैवम्। एतस्य प्राप्तिनिमित्तकमुण्डनपरत्वात्। तन्नि-

मित्तकोपवाससाहचर्य्यात्, 'व्रजेत्'इत्यभिधानाच्च। अत्रोच्यते–

गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत्।
स कोटिकुलसंयुक्त आकल्पं रौरवे वसेत्॥

इत्यादिना भास्करक्षेत्रे प्रयागे अकरणे निन्दाश्रवणात् करणे फलश्रवणाच्च प्रयागमुण्डनं नित्यकाम्यतया सिद्धम्। तच्च सकृत्करणादेव शास्त्रार्थसिद्धेरेकस्यां यात्रायामेकमेवानियतकालं चेत्यवसीयते। एवं तदवच्छिन्नगङ्गामुण्डनमपि"इत्याहुः।

तच्चिन्त्यम्। नित्येऽग्निहोत्रे स्वर्गफलकत्ववत् प्रयागप्राप्तिनिमित्तकमुण्डन एव तत्तत्फलकत्वेनोपपत्तौ प्रयागे काम्यमुण्डनान्तरकल्पने गौरवात्। अत एव "पुष्करेष्वक्षयं श्राद्धम्" इत्यादेस्तीर्थप्राप्तिनिमित्तिक एव श्राद्धेऽक्षयफलबोधकत्वम्। अन्यथा पुष्करादौ द्वितीयादिदिने काम्यं श्राद्धान्तरं प्रसज्येत। यदप्युक्तं भास्करक्षेत्रं प्रयागमिति। तदपि वार्त्तम्। तस्य कोणार्कक्षेत्रवाचकत्वात्। प्रयागस्य प्रजापतिक्षेत्रत्वात्।

## अथ प्रयागगतीर्थानि।

**मात्स्ये,**

कम्बलाश्वतरौ नागौ यमुनादक्षिणे तटे।
तत्र स्नात्वा च पीत्वा च सर्वपापैः प्रमुच्यते॥
तत्र गत्वा च संस्थानं महादेवस्य धीमतः।
नरस्तारयते पुंसो दश पूर्वान् दशापरान्॥
इदं महादेवस्थानगमनफलम्।
कृत्वा ऽभिषेकं तु नरः सोऽश्वमेधफलं लभेत्।
स्वर्गलोकमवाप्नोति यावदाभूतसम्प्लवम्॥
पूर्वपार्श्वे तु गङ्गायास्त्रिषु लोकेषु भारत!।
कूपं चैव तु सामुद्रं प्रतिष्ठानं तु विश्रुतम्॥

ब्रह्मचारी जितक्रोधस्त्रिरात्रं यदि तिष्ठति।
सर्वपापविशुद्धात्मा सोऽश्वमेधफलं लभेत्॥
उत्तरे तु प्रतिष्ठानात् भागीरथ्यास्तु पूर्वतः।
हंसप्रपतनं नाम तीर्थं त्रैलोक्यविश्रुतम्॥
अश्वमेधफलं तस्मिन् स्नानमात्रेण भारत!।
यावच्चन्द्रश्च सूर्य्यश्च तावत् स्वर्गे महीयते॥
उर्वशीपुलिने रम्ये विपुले हंसपाण्डरे।
परित्यज्यति यः प्राणान् शृणु तस्यापि यत्फलम्॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च।
सेव्यते पितृभिः सार्द्धं स्वर्गलोके नराधिप॥
उर्वशीं च सदा पश्येद्देवलोके नरोत्तम!।
पूज्यते सततं देवैर्ऋषिगन्धर्वकिन्नरैः॥
ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः।
उर्वशीसदृशीनां तु कन्यानां लभते शतम्॥
मध्ये नारीसहस्राणां बहूनां च पतिर्भवेत्।
दशग्रामसहस्राणां भोक्ता भवति पार्थिव!॥
काञ्चीनूपुरशब्देन सुप्तोऽसौ प्रतिबुध्यते।
भुक्त्वा च विपुलान् भोगान् तत्तीर्थं लभते पुनः॥
शुक्लाम्बरधरो नित्यं नियतः संयतेन्द्रियः।
एककालं तु भुञ्जानो मासं भूमिपतिर्भवेत्॥
सुवर्णालङ्कृतानां तु नारीणां लभते शतम्।
पृथिव्यामासमुद्रायां महाभूमिपतिर्भवेत्॥
धनधान्यसमायुक्तो दाता भवति नित्यशः।
स भुक्त्वा विपुलान् भोगांस्तत्तीर्थं स्मरते पुनः॥
अथ सन्ध्यावटे रम्ये ब्रह्मचारी जितेन्द्रियः।

उपासीत शुचिः सन्ध्यां ब्रह्मलोकमवाप्नुयात् ॥
कोटितीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ।
कोटिवर्षसहस्राणि स्वर्गलोके महीयते ॥
ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ।
सुवर्णमणिमुक्ताढ्ये कुले जायेत रूपवान् ॥
ततो भोगवतीं गत्वा वासुकेरुत्तरेण तु ।
दशाश्वमेधिकं नाम तीर्थं तत्रापरं भवेत् ॥
कृताभिषेकस्तु नरः सोऽश्वमेधफलं लभेत् ।
धनाढ्यो रूपवान् दक्षो दाता भवति धार्मिकः ॥
चतुर्वेदिषु यत्पुण्यं सत्यवादिषु यत्फलम् ।
अहिंसायां तु यो धर्मो गमनादेव तत्फलम् ॥
तथा,
मानसं नाम तीर्थं तु गङ्गाया उत्तरे तटे ।
त्रिरात्रोपोषितः स्नात्वा सर्वान् कामानवाप्नुयात् ॥
गोभूहिरण्यदानेन यत्फलं प्राप्नुयान्नरः ।
तत्फलं समवाप्नोति तत्तीर्थं स्मरते पुनः ॥
अकामो वा सकामो वा गङ्गायां यो विपद्यते ।
मृतस्तु लभते स्वर्गं नरकं च न पश्यति ॥
अप्सरोगणसङ्गीतैः सुप्तोऽसौ प्रतिबुद्ध्यते ।
हंससारसयुक्तेन विमानेन स गच्छति ॥
बहुवर्षसहस्राणि स्वर्गं राजेन्द्र ! भुञ्जति ।
ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ॥
सुवर्णमणिमुक्ताढ्ये जायते विपुले कुले ।
तथा,
यामुने चोत्तरे कूले प्रयागस्य तु दक्षिणे ।

ऋणप्रमोचनं नाम तीर्थं तु परमं स्मृतम् ॥
एकरात्रोषितः स्नात्वा ऋणैः सर्वैः प्रमुच्यते ।
स्वर्गलोकमवाप्नोति अनृणश्च सदा भवेत् ॥ इति ।

अथ प्रयागे काम्यकर्माणि ।

मात्स्ये,

तत्र दानं प्रदातव्यं यथाविभवविस्तरम् ।
तेन तीर्थफलं चैव वर्द्धते नात्र संशयः ॥
स्वर्गे तिष्ठति राजेन्द्र ! यावदाभूतसम्प्लवम् ।

तथा,

गङ्गायमुनयोर्मध्ये यस्तु गां सम्प्रतीच्छति ।
सुवर्णमणिमुक्ता वा यदि वान्यप्रतिग्रहम् ॥
स्वकार्य्ये पितृकार्य्ये वा देवताभ्यर्च्चनेऽपि वा ।
विफलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते ॥

तथा,

तीर्थे न प्रतिगृह्णीयात् पुण्येष्वायतनेषु च ।
निमित्तेषु च सर्वेषु ह्यप्रमत्तो भवेद्द्विजः ॥
कपिलां पाटलां वर्णाद्यस्तत्रैव प्रयच्छति ।
स्वर्णशृङ्गीं रौप्यखुरां चेलकण्ठीं पयस्विनीम् ॥
प्रयागे श्रोत्रियं साधुं ग्राहयित्वा यथाविधि ।
शुक्लाम्बरधरं शान्तं धर्मज्ञं वेदपारगम् ॥
सा गौस्तस्यैव दातव्या गङ्गायमुनसङ्गमे ।
वासांसि च महार्हाणि रत्नानि विविधानि च ॥
यावद्रोमाणि तस्या गोः सन्ति गात्रेषु सत्तम ! ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
यत्राऽसौ लभते जन्म सा गौस्तत्राभिजायते ।

न च पश्यति तं घोरं नरकं तेन कर्मणा ॥
उत्तरान् स कुरून् प्राप्य मोदते कालमक्षयम् ।
गवां शतसहस्रेभ्यो दद्यादेकां पयस्विनीम् ॥
पुत्रान्दारांस्तथा भृत्यान् गौरेका प्रतितारयेत् ।
तस्मात्सर्वेषु दानेषु गोदानं तु विशिष्यते ॥
दुर्गमे विषमे घोरे महापातकसम्भ्रमे ।
गौरेव रक्षां कुरुते तस्माद्देया द्विजोत्तमे ॥

तथा,

गङ्गायमुनयोर्मध्ये यस्तु कन्यां प्रयच्छति ।
आर्षेणैव विधानेन यथाविभवविस्तरम् ॥
न स पश्यति तं घोरं नरकं तेन कर्मणा ।
उत्तरान् स कुरून् गत्वा मोदते कालमक्षयम् ॥
पुत्रदारांश्च लभते धार्मिकान् रूपसंयुतान् ।

अथ प्रयागमरणफलम् ।

ऋग्वेदे आश्वलायनाः पठन्ति ।

सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति ।
ये वै तन्वां विसृजन्ति धीरास्ते जनासोऽमृतत्वं भजन्ते॥इति।

'सरिते' इति "टापं चापि हलन्तानाम्" इति रीत्या। छान्दसं वा । आप्लुता इत्यर्थे 'आप्लुतास' इति छान्दसम् । तद्विप्रास इतिवत् । एवमग्रेऽपि । वै, त्वर्थे । तनूमित्यर्थे 'तन्वाम्' इति छान्दसम् ।

मत्स्यपुराणे,

आप्रयागं प्रतिष्ठानाद्यत्पुरो वासुकेर्ह्रदात् ।
कम्बलाश्वतरौ नागौ नागाश्च बहुमूलकात् ॥
एतत्प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् ।

तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥

अत्र प्रजापतिक्षेत्रे यस्य मरणं भवति स मोक्षभाग्भवतीत्यर्थः ।

तथा,

मार्कण्डेय उवाच ।

शृणु राजन् ! प्रयागस्य माहात्म्यं पुनरेव तु ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
आर्त्तानां च दरिद्राणां निश्चितव्यवसायिनाम् ।
स्थानमुक्तं प्रयागं तु नाख्येयं तु कदाचन ॥
व्याधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः ।
गङ्गायमुनमासाद्य यस्तु प्राणान् परित्यजेत् ॥
दीप्तकाञ्चनवर्णाभैर्विमानैः सूर्य्यवर्चसैः ।
गन्धर्वाप्सरसां मध्ये स्वर्गे मोदति मानवः ॥
ईप्सितान् लभते कामान् वदन्ति ऋषिपुङ्गवाः ।
सर्वरत्नमयैर्दिव्यैर्नानाध्वजसमाकुलैः ॥
वराङ्गनासमाकीर्णैर्विमानैः शुभलक्षणैः ।
गीतवादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते ॥
यावन्न स्मरते जन्म तावत्स्वर्गे महीयते ।
ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ॥
हिरण्यरत्नसम्पूर्णे समृद्धे जायते कुले ।
तदेव च स्मरेत्तीर्थं स्मरणात्तत्र गच्छति ॥

तथा,

वटमूलं समासाद्य यस्तु प्राणान् परित्यजेत् ।
सर्वलोकानतिक्रम्य रुद्रलोकं स गच्छति ॥
तत्र ते द्वादशादित्यास्तपन्ते रुद्रमाश्रिताः ।

निर्दहन्ति जगत् सर्वं वटमूलं न दह्यते ॥
नष्टचन्द्रार्कपवनं यदा चैकार्णवं जगत् ।
स्वपते तत्र वै विष्णुर्यतमानः पुनः पुनः ॥

तथा,

उर्वशीपुलिने रम्ये विपुले हंसपाण्डरे ।
परित्यजति यः प्राणान् शृणु तस्यापि यत्फलम् ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
सेव्यते पितृभिः सार्द्धं स्वर्गलोके नराधिप ! ॥ इत्यादि ।

तथा,

कोटितीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ।
कोटिवर्षसहस्राणि स्वर्गलोके महीयते ॥ इत्यादि ।

तथा,

अकामो वा सकामो वा गङ्गायां यो विपद्यते ।
मृतस्तु लभते स्वर्गं नरकं च न पश्यति ॥
अप्सरोगणसङ्गीतैः सुप्तो ऽसौ प्रतिबुद्ध्यते ।
हंससारसयुक्तेन विमानेन स गच्छति ॥

तथा,

गङ्गायमुनयोर्मध्ये करीषाग्निं यस्तु धारयेत् ।
अहीनाङ्गो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः ॥
यावन्ति रोमकूपाणि तस्य गात्रेषु धीमतः ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
ततः स्वर्गात्परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् ।
स भुक्त्वा विपुलान् भोगान् तत्तीर्थं लभते पुनः ।
जलप्रवेशं यः कुर्यात् सङ्गमे लोकविश्रुते ।
राहुग्रस्ते तथा सोमे विमुक्तः सर्वपातकैः ॥

सोमलोकमवाप्नोति सोमेन सह मोदते।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च॥
स्वर्गलोकमवाप्नोति ऋषिगन्धर्वसेवितम्।
परिभ्रष्टस्तु राजेन्द्र! समृद्धे जायते कुले॥
अधःशिरास्तु यो ज्वालामूर्ध्वपादः पिबेन्नरः।
शतवर्षसहस्राणि स्वर्गलोके महीयते॥
परिभ्रष्टस्तु राजेन्द्र! अग्निहोत्री भवेन्नरः।
भुक्ता तु विपुलान् भोगान् तत्तीर्थं भजते पुनः॥
यश्च देहं विकर्त्तित्वा शकुनिभ्यः प्रयच्छति।
विहगैरुपभुक्तस्य शृणु तस्यापि यत्फलम्॥
शतं वर्षसहस्राणां सोमलोके महीयते।
तस्मादपि परिभ्रष्टो राजा भवति धार्मिकः॥
गुणवान् रूपसम्पन्नो विद्वांश्च प्रियवाचकः।
भुक्ता तु विपुलान् भोगान् तत्तीर्थं लभते पुनः॥
तथा,
शृणु राजन्! प्रयागे तु अनाशकफलं विभो!।
प्राप्नोति पुरुषो धीमान् श्रद्दधानो जितेन्द्रियः॥
अहीनाङ्गो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः।
अश्वमेधफलं तस्य गच्छतस्तु पदे पदे॥
कुलानि तारयेद्राजन् दश पूर्वान् दशापरान्।
मुच्यते सर्वपापेभ्यो गच्छेत्तु परमं पदम्॥
तथा,
पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम्।
प्रवेशात्तस्य तद्भूमावश्वमेधः पदे पदे॥
व्यतीतान् पुरुषान् सप्त भविष्यांश्च चतुर्दश।

नरस्तारयते सर्वान् यस्तु प्राणान् परित्यजेत् ॥
एवं ज्ञात्वा तु राजेन्द्र ! सदा श्रद्धापरो भव ।
अश्रद्दधानाः पुरुषाः पापोपहतचेतसः ॥
न प्राप्नुवन्ति तत्स्थानं प्रयागं देवरक्षितम् ॥ इति ।
"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥" इति श्रुत्याऽऽत्महननानिषेधात् कथमेतदिति चेत्, तत्रात्महन्शब्देनानात्मज्ञस्योक्तत्वात् । सा श्रुतिरनात्मज्ञनिन्दापरेति शाङ्करभाष्येऽभिधानात् ।

यत्तु—प्रयागमरणं विहितत्वात् स्वर्गादिकं फलम् आत्महत्या निषेधान्नरकं च जनयति श्येनवत् । यथा श्येनो हिंसात्वेन निषिद्धतया नरकं विहितत्वाच्च सुखसाधनं वैरिमरणं च जनयतीति । तन्न । "न हिंस्यात्" इत्यादेर्वैधातिरिक्तपरतयाऽग्नीषोमीयहिंसावन्नरकाहेतुत्वात् ।

जलप्रवेशं यः कुर्यात् सङ्गमे लोकविश्रुते ।
राहुग्रस्तो यथा सोमो विमुक्तः सर्वपातकैः ॥
इत्यादिवाक्यात् प्रयागमरणेनाधर्मासम्भवाच्च । श्येने तु न तथेत्याकरे स्पष्टम् ।

साङ्ख्यास्तु वैधहिंसाऽप्यधर्महेतुः । अग्नीषोमीयविधेः क्रत्वर्थत्वात् "न हिंस्यात्" इतिनिषेधस्य पुरुषार्थत्वात् नाग्नीषोमीयालम्भनविधिना "न हिंस्यात्" इत्यादेः सङ्कोचः । भिन्नविषयत्वात् । तथाच वैध हिंसा क्रतुमप्युपकरोति दोषमप्यावहतीति किमसङ्गतम् । न च "तस्माद्यज्ञे वधोऽवधः" इत्यादिवाक्यैस्तस्या अधर्मजनकत्वाभावः । यथाश्रुते "वधोऽवधः" इत्यस्यानुपपत्तेर्लक्षणयाऽधर्मजनको वधो न भवतीत्यर्थो वक्तव्यः, तथा सति

लक्षणया ऽधर्माजनकवधो नेत्यर्थोऽस्तु । न चैवं सहमरणमपि पापहेतुः स्यादिति वाच्यम् । इष्टापत्तेः ।

अन्विता पिण्डदाने तु यथा भर्तुर्दिने दिने ।
तदन्वारोहिणी यस्मात्तस्मात्सा नात्मघातिनी ॥

इति विष्णुवचनाद्वा न तथात्वम् । अत एव महाभारते नाकपृष्ठं गतानामपि विशस्तपशूनां यज्वनां पशुभिर्विशसनं स्मर्यते। एवं च हिंसात्वेनैव लाघवेनाधर्महेतुत्वं न तु वैधान्यहिंसात्वेन। गौरवात्। वैधहिंसातोऽधर्मकल्पने गौरवमपि फलमुखं न दोषायेत्याहुः।

अत्र न्यायविदः । इष्टसाधनत्ववत् बलवदनिष्टाननुबन्धित्वस्य पापाजनकत्वस्य वा विध्यर्थत्वात् अग्नीषोमीयादिविधिनैव तत्र पापाजनकत्वबोधनान्नेदं युक्तम् । न च तस्य विध्यर्थत्वे मानाभावः। तस्यातथात्वे "न कलञ्जं भक्षये[त्]"इत्यादौ निषेधानुपपत्तेः। न हि तत्रेष्टसाधनत्वस्य व्यतिरेको [ब]ोध्यते किन्तु पापाजनकत्वस्यैवेत्याहुः।

ये तु बलवदनिष्टाननुबन्धित्वादिकं न विध्यर्थ इति ब्रुवते। [त]न्मते साङ्ख्यदत्तदूषणं दुष्परिहरमिति भाति । "न कलञ्जं [भ]क्षयेत्"इत्यादौ लिङोऽनिष्टसाधनत्वे लक्षणा इति मते सा[ङ्]ख्यमतमसङ्क्षोभ्यमिति प्रतिभाति । अत एव—

दानधर्मे,

प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ।
अल्पदोषमिह ज्ञेयं विपरीते तु लिप्यते ॥ इति ।

वस्तुत इदमपि भक्षणपरम् । हिंसादोषस्तु भवत्येव। स्वयं[हिं]सित्वा भक्षणे दोषद्वयम्। हिंसाजन्यं भक्षणजन्यं च। अत्र भक्षमात्रजन्यमित्याशयात्। ननु "तस्मादुह न पुराऽऽयुषः स्वःकामी

प्रेयात्"इतिश्रुत्या प्रतिषेधात् प्रयागप्रायणमपि प्रत्यवायसाधनमिति प्रतीयते। सा हि आत्महत्यासामान्यमेव प्रतिषेधति सङ्कोचे मानाभावादिति। मैवम्।

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः।
तृतीये चोदकं कृत्वा चतुर्थे श्राद्धमिष्यते॥

इतिगार्ग्यवचनेनोक्तश्रुतेरात्महत्यासामान्यपरत्वाभावात्।

तथा ब्रह्मपुराणम्,

दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि।
प्रविशेदनलं दीप्तं कुर्यादनशनं तथा॥
अगाधतोयराशिं वा भृगोः पतनमेव वा।
गच्छेन्महापथं वापि तुषारगिरिमादरात्॥
प्रयागवटशाखाग्रात् पातनं च करोति यः।
स्वयंदेहविनाशस्य काले प्राप्ते महामतिः॥
उत्तमान् प्राप्नुयाल्लोकान् नात्मघाती भवेत् क्वचित्।
महापापक्रियः स्वर्गे दिव्यान् भोगान् समश्नुते॥
एतेषामधिकारस्तु तपसां सर्वजन्तुषु।
नराणामथ नारीणां सर्ववर्णेषु सर्वदा॥ इति।

अत्र यद्यपि 'यः करोति'इत्याद्यनुवादः तथाऽपि फलश्रवणादधिकारिनिरूपणाच्च विधिरुन्नीयते। दुश्चिकित्स्यव्याधिपीडायामपि यावत् यथाशक्ति चिकित्सया स्वधर्माचरणं सम्भवति तावत् स्थेयमेवेति प्रतिपादयति–स्वयमित्यर्द्धेन। अयं च कालविशेषः स्वबुद्ध्यैव परीक्षणीयः। 'महामतिः'इत्यनेन विचारवैराग्यादिमतैवेदं कर्तुं शक्यमित्यप्युक्तम्। यथोक्तकालविशे-

षो न महापापिनां प्रायश्चित्तरूपयथोक्तमरणेऽपेक्ष्यते इत्याशयेन। तेषामेवंविधमरणफलं पृथगाह—महापापेत्यर्द्धेन। तथा-चैवंविधमरणेऽधिकारिविशेषणं महारोगित्वमहापापित्वे। महारोगिणामुत्तमलोकप्राप्तिर्मुख्यं फलम्। महापापिनां तु पापक्षय एव। स्वर्गभोगस्त्वानुषङ्गिक इति विशेषः। ये तु जाबालश्रुतौ सन्न्यासिनां मरणप्रकाराः—"अयं विधिः परिव्राजिनां वीराध्वानेऽनाशकेऽपां प्रवेशेऽग्निप्रवेशे महाप्रस्थाने"इत्यादिनोक्ताः तेऽपि महारोगादिविषया एव। निष्कामत्वमात्रं विशेषः। यत्तु याज्ञवल्क्ये—

अनशनाग्निप्रवेशजलप्रपतनोद्यमी।

इत्यादिना सन्न्यासिनामनशनाद्युद्यमस्तामसत्वेन निन्दितः तत् ध्यानादिरूपस्वधर्मानुष्ठाने सम्भवत्यपि कृतकृत्याभिमानादिनिमित्तकदेहत्यागादिविषयमिति। 'सर्वजन्तुषु'इत्यनेन पश्वादीनां, 'सर्ववर्णेषु'इत्यनेन ब्राह्मणादीनामधिकारो दर्शितः। 'सर्वदा'इत्यनेनाश्रमनियमोऽन्यादिनियमश्च निरस्त इति। धर्मार्जनासमर्थस्यापि देहत्याग उक्तः—

यदाऽसौ नियमेऽकल्पो जरया जातवेपथुः।
आत्मन्यग्नीन् समारोप्य मच्चित्तोऽग्नीन् समाविशेत्॥

इत्यादिना। एवं रोगपापाद्यभावेऽपि धर्मार्जनसमर्थस्यापि योगप्रवृत्तस्यारिष्टादिनाऽऽसन्नमरणज्ञाने स्वयंदेहत्यागप्रकाराः शिवपुराणे वायुसंहितायामुक्ताः।

यस्त्वासन्नां मृतिं मृत्योर्दृष्ट्वाऽरिष्टं च भूरिशः।
स योगारम्भनिरतः शिवक्षेत्रं समाश्रयेत्॥
स तत्र निवसन्नेव यदि धीरमना नरः।
प्राणान् विनापि रोगाद्यैः स्वयमेव परित्यजेत्॥

कृत्वाप्यनशनं वैधं हुत्वा वाङ्गं शिवानले ।
क्षिप्त्वा वा शिवतीर्थेषु स्वदेहमवगाहनात् ॥
शिवशास्त्रोक्तविधिवत् प्राणान् यस्तु परित्यजेत् ।
सद्य एव विमुच्येत नात्र कार्य्या विचारणा ॥ इति ।

ततश्च यथाकालमरणादपि शिवक्षेत्रवासिनां मुक्तिमुक्त्वा उक्तम्-

तथापि मरणं शस्तमुशन्त्यनशनादिभिः ।
शास्त्रं विश्रम्भधीरेण मनसा क्रियते यतः ॥
एतेष्वन्यतमोपायं कथमप्यवलम्ब्य च ।
षडब्दसिद्धिं विधिवत् प्राप्तो वा म्रियते यदि ॥
पशूनामिव तस्येह न कुर्यादौर्ध्वदेहिकम् ।
नैवाशौचं प्रसज्येत तत्पुत्रादेर्विशेषतः ॥
अथैनमपि चोद्दिश्य कर्म चेत्कर्त्तुमीप्सितम् ।
कल्याणमेव कुर्वीत भक्त्या भक्तांश्च पूजयेत् ॥ इति ।

कल्याणं, तदभ्युदयमुद्दिश्य ब्राह्मणभोजनादिकम् । ननु "वृद्धः शौचस्मृतेर्लुप्तः" इत्यादिवचनेन त्र्यहाशौचबोधकेनेदं विरुध्यते इति चेत्, न । एतस्य योगाभ्यासपरत्वात् ।

नन्वेभिर्वचनैर्महारोगिणो महापापस्य धर्मार्जनाशक्तस्य जीर्णस्य चाधिकारो ब्राह्मणस्यापि गम्यते । न च तावता समर्थस्यापि ब्राह्मणस्य प्रयागमरणप्राप्तिः । अत एव दाक्षिणात्यस्मृतिरपि—

धर्मार्जनासमर्थस्य कर्त्तुः पापाङ्कितस्य च ।
ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणम् ॥ इति,

एतदतिरिक्तस्थले ब्राह्मणस्य मरणेऽनधिकारं प्रापयति । अत एवादित्यपुराणमप्यब्राह्मणस्यैव वारिप्रवेशादिकं ब्रवीति । तथा हि—

समायुक्तो भवेद्यस्तु पातकैर्महदादिभिः ।
दुश्चिकित्सैर्महारोगैः पीडितो वा भवेत्तु यः ॥
स्वयंदेहविनाशस्य प्राप्ते काले महामतिः ।
अब्राह्मणो वा स्वर्गादिमहाफलजिगीषया ॥
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा ।
अगाधतोयराशिं वा भृगोः पतनमेव च ॥

इत्यादिना । न च सर्वस्वारयज्ञावगतयजमानाग्निप्रवेशवत् प्रयागप्रायणमपि न दोषायेतिवाच्यम् । तत्र तादृशविधिनैव दोषा /भावगतेः । प्रयागमरणविधेस्तु धर्मार्जनसमर्थब्राह्मणातिरिक्तपरत्वेऽप्युपपत्तेः । तदतिरिक्तश्चासमर्थो ब्राह्मणः क्षत्रियादिर्वा । अत एव "तस्मादुह न"इत्यादिश्रुतिसङ्कोचोऽपि न भवति। अथ सा श्रुतिरवश्यं सङ्कोचनीया अन्यथा प्रयागमरणविधेस्तद्विरोधेन क्षत्रियादिपरतापि न स्यादिति । मैवम् । स्मृतेरानर्थक्यभियाऽस्तु क्षत्रियाद्यंशे सङ्कोचः । समर्थब्राह्मणांशे तत्सङ्कोचे मानाभावात् । अत एव "सर्वा औदुम्बरी वेष्टयितव्या"इतिस्मृतेरानर्थक्यभिया "औदुम्बरीं स्पृष्ट्वोद्गायति"इतिश्रुतिर्न वेष्टनांशे स्मृतेः प्रामाण्यं बाधते । किं तु 'सर्वा' इत्यंशे एवेति विरोधाधिकरणे स्पष्टमिति ।

अत्रोच्यते—

न लोकवचनाद्विप्र न वेदवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥

इत्यग्निपुराणेन वसिष्ठं सम्बोध्य ते त्वया प्रयागमरणं प्रति मतिर्नोत्क्रमणीया प्रयागमरणं बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनमिति बुद्धिर्न दूरीकरणीयेत्यभिधानात् । अत एव "तस्मादुह न"इत्यादिश्रुतिः प्रयागमरणाविषये धर्मार्जनसम-

र्थब्राह्मणांशेऽपि सङ्कोचनीया। सति श्रवणमननादिना मोक्षार्जनसामर्थ्ये स्वर्गमात्रकामनया न देहं जह्यादित्यत्रैव तस्याः श्रुतेस्तात्पर्य्यम्। एवं "भृग्वादिपतनमन्यत्र ब्राह्मणात्"इतिवाक्यस्यापि। जरारोगादिनिमित्तकभृगुपाते ब्राह्मणस्याप्यधिकारित्वात् यथाश्रुतस्यासङ्गतेः। किञ्च–

क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम्।
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः॥
ब्रह्मदण्डहता ये च ये तु वै ब्राह्मणैर्हताः।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः॥

इतिब्रह्मपुराणेन सर्ववर्णसाधारण्येनैव क्रोधादिना मरणं निषिद्धम्।

व्याधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः।

इत्यादिमत्स्यपुराणादिना तदेव प्रतिप्रसूयते। तथा चास्य साधारणतया ब्राह्मणस्याप्यधिकार इति।

अत एव स्कान्दे,

यथाकथञ्चित्तीर्थेऽस्मिन् प्राणत्यागं करोति यः।
तस्यात्मघातदोषो न प्राप्नुयादीप्सितानपि॥

इतिसामान्यत एव नात्मघातदोष इत्युक्तम्। अपिच–

न वेदवचनात्तात! न लोकवचनादपि।

इत्यादिमत्स्यपुराणमपि ब्राह्मणाऽऽत्महत्याप्रतिप्रसवरूपमिति गम्यते। यथाश्रुतवेदवचनान्नोत्क्रमणीया, ब्राह्मणस्यात्महत्यानिषेधकवाक्यानां न तत्सामान्यपरत्वं किंतु प्रयागीयातिरिक्तपरत्वमिति तदाशयः। न च "न वेदवचनात्"इत्यादि क्षत्रियादेरेव काम्यात्महत्याप्रतिषेधे प्रतिप्रसवरूपमिति वाच्यम्। क्षत्रिया-

देः काम्यात्महत्याप्रतिषेधकाभावात्। प्रत्युत विधानात्। तथाहि—

भविष्योत्तरे,

समाः सहस्राणि तु सप्त वै जले

दशैकमग्नौ पतने च षोडश।

महाहवे षष्टिरशीति गोग्रहे

अनाशके भारत! चाक्षया गतिः॥ इति।

इदं तु बोध्यम्। द्विविधं प्रारब्धं कर्म। एकमेकस्यैव जन्मनो निर्वर्त्तकम्। अन्यत्तु द्वित्रजन्मार्जनसमर्थम्। आद्यस्य प्रयागे देहपातादेव निवृत्तिः तस्य तावन्मात्रप्रयोजनकत्वात्। अन्त्यस्य तु तत्तद्भोगानुकूलजन्मार्जनशक्तिः प्रयागमरणेन प्रतिबध्यते। अतः प्रयागमरणाधीनान् विपुलान् भोगाननुभूय ततस्तत्तत्प्रारब्धफलं भुक्त्वा प्रयागे प्राप्तदेहः काले तत्र कलेवरमुन्मुच्य कैवल्यं लभते। अप्रारब्धानि तु पापानि प्रयागमरणात् प्रक्षीयन्ते।

राहुग्रस्तो यथा सोमो विमुक्तः सर्वपातकैः।

इत्यादिवाक्यात्। नन्वविशेषेण सर्वपापक्षये कथं प्रयागमरणाधीनस्वर्गभोगभूमिदेहसम्भवोऽपि। तस्य पुण्यपापोभयसाध्यत्वात्। स्वर्गेऽपि किञ्चिद्दुःखानुभवात्।

स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः।

इतिस्मरणात्। कथं वा तादृशस्वर्गानुभवोत्तरं प्रयागे पुनर्विग्रहपरिग्रहः गर्भवासवेदनानिदानदुरितोपशमादिति। मैवम्। प्रारब्धवदप्रारब्धस्यापि कस्यचिद्दुरितस्य प्रयागमरणाविनाश्यतायाः फलबलेन कल्पनात्। मोक्षार्थप्रयागमरणे तु तत्त्वज्ञानद्वारा सर्वपापक्षय एवेति विशेष इति।

अत्र च कृतोपवासः पारणादिने नित्यं कृत्वा ओम-

घेत्यादि मोक्षकामो गङ्गायमुनासङ्गमे प्राणत्यागमहं करिष्ये इति सङ्कल्प्य तत्र प्रविशेत्। फलान्तरकामनायां तु मोक्षस्थाने तत्पदं निवेशयेदिति। अत्रापि यथाशक्ति सर्वप्रायश्चित्तं, श्राद्धाधिकार्यभावे जीवच्छ्राद्धं सपिण्डनान्तं कारयन्ति। एवंविधमरणे च ज्ञातीनां त्रिरात्रमशौचम्। "अनशनमृतानामशनिहतानामग्निजलप्रविष्टानां भृगुसङ्ग्रामदेशान्तरमृतानां त्रिरात्रम्" इतिकश्यपवचनात्। न तु "वृद्धः शौचस्मृतेर्लुप्तः" इत्यादिवचनात् तस्य रोगिवृद्धमात्रपरत्वात् इति।

सामान्यतस्तीर्थे मरणफलमुक्तम्—

कौर्मे,

यः सर्वपापयुक्तोऽपि पुण्यतीर्थेषु मानवः।
नियमेन त्यजेत्प्राणान् मुच्यते सर्वपातकैः॥ इति।

नियमेन, पूर्वदिनकृतभोजननियमेनेत्येके। तत्तत्फलसङ्कल्पेनेत्यन्ये। नियमेनेत्यनेन क्रोधादिव्यावृत्तिरित्यपरे। ब्राह्मणेन कलौ जलादिप्रवेशो न कार्यः।

दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः।
देवरेण सुतोत्पत्तिर्दत्ता कन्या प्रदीयते॥
कन्यानामसवर्णानां विवाहस्तु द्विजातिभिः।
आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम्॥
वानप्रस्थाश्रमस्याऽपि प्रवेशो विधिचोदितः।
वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा॥
प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम्।
संसर्गदोषः पापेषु मधुपर्के पशोर्वधः।
दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः॥
शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम्।

भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ॥
ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च ।
भृग्वग्निमरणं चैव वृद्धादिमरणं तथा ॥
इत्यादीन्यभिधाय,
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्त्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ॥
इतिहेमाद्रिपराशरभाष्यधृतादित्यपुराणादिति स्मार्त्ताः ।

इति प्रयागमाहात्म्यं समाप्तम् ।

अथ दक्षिणप्रयागमाहात्म्यम् ।

तच्च गौडदेशे सप्तग्रामे मोक्षवेणीतिप्रसिद्धम् ।
गङ्गावाक्यावल्याम्,
प्रद्युम्नतीर्थं तपसा यत्र तेन स्मरो हरेः ।
प्रद्युम्ननाम्ना पुत्रोऽभूत् स्थाने तत्र महोदयः ॥
तद्दक्षिणप्रयागं तु गङ्गातो यमुनाऽऽगता ।
स्नानात्तत्राक्षयं पुण्यं प्रयाग इव लभ्यते ॥ इति ।
अक्षयपुण्यप्राप्तिः फलम् ।

अथ प्रसङ्गाद्गङ्गासागरसङ्गममाहात्म्यम् ।

भारते,
गङ्गायास्त्वथ राजेन्द्र ! सागरस्य च सङ्गमे ।
अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥ इति ।
अद्याश्वमेधयज्ञजन्यफलदशगुणफलप्राप्तिकामो गङ्गासागरसङ्गमे स्नानमहं करिष्ये इति प्रयोगः । स्नानमन्त्रस्तु—
पद्मपुराणे,
त्वं देव ! सरितां नाथ ! त्वं देवि ! सरितां वरे ! ।
उभयोः सङ्गमे स्नात्वा मुञ्चामि दुरितानि वै ॥ इति ।

गङ्गावाक्यावल्याम्,

अन्तरिक्षे क्षितौ तोये पापीयानपि यो मृतः ।
हरिब्रह्मशिवैः पूज्यमक्षय्यं पदमश्नुते ॥

अद्य सर्वपापक्षयपूर्वकहरिब्रह्मशिवपूज्याक्षय्यपदप्राप्तिकामो गङ्गासागरसङ्गमे तोये प्राणत्यागमहं करिष्ये इति प्रयोगः ।

एवं क्षितावन्तरिक्षे च यथायथं प्रयोज्यम् । मुक्तिप्राप्तिकाम इति वा ।

गङ्गायां च जले मोक्षो वाराणस्यां जले स्थले ।
जले स्थले चान्तरिक्षे गङ्गासागरसङ्गमे ॥ इतिवचनात् ।

स्कान्दे,

सर्वतीर्थेषु यत्पुण्यं सर्वदानेन यद्भवेत् ।
पूजायाः सर्वदेवानां तपसां यज्ञकर्मणाम् ॥
सर्वपुण्याश्रमाणां च यत्पुण्यं सम्प्रजायते ।
दर्शनात्स्पर्शनात् पानात् स्नानाच्चैवावगाहनात् ॥
लभते पुरुषः सर्वं स्नात्वा सागरसङ्गमे ।

अद्य सर्वतीर्थसर्वदेवपूजासर्वतपःसर्वयज्ञसर्वपुण्याश्रमजन्यपुण्यसमपुण्यप्राप्तिकामो गङ्गासागरसङ्गमे स्नानमहं करिष्ये इति प्रयोज्यम् । दर्शनस्पर्शनपानानामन्यतमकरणेऽप्येतदेव फलम् ।

अथ गङ्गासागरसङ्गमे कपिलदर्शनफलम् ।

स्नात्वा तु सागरे मर्त्यः पवित्रे कापिलं हरिम् ।
पश्येद्देवीं च वाराहीं स याति त्रिदशालयम् ॥ इति ।

ब्राह्मे,

यो यत्प्रार्थयते कामं पुरुषः काममोहितः ।
मरणाल्लभते सर्वं गङ्गासागरसङ्गमे ॥

अद्यामुकप्राप्तिकामो गङ्गासागरसङ्गमे मरणमहं करिष्ये इति प्रयोगः ।

स्कान्दे शिववाक्यम् ।

मुक्तिक्षेत्रेषु सर्वेषु काम्यमृत्युर्विधीयते ।
सर्वत्र लभते कामं मरणान्नास्ति संशयः ॥ इति ।

अथ गङ्गासरयूसङ्गममाहात्म्यम् ।

गङ्गावाक्यावल्याम्,

वेणीवाद्यं ततस्तीर्थं सरयूर्यत्र गङ्गया ।
सुपुण्यया महापुण्या स्वसा स्वस्रैव सङ्गता ॥
हरेर्दक्षिणपादाब्जक्षालनात्त्वमरापगा ।
वामपादोद्भवां विद्धि सरयूं मानसोद्भवाम् ॥
तीर्थे तत्रार्चयन् रुद्रं विष्णुर्विष्णुत्वमाप्तवान् ।
पञ्चाश्वमेधफलदं स्नानं तस्मिन्नघापहम् ॥ इति ।

वेणीवाद्यं दर्दरीतिप्रसिद्धम् । अद्य पञ्चाश्वमेधयज्ञजन्यफलसमफलप्राप्तिकामो गङ्गासरयूसङ्गमे स्नानमहं करिष्ये इति प्रयोगः ।

अथ गङ्गागण्डकीसङ्गममाहात्म्यम् ।

गङ्गावाक्यावल्याम्,

ततस्तु गण्डकीतीर्थं गण्डकी यत्र सङ्गता ।
गोसहस्रस्य दानं च तत्र स्नानेन संमितम् ॥

अद्य गोसहस्रप्रदानजन्यफलसमफलप्राप्तिकामो गङ्गागण्डकीसङ्गमे स्नानमहं करिष्ये इति ।

अथ गङ्गाकौशिकीसङ्गममाहात्म्यम् ।

गङ्गावाक्यावल्याम्,

विश्वामित्रस्य भगिनी गङ्गया यत्र सङ्गता ।
तत्राप्लुत्य च विद्यादिः समन्तः स्यात् प्रियातिथिः ॥

अद्य त्रित्तादिसमन्तप्रियातिथित्वकामो गङ्गाकौशिकीसङ्गमे स्नानमहं करिष्ये इति ।

अथ गङ्गासरस्वतीसङ्गममाहात्म्यम् ।

महाभारते पुलस्त्यतीर्थयात्रायाम्,

गङ्गायाश्च नरश्रेष्ठ ! सरस्वत्याश्च सङ्गमे ।
स्नातोऽश्वमेधं प्राप्नोति स्वर्गलोकं च गच्छति ॥ इति ।

अथ गङ्गागोमतीसङ्गमफलम् ।

भारते,

गोमतीगङ्गयोश्चैव सङ्गमे लोकविश्रुते ।
अग्निष्टोममवाप्नोति कुलं चापि समुद्धरेत् ॥ इति ।

यां मौलौ निदधे सुधांशुतिलको मल्लीमतल्लीमिव
स्नानध्याननिजाभिधानविधिभिर्या कल्मषं लुम्पति ।
वीचीभिर्विदधाति या सुरपुरीसोपानपालीमिव
क्षेमाय त्रिजगज्जनैकजननी सा जाह्नवी वर्ण्यते ॥

निःशेषसन्तापनिवृत्तिबीजं
विगाह्य गाढं मनुजा यदम्भः ।
अपास्य पाप्मानमतिप्रमाणं
माघे मघोनः पुरमुत्पतन्ति ॥

या दुष्कृतं दर्शनतो धुनीते
जगत्पुनीते च निजैः पृषद्भिः ।
मुकुन्दपादाब्जमरन्दधारा
हारानुकारा हृदयेऽस्तु सा नः ॥

विभोर्मुकुटचारिणी दुरितराशिसंहारिणी

दिगन्तरविहारिणी प्रणतलोकनिस्तारिणी ।
सुरप्रणयिनीस्तनस्खलितचन्दनोद्भासिनी
चिरं त्रिपथगामिनी पतितपावनी पातु नः ॥

अथ गङ्गामाहात्म्यम् ।

**तत्र महाभारते दानधर्मे,**

शिलवृत्तिरुवाच ।

के देशाः के जनपदाः के ग्रामाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तदुच्यताम् ॥

सिद्ध उवाच ।

ते देशास्ते जनपदास्ते ग्रामास्ते च पर्वताः ।
येषां भागीरथी गङ्गा मध्येनैति सरिद्वरा ॥
तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः ।
गतिं तां लभते जन्तुर्गङ्गां संसेव्य यां लभेत् ॥
स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनाम् ।
न्यस्तानि न पुनस्तेषां त्यागः स्वर्गाद्विधीयते ॥
सर्वाणि येषां गाङ्गेयैस्तोयैः कर्माणि देहिनाम् ।
गां त्यक्त्वा मानवा विप्र ! दिवि तिष्ठन्ति ते जनाः ॥
पूर्वे वयसि पापानि कृत्वा कर्माणि ये नराः ।
पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम् ॥
स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम् ।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥
यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
अपहृत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथाऽपहृत्य पाप्मानं भाति गङ्गाजलोक्षितः

विसोमा इव शर्वर्यो विपुष्पास्तरवो यथा ।
तद्वद्देशा दिशश्चैव हीना गङ्गाजलैः शिवैः ॥
वर्णाश्रमा यथा सर्वे धर्मज्ञानविवर्जिताः ।
क्रतवश्च यथाऽसोमास्तथा गङ्गां विना जगत् ॥
यथा हीनं नभोऽर्केण भूः शैलैः खं च वायुना ।
तथा देशा दिशश्चैव गङ्गाहीना न संशयः ॥
त्रिषु लोकेषु ये केचित्प्राणिनः सर्व एव ते ।
तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः ॥
यस्तु सूर्येण निष्टप्तं गाङ्गेयं पिबते जलम् ।
गवां निर्हारनिर्मुक्तायावकात्तद्विशिष्यते ॥
इन्दुव्रतसहस्रं तु यश्चरेत् कायशोधनम् ।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ ॥
तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।
मासमेकं तु गङ्गायां समौ स्यातां न वा समौ ॥
लम्बेनावाक्शिरा यस्तु युगानामयुतं पुमान् ।
तिष्ठेद्यथेच्छं यश्चापि गङ्गायां स विशिष्यते ॥
अग्नौ प्राप्तं विधूयेत यथा तूलं द्विजोत्तमाः ! ।
तथा गङ्गावगाढस्य सर्वपापं प्रधूयते ॥
भूतानामिह सर्वेषां दुःखोपहितचेतसाम् ।
गतिमन्वेषमाणानां न गङ्गासदृशी गतिः ॥
भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनात्तद्वत् सर्वपापैः प्रमुच्यते ॥
अप्रतिष्ठाश्च ये के चिदशर्मशरणाश्च ये ।
तेषां प्रतिष्ठा गङ्गेह शरणं शर्मवर्म च ॥
प्रकृष्टैरशुभैर्ग्रस्तानानेकैः पुरुषाधमान् ।

पततो नरके गङ्गा संश्रितान् प्रेत्य तारयेत् ॥
तेऽसंविभक्ता मुनिभिर्नूनं देवैः सवासवैः ।
येऽभिगच्छन्ति सततं गङ्गामभिमतां सुरैः ॥
विनयाचारहीनाश्च अशिवाश्च नराधमाः ।
ते भवन्ति शिवा विप्रा ये वै गङ्गामुपाश्रिताः ॥
यथा सुराणाममृतं पितॄणां च यथा सुधा ।
सुधा यथा च नागानां तथा गङ्गाजलं नृणाम् ॥
उपासते यथा बाला मातरं क्षुधयार्दिताः ।
श्रेयस्कामास्तथा गङ्गामुपासन्तीह देहिनः ॥
स्वायम्भुवं यथा स्थानं सर्वेषां श्रेष्ठमुच्यते ।
सर्वासां सरितां श्रेष्ठा गङ्गा तद्वदिहोच्यते ॥
यथोपजीविनां धेनुर्देवादीनां धरा स्मृता ।
तथोपजीविनां गङ्गा सर्वप्राणभृतामिह ॥
देवाः सोमार्कसंस्थानि यथा सत्रादिभिर्मखैः ।
अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः ॥
जाह्नवीपुलिनोत्थाभिः सिकताभिः समुक्षितः ।
आत्मानं मन्यते लोको दिविष्ठमिव शोभितम् ॥
जाह्नवीतीरसम्भूतं मृदं मूर्ध्ना बिभर्त्ति यः ।
बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥
गङ्गोर्मिभिरथो दिग्धं पुरुषं पवनो यदा ।
स्पृशते सोऽस्य पापानि सद्य एवापकर्षति ॥
व्यसनैरभितप्तस्य नरस्य विनशिष्यतः ।
गङ्गादर्शनजा प्रीतिर्व्यसनान्यपकर्षति ॥ इति ।

अथ गङ्गाक्षेत्रादिनिर्णयः ।

तत्र ब्रह्मपुराणे,

प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥
अत्र न प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि ।
ब्रह्माण्डेऽपि 'कदाचन'इत्यन्तमभिधाय—
अत्र दत्तं हुतं जप्तं कोटिकोटिगुणं भवेत् । इत्युक्तम् ।
दानधर्मे,
भाद्रकृष्णचतुर्दश्यां यावदाक्रमते जलम् ।
तावद्गर्भं विजानीयात्तदन्यत्तीरमुच्यते ॥
गङ्गावाक्यावल्यां ब्रह्माण्डे,
सार्द्धहस्तशतं यावद्गर्भतस्तीरमुच्यते ।
अत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि ॥
तीराद्गव्यूतिमात्रं तु परितः क्षेत्रमुच्यते ।
अत्र दानं तपो होमो गङ्गायां नात्र संशयः ॥
अत्रस्थास्तु दिवं यान्ति ये मृतास्तेऽपुनर्भवाः । इति ।
उभयत्र तटे प्रत्येकं क्रोशद्वयं क्षेत्रम् । तदुक्तम्—
भविष्ये,
गङ्गासीमां न लङ्घन्ते सर्वपापान्यशेषतः ।
दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः ॥
एकयोजनविस्तीर्णा क्षेत्रसीमा तटद्वयात् । इति ।
मत्स्यपुराणे "तीर्थे न प्रतिगृह्णीयात्" इत्याद्युक्तम् ।
तथा तत्रैव,
गङ्गाविक्रयणाद्राजन् विष्णोर्विक्रयणं भवेत् ।
जनार्दने तु विक्रीते विक्रीतं भुवनत्रयम् ॥

अत्र हस्तचतुष्टयाभ्यन्तरे प्रतिग्रहनिषेधः सर्वत्रैव । सार्ध-हस्तशताभ्यन्तरे तु तन्निषेधः प्रशस्तनदीषु । क्षेत्रे प्रतिग्रहनिषे-

यस्तु गङ्गायामेव । तत्रैव क्षेत्रकथनादिति ।

अथ गङ्गास्मरणफलम् ।

भविष्ये,

भवनानि विचित्राणि विचित्राभरणाः स्त्रियः ।
आरोग्यं वित्तसम्पत्तिर्गङ्गास्मरणजं फलम् ॥ इति ।

अथ कीर्त्तनम् ।

महाभारते,

दर्शनात्स्पर्शनात्पानात्तथा गङ्गेतिकीर्त्तनात् ।
स्मरणादेव गङ्गायाः सद्यः पापात्प्रमुच्यते ॥ इति ।

अथ गङ्गागमनफलम् ।

ब्राह्मे,

स्नानं तु भक्त्या गङ्गायां कर्तुकामस्य गच्छतः ।
पदेपदेऽश्वमेधस्य फलं मर्त्यस्य जायते ॥ इति ।

अथ वासफलम् ।

नारदीये,

किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः ।
वास एव हि गङ्गायां ब्रह्मज्ञानस्य कारणम् ॥ इति ।

अथ मासवासफलम् ।

तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।
मासमात्रं तु गङ्गायां समौ स्यातां न वा समौ ॥ इति ।

अथ आदेहपतनं गङ्गोपासनफलम् ।

न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः ।
आदेहपतनाद्गङ्गामुपास्ते यः पुमानिह ॥ इति ।

अथ नमस्कारफलम् ।

प्रणमेत्प्रातरुत्थाय गङ्गां पुण्यजलां शुभाम् ।

यस्तु धर्मार्थकामानां तथा मोक्षस्य भाजनम् ॥ इति ।

अथ गङ्गामृत्तिकाधारणफलम् ।

भारते,

जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना बिभर्त्ति यः ।
बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥ इति ।

अथ गङ्गास्पर्शफलम् ।

ब्रह्माण्डे,

अभक्त्यापि महापापी गङ्गां स्पृष्ट्वा शुभो भवेत् ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥ इति ।

अथ गङ्गाजलमाहात्म्यम् ।

यमः,

क्षेत्रस्थमुद्धृतं वापि शीतमुष्णमथापि वा ।
गाङ्गेयं हरते तोयं पापमामरणान्तिकम् ॥
वर्ज्यं पर्युषितं तोयं वर्ज्यं पर्युषितं दलम् ।
अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम् ॥ इति ।

अथ गङ्गाभक्तिफलम् ।

ब्राह्मे,

स मातृपितृदाराणां कुलकोटिं निरन्तरम् ।
गङ्गाभक्तस्तारयते संसारार्णवतो ध्रुवम् ॥
सन्तोषः परमैश्वर्यं तत्त्वज्ञानं सुखात्मता ।
विनयाचारसम्पत्तिर्गङ्गाभक्तस्य जायते ॥ इति ।

अथ गङ्गोदकपानफलम् ।

भविष्ये,

चान्द्रायणसहस्राणां यत्फलं परिकीर्तितम् ।
ततः शतगुणं पुण्यं गङ्गागण्डूषतो भवेत् ॥

अथ स्नानम् ।

भारते,

स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम् ।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥

प्रयतात्मा, इन्द्रियविजयी । व्युष्टिः, पुण्योपचयः ।

भविष्ये,

कपिलाकोटिदानाद्धि गङ्गास्नानं विशिष्यते । इति ।

अथ तिथिस्नानम् ।

मात्स्ये,

आकामावैष्वनन्तकम् । इति ।

आषाढी-कार्त्तिकी-माघी-वैशाखीषु पूर्णिमासु अनन्त-पुण्यप्राप्तिः फलमित्यर्थः ।

अथ माघसप्तमी ।

अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा ॥ इति ।

अथ युगाद्यादिस्नानम् ।

भविष्ये,

संवत्सरफलं तस्य नवम्यां कार्त्तिके तथा ।
मन्वादौ च युगादौ च मासत्रयफलं लभेत् ॥ इति ।

अथ दिनक्षयस्नानम् ।

स्कान्दभविष्ययोः,

अमावास्यां शतगुणं सहस्रं तु दिनक्षये । इति ।

अथ नक्षत्रस्नानम् ।

ब्रह्माण्डे,

सङ्क्रान्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्य्ययोः ।

पुष्ये स्नात्वा तु गङ्गायां कुलकोटीः समुद्धरेत् ॥ इति ।

अथ योगस्नानम् ।

गारुडभाविष्ययोः,

पुष्ये वा जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।
अमावास्यां नदीस्नानं हरत्याजन्मदुष्कृतम् ॥ इति ।

अथ तिथिवारयोगस्नानम् ।

स्कान्दे,

शनैश्चरस्य वारेण वारेणाङ्गारकस्य च ।
कृष्णाष्टमीचतुर्दश्योः पुण्यां गतिमवाप्नुयात् ॥

तथा,

सोमवारे त्वमावास्या आदित्याहे च सप्तमी ।
चतुर्थी भौमवारे च अष्टमी च बृहस्पतौ ॥
अत्र यत् क्रियते पापमथवा धर्मसञ्चयः ।
षष्टिवर्षसहस्राणि प्रतिजन्म तदक्षयम् ॥

तथा,

सिनीवाली कुहूश्चैव यदि सोमदिने भवेत् ।
गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम् ॥ इति ।

अथ दशहरास्नानम् ।

गाङ्गेयग्रन्थे,

ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां
हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोके ।
पापान्यस्यां हरति हि तिथौ सा दशेत्याहुरार्याः
पुण्यं दद्यादपि दशगुणं वाजिमेधायुतस्य ॥ इति ।

अथ वारुणीस्नानम् ।

स्मृतौ,

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ॥ इति ।

अथ सङ्क्रान्तिस्नानम् ।

मात्स्ये,
अयने कोटिगुणितं लक्षं विष्णुपदीषु च ।
षडशीतिसहस्रं तु षडशीत्यामुदाहृतम् ॥
शतमिन्दुक्षये पुण्यं सहस्रं तु दिनक्षये । इति ।

अथ महाज्यैष्ठीस्नानम् ।

भविष्ये,
महाज्यैष्ठी सुरश्रेष्ठ कृतानन्तफलं स्मृता ।
तस्यां तु जाह्नवीस्नानं सूर्य्यग्रहशताधिकम् ॥

अथ शिवसन्निहितगङ्गास्नानम् ।

भविष्ये,
अनन्तं शिवसन्निधौ । इति ।

अथ ग्रहणस्नानम् ।

गारुडे,
चन्द्रसूर्य्यग्रहे चैव योऽवगाहेत जाह्नवीम् ।
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम् ॥
ब्राह्मे,
इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं तथा ।
गङ्गातीरे तु सम्प्राप्ते इन्दोः कोटी रवेर्दश ॥
गारुडे,
सूर्य्यग्रहः सूर्य्यवारे सोमे चन्द्रग्रहस्तथा ।
चूडामणिरयं योगस्तत्रानन्तफलं लभेत् ॥
अन्यस्माद्ग्रहणात्कोटिगुणमत्र फलं लभेत् । इति ।

अथ मासस्नानम् ।

नैरन्तर्येण गङ्गायां मासं यः स्नाति मानवः ।
स शक्रलोके सुचिरं कालं स्थित्वा सगोत्रजैः ॥
ततो ब्रह्मपदे तिष्ठेत्कल्पकोटिशतायुतम् । इति ।

अथ वैशाखस्नानम् ।

वैष्णवामृते व्यासः,
गवामर्द्धप्रसूतानां लक्षं दत्त्वा तु यत्फलम् ।
तत्फलं लभते वीर मेषे स्नात्वा तु जाह्नवीम् ॥ इति ।

अथ तर्पणम् ।

भविष्ये,
पतितादीनभिधाय ।
ये नरा दुःखिताः सम्यक्सर्वे ते सकुशैस्तिलैः ।
तर्पिता जाह्नवीतोये नरेण विधिना सकृत् ॥
तेऽपि मोक्षं प्रपद्यन्ते यथा ब्रह्माऽब्रवीद्वचः । इति ।

अथ पूजा ।

भविष्ये,
चतुर्भुजां त्रिनेत्रां च सर्वावयवशोभिताम् ।
रत्नकुम्भसिताम्भोजवरदाभयसत्कराम् ॥
श्वेतवस्त्रपरीधानां मुक्तामणिविभूषिताम् ।
ततो ध्यायेत्सुरूपां च चन्द्रायुतसमप्रभाम् ॥
चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम् ।
सुप्रसन्नां सुवदनां करुणार्द्रनिजान्तराम् ॥
सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम् ।
त्रैलोक्यनमितां गङ्गां देवादिभिरभिष्टुताम् ॥
दिव्यरूपविभूषां च दिव्यमाल्यानुलेपनाम् ।

ध्यात्वा जले यथा प्रोक्तां तथार्चायां तु पूजयेत् ॥
तथा काम्यांनवाप्नोति काम्याराधनतोऽपि च।
मासार्द्धमपि यस्त्वेवं नैरन्तर्य्येण पूजयेत् ॥
स एव पुरुषश्रेष्ठो नैरन्तर्य्यं हि दुष्करम्।
एवं च बहुकालं यो नैरन्तर्य्येण पूजयेत् ॥
तस्य पुण्यफलं वक्तुं वागीशोऽपि न हि क्षमः।

बहुत्वं च पूर्वोक्तमासार्द्धाद्यपेक्षया। तेन त्रिपक्षादिकं लभ्यते। 'ओं गङ्गायै विश्वमुख्यायै शिवामृतायै शान्तिप्रदायिन्यै नारायण्यै नमो नमः' इति पूजामन्त्रः।

अथ गङ्गातीरे शिवलिङ्गपूजा।

गङ्गातीरे सदा लिङ्गं बिल्वपत्रैश्च ये नराः।
पूजयिष्यन्ति सम्प्रीतास्तेऽपवर्गस्य भाजनम् ॥ इति।

अथ दानम्।

ब्रह्माण्डे,
यज्ञो दानं तपो जप्य श्राद्धं च सुरपूजनम्।
गङ्गायां च कृतं सर्वं कोटिकोटिगुणं भवेत् ॥ इति।

अथ गङ्गायां भूमिदानम्।

निवर्त्तनद्वयं भूमेर्गङ्गातीरे विशेषतः।
विप्राय वेदविदुषे तिथौ तस्यां विशेषतः ॥
नरो ददाति भक्त्या वै तस्य पुण्यफलं शृणु।
तद्भूमिपरमाणूनां सङ्ख्ययाऽयुतसङ्ख्यया ॥
सोमेन्द्रब्रह्मलोकेषु विष्णुलोके तथैव च।
नरलोके तथा श्रीमान् भोगान् भुङ्क्ते तथाविधान् ॥
जायते रूपसम्पन्नः सर्वलोकसुपूजितः।
सर्वसम्पत्समृद्धः स्यात् सप्तद्वीपपतिर्भवेत् ॥

भेरीशङ्खादिनिर्घोषैर्गीतवादित्रनिस्वनैः ।
स्तुतिभिर्मागधानां च सुप्तोऽसौ प्रतिबुद्ध्यते ॥
सर्वसौख्यान्यवाप्यात्र सर्वधर्मपरायणः ।
नरकस्थान् पितॄन् सर्वान् प्रापयित्वा दिवं तथा ॥
स्वर्गस्थितान् पितॄन् सर्वान् मोक्षयित्वा महाद्युतिः ।
अन्ते ज्ञानासिना छित्वा अविद्यां पञ्चपर्विकाम् ॥
परात्मज्ञानमापन्नः परं ब्रह्माऽधिगच्छति । इति ।
अयुतसङ्ख्ययेति, एतावत्कल्पानीति बोध्यम्।पूर्वोक्तानुषङ्गात् ।
शैवे,
गोचर्ममात्रां पृथिवीं गङ्गातीरे ददाति यः ।
अक्षयायां तृतीयायां सोऽत्र क्षितिपतिर्भवेत् ॥
आदित्यपुराणे,
गवां शतं वृषस्यैको यत्र तिष्ठत्ययन्त्रितः ।
तद्धि गोचर्ममात्रं तु प्राहुर्वेदविदो जनाः ॥
नन्दिपुराणे,
एकोऽश्नीयाद्यदुत्पन्नं नरः संवत्सरं फलम् ।
गोचर्ममात्रा सा क्षोणी स्तोका वा यदि वा बहुः ॥
भविष्ये,
ग्रामं गङ्गातटे योऽसौ विप्रेभ्यः सम्प्रयच्छति ।
ब्रह्माविष्णुशिवेभ्यश्च दुर्गायै भास्कराय च ॥
सर्वदानेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।
सर्वतीर्थेषु यत्पुण्यं सर्वव्रततपःसु च ॥
सहस्रगुणितं तत्र फलं स्याद्ग्रामदानतः ।
सूर्य्यकोटिप्रतीकाशैर्दिव्यस्त्रीकोटिसंयुतैः ॥
दिव्यरत्नमयैश्चित्रैर्विमानैर्वैष्णवे पुरे ।

क्रीडते सर्वसम्पन्नः शाङ्करे च पुरे तथा ॥
स्वकीयपितृभिः सार्द्धं क्रीडते कालमक्षयम्।
यावत्तद्ग्रामभूमेर्वै परमाणोः सुसङ्ख्यया ॥
भोगान् भुक्त्वा ततो लोके जायते योगिनां कुले।
अणिमादिगुणैर्युक्तः स्वयंभोगो भवत्यपि ॥
देहान्ते निर्मले नित्ये परे ब्रह्मणि लीयते। इति।

अथ गङ्गायां श्राद्धम्।

भविष्ये,
गयाश्राद्धं कृतं तेन उत्सृष्टश्च तथा वृषः।
येन तद्वीचिसंसिक्ततीरे श्राद्धमकारि च ॥
बृहद्वसिष्ठः,
गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके।
नर्मदायां गयातीर्थे सर्वमानन्त्यमश्नुते ॥ इति।

अथ पिण्डदानम्।

गङ्गायां च गयायां च पिण्डदानफलं समम्।
विशेषतः कलियुगे गङ्गापिण्डः प्रशस्यते ॥
भविष्ये,
ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्चपातकी।
सर्वतो निष्कृतिं याति गङ्गास्नानान्न संशयः ॥

इत्यादिवचनात् गङ्गायां सर्वपापक्षये न सन्देहः। अधिकारी चात्र श्रद्धाविशेषवान्। एवं विष्णुनामग्रहणादपीति तत्त्वम्। अन्यान् प्रति गुरुप्रायश्चित्तविधानमिति। अत एव–
स्कान्दभविष्ययोः,
स्नानमात्रेण गङ्गायां पापं ब्रह्मवधादिकम्।

दुराधर्षं कथं याति चिन्तयेद्यो वदेदपि ॥
तस्याहं प्रवदे पापं कोटिब्रह्मवधोद्भवम् ।
स्तुतिवादमिदं मत्वा कुम्भीपाकेषु मज्जति ॥
आकल्पं नरकं भुक्त्वा ततो जायेत गर्दभः ।

व्याससंहितायां विष्णुवाक्यैरपि श्रद्धायास्तत्राधिकारत्वावगतेः । श्रद्धा च फलावश्यम्भावनिश्चयः ।

अथ गङ्गातीरनिवास्यर्चनम् ।

गङ्गामज्जनशीलस्य गङ्गातीरनिवासिनः ।
अर्चां कृत्वा यथान्यायमश्वमेधफलं लभेत् ॥ इति ।

अथ निषिद्धानि ।

ब्रह्माण्डे,

गङ्गां पुण्यजलां प्राप्य त्रयोदश विवर्जयेत् ।
शौचमाचमनं चैव निर्माल्यं मलघर्षणम् ॥
गात्रसंवाहनं क्रीडां प्रतिग्रहमथारतिम् ।
अन्यतीर्थरतिं चैव अन्यतीर्थप्रशंसनम् ॥
वस्त्रत्यागमथाघातं सन्तारं च विशेषतः ।

स्कान्दे,

नाभ्यङ्गितः प्रविशेच्च गङ्गायां न मलार्दितः ।
न जल्पन्न मृषा वीक्षन्न वदन्ननृतं नरः ॥

मृषा, इतस्ततः ।

ब्राह्मे,

स्नायीत तैलवान् प्राज्ञस्तटभूमिमुपेयिवान् । इति ।

अथ मृत्युप्रकरणम् ।

स्कान्दे,

गङ्गायां मरणान्मुक्तिर्नात्र कार्य्या विचारणा ।

परब्रह्मस्वरूपिण्यामित्याह जगतां प्रभुः ॥
गङ्गायां त्यजतः प्राणान् कथयामि वरानने ! ॥
कर्णे तव परमं ब्रह्म ददामि मामकं पदम् । इति ।
अत्र च—
ब्रह्मविष्ण्वादिदेवानां लोकानाप्नोति मानवः ।
ज्ञाने तु भक्त्या गङ्गायां मरणान्मोक्षमाप्नुयात् ॥
इतिभाविष्यवचनाज्ज्ञानादेव गङ्गायां मोक्ष इति वदन्ति । वस्तुतः
ज्ञानतोऽज्ञानतो वापि कामतोऽकामतो ऽपि वा ।
गङ्गायां च मृतो मर्त्यः स्वर्गं मोक्षं च विन्दति ॥

इति ब्रह्मपुराणादज्ञानतोऽपि मोक्षः । न च ज्ञानतो मोक्षम् अज्ञानतः स्वर्गम् इत्यन्वयः । वाकारासङ्गतेः । नन्वेवं ब्रह्मलोकादिप्राप्तिः फलं श्रूयते तदसङ्गतं स्यादितिचेत्, न । तत्कामनायां तत्सम्भवात् । तत्तत्फलानां तत्तत्कामनाधीनत्वात् । न चैवं "ज्ञाने तु भक्त्या गङ्गायाम्" इत्यस्य ज्ञान एव मोक्षबोधकत्वादसङ्गतमिदमितिवाच्यम् । भक्तिज्ञानसत्त्वेऽव्यवधान एव कैवल्यम् अन्यथा तु स्वर्गादिभोगोत्तरमित्याशयात् ।

### अथ गङ्गायामस्थिस्थितिफलम् ।

कौर्मे,
यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य वै ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
तथा,
दशाहाभ्यन्तरे यस्य गङ्गायामस्थि मज्जति ।
गङ्गायां मरणे यादृक् तादृक्फलमवाप्नुयात् ॥
अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमेऽब्दे न कुर्वीत कृतेऽपि हि सपिण्डने ॥

इत्येतस्य समूलत्वे दशाहातिरिक्तपरत्वम् ।

अस्तङ्गते गुरौ शुक्रे तथा मासे मलिम्लुचे ।
गङ्गायामस्थिनिक्षेपं न कुर्यादिति गौतमः॥ इत्यपि पठन्ति ।
अस्थीनि मातापितृवंशजानि नयन्ति गङ्गामपि ये कदाचित् ।
सद्बान्धवस्यापि दयाभिभूतास्तेषां च तीर्थानि फलप्रदानि॥
मातुः कुलं पितृकुलं वर्जयित्वा नराधमः ।
अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणं चरेत् ॥

इति तु धनलोभविषयमिति वदन्ति ।

## अथास्थिक्षेपप्रकारः ।

ब्रह्मपुराणे,

स्नात्वा ततः पञ्चगवेन सिक्त्वा
हिरण्यमध्वाज्यतिलैश्च योज्य ।
ततस्तु मृत्पिण्डपुटे निधाय
पश्यन् दिशं प्रेतगणोपगूढाम् ॥
नमोऽस्तु धर्माय वदन् प्रविश्य
जलं स मे प्रीत इति क्षिपेच्च ।
स्नात्वा तथोत्तीर्य्य च भास्करं च
दृष्ट्वा प्रदद्यादथ दक्षिणां तु ॥
एवं कृते प्रेतपुरे स्थितस्य
स्वर्गे गतिः स्यात्तु महेन्द्रतुल्या ।

पञ्चगवं, पञ्चगव्यम् । अयं प्रयोगः । स्नात्वाऽऽचम्य उदङ्मुखः कुशतिलजलान्यादाय ओंतत्सदित्युच्चार्य्य अद्य अमुकशर्मण एतदस्थिसमसङ्ख्यवर्षसहस्रावच्छिन्नस्वर्गाधिकरणमहितत्वकामोऽमुकशर्मण एतान्यस्थीनि गङ्गायां क्षिपामी-

ति सङ्कल्प्य अपसव्यं कृत्वा अस्थीनि पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैः संयोज्य मृत्पुटे स्थापयित्वा दक्षिणहस्तेन तत्पुटकमादाय दक्षिणां दिशं पश्यन् 'ओंनमोऽस्तु धर्माय'इतिवदन् जलं प्रविश्य 'स मे प्रीतो भवतु' इत्युक्त्वा अस्थि प्रक्षिपेत् । ततो मज्जनं कृत्वा सूर्य्यं दृष्ट्वा दक्षिणामुत्सृजेत् ।

### अथ गङ्गायास्तीर्थविशेषाः ।

गङ्गावाक्यावल्यां गङ्गागण्डकीसङ्गममभिधाय ।

रामतीर्थं ततः पुण्यं वैकुण्ठापणसन्निधौ ।
सोमतीर्थं ततः पुण्यं यत्रासौ मुद्गलो मुनिः ॥
समभ्यर्च्य शिवं ध्यायन् गणतां तु समाययौ ।

मुगेरत्वेन प्रसिद्धो ग्राम एव सोमतीर्थमिति वदन्ति ।

चम्पकाख्यं महातीर्थं यद्गङ्गोत्तरवाहिनी ॥
मणिकर्णिकावद्विज्ञेया महापातकनाशिनी ।

तथा,

जह्नुह्रदे महातीर्थे यत्र स्नानं शरीरिणाम् ।
एकविंशतिसन्तानतारकं किमतः परम् ॥

जह्नुह्रदे, एकशाखानगरे गङ्गायाम् ।

तथा,

तस्माददितितीर्थं तु यत्रावाप्यादितिर्हरिम् ।
कश्यपात्तनयं लेभे तत्र स्नानं महोदयम् ॥ इति ।

### अथ सूकरक्षेत्रमाहात्म्यम् ।

वराहपुराणे,

वराह उवाच ।

परं कोकामुखं स्थानं स्थानं कुब्जाम्रकं परम् ।

परं च सौकरं स्थानं सर्वसंसारमोचकम् ॥
यत्र संस्था मया देवि ह्युद्धृतासि रसातलात् ।
तत्र भागीरथी गङ्गा मम शौचार्थमागता ॥
शृणु पुण्यं महाभागे मम क्षेत्रेऽत्र सुन्दरि ।
यदाप्नोति महाभागे गत्वा च सौकरं प्रति ॥
दश पूर्वान् तथा वंश्यान् परान् सप्त च पञ्च च ।
स्वर्गं नयति तांस्तत्र मातृतः पितृतश्च ह ॥
गमनादेव सुश्रोणि मुखस्य मम दर्शनात् ।
सप्तजन्मान्तरं भद्रे जायते विपुले कुले ॥
एवं वै मानुषो भूत्वा अपराधविवर्जितः ।
गमनं तस्य तीर्थस्य मरणं तत्र कारयेत् ॥
ये मृतास्तत्र सुश्रोणि क्षेत्रे शूकरके मम ।
तारिताः सर्वसंसारात् श्वेतद्वीपाय यान्ति ते ॥
चक्रतीर्थं महाभागे चक्रं यत्र प्रतिष्ठितम् ।
तत्र गत्वा महाभागे तदर्थाय शुभः शुचिः ॥
स्नानं कुर्य्याद्यथान्यायं माधवे मासि द्वादशीम् ।
प्राप्येति शेषः ।
दश वर्षसहस्राणि दश वर्षशतानि च ।
धनधान्यसमृद्धस्तु जायते विपुले कुले ॥
तारितः सर्वसंसारात् श्वेतद्वीपाय गच्छति ।
धन्वी तूणी शरी खड्गी जायते च चतुर्भुजः ॥
नरो भूत्वा महाभागे स मुक्तः सर्वकिल्बिषात् ।
अन्तकाले महाभागे यो गच्छेच्छौकरं प्रति ॥
तस्य पुण्यं प्रवक्ष्यामि स्नातस्यापि यशस्विनि ।
पातकान्यपि यः कृत्वा मूर्खो भूत्वा दृढव्रतः ॥

कौमुदस्य तु मासस्य शुक्लपक्षे तु द्वादशीम् ।
तारिताः पितरस्तेन तथैव च पितामहाः ॥ इति ।

अथ कनखलमाहात्म्यम् ।

गङ्गावाक्यावल्याम्,
सुरोत्तमं च गोविन्दं रुद्रं कनखले स्थितम् ।
स्नात्वाभ्यर्च्याथ गङ्गायां पुण्यमक्षयमाप्नुयात् ॥
तथा,
गङ्गाद्वारे कुशावर्त्ते बिल्वके नीलपर्व्वते ।
तीर्थे कनखले स्नात्वा धूतपापो दिवं व्रजेत् ॥ इति ।

अथ गङ्गाद्वारमाहात्म्यम् ।

हेमाद्रौ कूर्मपुराणे,
हिमवच्छिखरे रम्ये गङ्गाद्वारे सुशोभने ।
देव्या सह महादेवो नित्यं शिष्यैश्च संवृतः ॥
तत्र स्नात्वा महादेवं पूजयित्वा वृषध्वजम् ।
सर्व्वपापैर्विशुध्येत मृतस्तु ज्ञानमाप्नुयात् ॥
भविष्ये,
गङ्गाद्वारे कुशावर्त्ते स्नाने पुण्यफलं शृणु ।
सप्तानां राजसूयानां फलं स्यादश्वमेधयोः ॥
उषित्वा तत्र मासार्द्धं षण्णां विश्वजितां फलम् ।
दशायुतगवां दानात् पुण्यं च लभते नरः ॥ इति ।

अथ कुब्जाम्रमाहात्म्यम् ।

तत्र वराहपुराणे,
वराह उवाच ।
एवं कुब्जाम्रकं पुण्यं तीर्थमेतद्यशस्विनि ।
ये मृतास्तत्र गच्छन्ति ते मल्लोकाय निष्कलाः ॥ इति ।

## अथ यमुनामाहात्म्यम्।

**मत्स्यपुराणे,**

गङ्गा च यमुना चैव उभे तुल्यफले स्मृते।
केवलं ज्येष्ठभावेन गङ्गा सर्वत्र पूज्यते॥

**वायुपुराणे,**

कालिन्द्यामन्यतीर्थेभ्यः फलं स्नातुः शताधिकम्।
गण्डूषमात्राम्बुपानान्नरो भवति सोमपः॥
यत्किञ्चिद्दीयते ह्यस्यां वसिष्ठ स्वल्पमप्युत।
सुमेरुसदृशं भूत्वा तद्दातुरुपतिष्ठते॥
दूरस्थेनापि यमुना ध्याता हन्ति मनःकृतम्।
वाचिकं कीर्त्तिता हन्ति स्नाता कायकृतं ह्यघम्॥

**तथा,**

जप्त्वास्यामेव गायत्रीमासहस्रमथो द्विज।
ब्रह्महत्याविमुक्तः स्यादश्वमेधफलं लभेत्॥
सायं प्रातर्द्विजः सन्ध्यामुपास्ते सकृदेव यः।
कालिन्द्यां न स दोषेण सन्ध्यालोपस्य लिप्यते॥
तर्पयित्वा नरो दिव्यान्मनुष्यांश्च पितॄनपि।
श्रद्धया यमुनावार्भिः पुनात्येव कुलत्रयम्॥
जुहोति यस्तिलान् साज्यान् सावित्र्या शतसङ्ख्यया।
तेनेष्टं क्रतुभिर्मुख्यैः सहस्रशतदक्षिणैः॥
यः स्नात्वा यमुनावार्भिः केशवं शिवमेव वा।
रविं वा पूजयेद्भक्त्या न स शोच्यो भवेन्मृतः॥
एवमप्युपवासं यः करोति यमुनान्तिके।
नित्योपवासी स भवत्यघौघादपि शुध्यति॥
पक्षमस्यां तु पशुना सोमेनाप्यधिकारवान्।

यः प्राप्स्यति फलं सोऽत्र राजसूयाश्वमेधयोः ॥
यद्यत्कृतं च कालिन्द्यां शुभं वा यदि वाऽशुभम् ।
तत्तदेवायुतगुणं भूत्वा तस्योपतिष्ठते ॥
स्नानादि कर्म कालिन्द्यां येन केनापि यत्कृतम् ।
यथावदयथावद्वा तत्साधुफलभाग्भवेत् ॥
सङ्क्रान्तौ रविवारे च सप्तम्यां वैधृतौ तथा ।
व्यतीपाते च हस्तर्क्षे ह्यपि पौष्णे पुनर्वसौ ॥
एकादश्यां चतुर्दश्यामष्टम्यां च दिनक्षये ।
पूर्णिमायां च पूर्वोक्तं फलं शतगुणं भवेत् ॥
तदेव स्याल्लक्षगुणं ग्रहणे चन्द्रसूर्ययोः ।
द्वादश्यामर्चयेद्विष्णुमेकादश्यामुपोषितः ॥
कालिन्द्यां तस्य सुलभं तद्विष्णोः परमं पदम् ।
यदस्या दक्षिणे कूले फलमुक्तं तवाधुना ॥
तदेव तूत्तरे कूले फलं शतगुणाधिकम् ।
एवं पाद्मे मथुरादिसम्बन्धात्तस्याधिकफलत्वमुक्तम् ।
तथा,
यामुनेनोदरस्थेन पयःपङ्केन रेणुना ।
म्रियते यो नरः पुत्र स नरो न भवेत्पुनः ॥ इति ।

## अथ नर्मदामाहात्म्यम् ।

कौर्मे,

सूत उवाच ।

एषा पुण्यतमा देवी देवगन्धर्वसेविता ।
नर्मदा लोकविख्याता तीर्थानामुत्तमा नदी ॥
तस्याः शृणुध्वं माहात्म्यं मार्कण्डेयेन भाषितम् ।
युधिष्ठिराय तु शुभं सर्वपापप्रणाशनम् ॥

युधिष्ठिर उवाच ।

श्रुतास्तु विविधा धर्मास्त्वत्प्रसादान्महामुने ।
माहात्म्यं च प्रयागस्य तीर्थानि विविधानि च ॥
नर्मदा सर्वतीर्थानां मुख्या हि भवतेरिता ।
तस्यास्त्विदानीं माहात्म्यं वक्तुमर्हसि सत्तम ॥

मार्कण्डेय उवाच ।

नर्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृता ।
तारयेत्सर्वभूतानि स्थावराणि च सर्वदा ॥
नर्मदायास्तु माहात्म्यं पुराणे यन्मया श्रुतम् ।
इदानीं सम्प्रवक्ष्यामि शृणुष्वैकमनाः शुभम् ॥
पुण्या कनखले गङ्गा कुरुक्षेत्रे सरस्वती ।
ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्मदा ॥
त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम् ॥
कलिङ्गदेशे पश्चार्द्धे पर्वतेऽमरकण्टके ।
पुण्या च त्रिषु लोकेषु रमणीया मनोरमा ॥
सदेवासुरगन्धर्वा ऋषयश्च तपोधनाः ।
तपस्तप्त्वा तु राजेन्द्र सिद्धिं तु परमां गताः ॥
तत्र स्नात्वा नरो राजन्नियमस्थो जितेन्द्रियः ।
उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥
योजनानां शतं साग्रं श्रूयते सरिदुत्तमा ।
विस्तरेण तु राजेन्द्र योजनद्वयमायता ॥
षष्टितीर्थसहस्राणि षष्टिकोट्यस्तथैव च ।
पर्वतस्य समन्तात्तु तिष्ठन्त्यमरकण्टके ॥
ब्रह्मचारी शुचिर्भूत्वा जितक्रोधो जितेन्द्रियः ।

सर्वहिंसानिवृत्तस्तु सर्वभूतहिते रतः ॥
एवं सर्वसमाचारो यस्तु प्राणान् परित्यजेत् ।
तस्य पुण्यफलं राजन् शृणुष्वावहितो नृप ॥
शतं वर्षसहस्राणि स्वर्गे मोदति पाण्डव ।
अप्सरोगणसङ्कीर्णो दिव्यस्त्रीपरिवारितः ॥
दिव्यगन्धानुलिप्तश्च दिव्यपुष्पोपशोभितः ।
क्रीडते देवलोके तु दैवतैः सह मोदते ॥
ततः स्वर्गात्परिभ्रष्टो राजा भवति धार्मिकः ।
गृहं तु लभतेऽसौ वै नानारत्नविभूषितम् ॥
स्तम्भैर्मणिमयैर्दिव्यैर्वज्रवैडूर्यभूषितम् ।
आलेख्यवाहनैः शुभ्रैर्दासीदाससमन्वितम् ॥
राजराजेश्वरः श्रीमान् सर्वस्त्रीजनवल्लभः ।
जीवेद्वर्षशतं साग्रं तत्र भोगसमन्वितः ॥
अग्निप्रवेशेऽथ जले अथवा ऽनशने कृते ।
अनिवर्त्तिका गतिस्तस्य पवनस्याम्बरे यथा ॥
पश्चिमे पर्वततटे सर्वपापप्रणाशनः ।
ह्रदो जलेश्वरो नाम त्रिषु लोकेषु विश्रुतः ॥
तत्र पिण्डप्रदानेन सन्ध्योपासनकर्मणा ।
दशवर्षसहस्राणि तर्पिताः स्युर्न संशयः ॥
दक्षिणे नर्मदाकूले कपिलाख्या महानदी ।
सरलार्जुनसञ्छन्ना नातिदूरे व्यवस्थिता ॥
सा तु पुण्या महाभागा त्रिषु लोकेषु विश्रुता ।
तत्र कोटिशतं साग्रं तीर्थानां तु युधिष्ठिर ॥
तस्मिंस्तीर्थे तु ये वृक्षाः पतिताः कालपर्ययात् ।
नर्मदातोयसंस्पृष्टा यान्ति ते परमां गतिम् ॥

द्वितीया तु महाभागा विशल्यकरणी शुभा ।
तत्र तीर्थे नरः स्नात्वा विशल्यो भवति क्षणात् ॥
कपिला च विशल्या च श्रूयते राजसत्तम ।
ईश्वरेण पुरा प्रोक्ता लोकानां हितकाम्यया ॥
अनाशनं तु यः कुर्यात्तस्मिंस्तीर्थे नरोत्तम ।
सर्वपापविशुद्धात्मा रुद्रं समधिगच्छति ॥
तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् ।
ये वसन्त्युत्तरे कूले रुद्रलोके वसन्ति ते ॥

तथा,

परित्यजति यः प्राणान् पर्वतेऽमरकण्टके ।
वर्षकोटिशतं साग्रं रुद्रलोके महीयते ॥

तथा,

नर्मदा सर्वतः पुण्या ब्रह्महत्यापहारिणी ।
अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया ॥

तथा,

चन्द्रसूर्योपरागे तु गत्वा ह्यमरकण्टकम् ।
अश्वमेधाद्दशगुणं पुण्यमाप्नोति मानवः ॥
एष पुण्यो गिरिवरो देवगन्धर्वसेवितः ।
नानाद्रुमलताकीर्णो नानापुष्पोपशोभितः ॥
अत्र सन्निहितो राजन् देव्या सह महेश्वरः ।
ब्रह्मा विष्णुस्तथा चेन्द्रो विद्याधरगणैः सह ॥
प्रदक्षिणं तु यः कुर्यात् पर्वतामरकण्टकम् ।
पौण्डरीकस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ इति ।

अथ नर्मदाकावेरीसङ्गमः ।

मात्स्ये,

कावेरीसङ्गमं तत्र सर्वपापप्रणाशनम्।
ये नरा नाभिजानन्ति वञ्चितास्ते न संशयः॥
तस्मात्सर्वप्रयत्नेन तत्र स्नायीत मानवः।
कावेरी च महापुण्या नर्मदा च महानदी॥
तत्र स्नात्वा तु राजेन्द्र अर्चयेद्वृषभध्वजम्।
अश्वमेधफलं प्राप्य रुद्रलोके महीयते॥ इति।

अथ नर्मदासमुद्रसङ्गमः।

मात्स्ये,
वटेश्वरे महापुण्ये गङ्गाद्वारे तपोवने।
एतेषु सर्वस्थानेषु द्विजाः स्युः शंसितव्रताः॥
श्रुतं दशगुणं पुण्यं नर्मदोदधिसङ्गमे। इति।

अथ नर्मदैरण्डीसङ्गमः।

कौर्मे,
ततो गच्छेत राजेन्द्र एरण्डीतीर्थमुत्तमम्।
सङ्गमे तु नरः स्नात्वा उपवासपरायणः॥
ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिता।
एरण्डीसङ्गमे स्नात्वा भक्तिभावानुरञ्जितः॥
मृत्तिकां शिरसि स्थाप्य त्ववगाह्य च तज्जलम्।
नर्मदोदकसम्मिश्रं मुच्यते सर्वकिल्बिषैः॥ इति।

अथ नर्मदाप्रभववंशगुल्ममाहात्म्यम्।

भारते पुलस्त्यतीर्थयात्रायाम्।
शोणस्य नर्मदायाश्च प्रभवे कुरुपुङ्गव।
वंशगुल्म उपस्पृश्य वाजिमेधफलं लभेत्॥ इति।

अथ कौशिक्यादिमाहात्म्यम्।

भारते वनपर्वणि,

भरतस्याश्रमं गत्वा सर्वपापप्रमोचनम् ।
कौशिकीं तत्र सेवेत महापातकनाशिनीम् ॥
राजसूयस्य यज्ञस्य फलं प्राप्नोत्यसंशयः ।
ततो गच्छेत धर्मज्ञश्चम्पकारण्यमुत्तमम् ॥
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् । इति ।

अथ गयामाहात्म्यम् ।

तत्र कौर्मे,

गयातीर्थं परं गुह्यं पितॄणां चातिवल्लभम् ।
कृत्वा पिण्डप्रदानं तु न भूयो जायते नरः ॥
सकृद्गयाभिगमनं कृत्वा पिण्डं ददाति यः ।
पितरस्तारितास्तेन यास्यन्ति परमां गतिम् ॥
तत्र लोकहितार्थाय रुद्रेण परमात्मना ।
शिलातले पदं न्यस्तं पितॄंस्तत्र प्रसादयेत् ॥
गयाभिगमनं कर्तुं यः शक्तो नाभिगच्छति ।
शोचन्ति पितरस्तेषां वृथा तस्य परिश्रमः ॥
गायन्ति पितरो गीताः कीर्त्तयन्ति महर्षयः ।
गयां यास्यति यः कश्चित्सोऽस्मान् सन्तारयिष्यति ॥
यदि स्यात् पातकोपेतः स्वधर्मरतिवर्जितः ।
गयां यास्यति वंश्यो यः सोऽस्मान् सन्तारयिष्यति ॥
एष्टव्या बहवः पुत्रा बलवन्तो गुणान्विताः ।
तेषां तु समवेतानां यद्येकोऽपि गयां व्रजेत् ।
तस्मात्सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः ॥
प्रदद्याद्विधिवत् पिण्डान् गयां गत्वा समाहितः ।
धन्यास्तु खलु ते मर्त्या गयायां पिण्डदायिनः ॥
कुलान्युभयतः सप्त समुद्धृत्याप्नुयात्परम् ।

मत्स्यपुराणे,

यत्रैषा पितृभिर्गीता गाथा भोगमभीप्सुभिः ।

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥

यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ इति ।

ननु पुत्रकृतश्राद्धेन कथं पितृगामि फलं 'शास्त्रदेशितं फलमनुष्ठातरि' इतिनियमात् । अत एव—

गयां गत्वा प्रकुर्वीत श्राद्धं पुत्रः समाहितः ।

इत्यात्मनेपदमपि सङ्गच्छते । तस्य कर्तृगामिफल एव साधुत्वात् । न चास्य पुत्रेष्टिवत् परगतफलजनकत्वम् । अत एवानुष्ठातर्य्येव फलमिति न नियमः किन्तु परगतफलबोधकशास्त्रादुत्सर्गरूप एव स इतिवाच्यम् । तथाऽपि क्रियाया देवतानिष्ठफलाजनकत्वनियमात् । प्रकृते च श्राद्धदेवतायां पित्रादौ फलोत्पत्तेरसम्भवादिति । न चावाहनादिभिर्देवतायामपि संस्काराख्यफलजननान्न दोषः । यत्फलमुद्दिश्य हि प्रधाने प्रवृत्तिः तन्न देवतावृत्तीतिनियमात् । तच्च स्वर्गादि, न च तद्देवतायामिति । न च वस्वादय एव श्राद्धदेवताः "वसवः पितरो रुद्राः पितामहाः" इतिपैठीनसिवचनादितिवाच्यम् । वस्वादीनां देवतात्वविरहस्य प्रागेव व्यवस्थापनादिति ।

मैवम् । अत्र देवतायामपि फलोत्पत्तेस्तत्तत्पुराणादिवचनेनोपगमात्तादृशनियमे मानाभावात् नियमग्राहकस्य वचनापेक्षया दुर्बलत्वात् । नन्वेवं "कुर्वीत" इत्यात्मनेपदानुपपत्तिः । "स्वरितञितः कर्त्रभिप्राये क्रियाफले(१।३।७२)" इतिपाणिनिसूत्रविरोधात् । न च कर्त्रभिप्राय इत्यस्याभिप्रायविषय इत्यर्थः पितृफलं पुत्राभिप्रेतमिति न दोष इतिवाच्यम् । "कर्त्तारं चेत् क्रियाफलमभिप्रैति सम्बध्नाति" इति महाभाष्यव्याख्यानात् । तदप्याक्षिप्यत इति मह-

त्साहसम्। अत एव यजन्ति याजकाः पचन्ति पाचका इति प्रत्यु दाहरणम्। न हि तेषां फले नाभिप्रायः किन्तु तेनासम्बन्ध इति मैवम्। अग्निनिष्ठाऽऽहवनीयत्वादिफलजननेऽपि "अग्निमादधीत" इत्यस्येव स्वनिष्ठफलजननेऽपि "गां दद्यात्" इत्यादेरिवोपपत्तेः। तदपि कथमितिचेत्, तत्रात्मनेपदार्थस्याविवक्षितत्वात् कर्तृत्वमात्रविवक्षणात्। न च व्यधिकरणफलजनकत्वेऽतिप्रसङ्गः शास्त्रेण यद्गतं फलं बोध्यते तत्रैव तदुपगमात्। अपूर्वं तु फलसमानाधिकरणमिति नियमः न तु विहितक्रिया कर्त्तर्यैवादृष्टं जनयतीतिनियमः। अथैवं व्यधिकरणादृष्टस्य फलहेतुत्वेऽतिप्रसङ्गः। न चादृष्टवतो व्यापकतया पितर्यपि तत्सम्बन्धसत्त्वाददोष इति वाच्यम्। स्वाश्रयसंयोगसम्बन्धेन पुत्रादृष्टस्य पितर्यभावात्। आत्मनोः संयोगाभावात्। स्वाश्रयसंयुक्तसंयोगस्यातिप्रसञ्जकत्वात्। मैवम्। स्वजनकाभिप्रायविषयत्वसम्बन्धेन पुत्रादृष्टस्य पितरि सत्त्वात्। त्वयाप्यदृष्टं प्रति श्राद्धस्य हेतुताया ईदृशप्रत्यासत्त्यैव वाच्यत्वादन्यस्यानतिप्रसक्तस्याभावादिति।

अत्रोच्यते। लाघवत्वात् सुखत्वावच्छिन्ने धर्मस्य कार्य्यैकार्थप्रत्यासत्त्या हेतुत्वात् सर्वत्रापूर्वस्य फलसमानाधिकरणत्वात्। व्यधिकरणादृष्टेन फलजनने पुत्रकौटसाक्ष्यादिना मुक्तस्य पितुर्नरकापत्तेः। अस्मन्नये तु दोषाभावान्न पितरि ततोऽधर्मोत्पत्तिः। न चास्मन्नयेऽपि भोगे दोषस्य हेतुत्वान्नैवमिति वाच्यम्। योगिनां भोगानुत्पत्त्यापत्तेः। तत्तत्पुरुषदोषकालीनतत्तत्क्रियात्वेन तत्तत्पुरुषभोगहेतुत्वे गौरवात्। तत्तत्क्रियात्वेनैव तथात्वात्। किञ्चैवं तत्त्वज्ञानिना कृतश्राद्धात् पितुः स्वर्गानापत्तेः। दोषाभावेन कर्त्तर्य्यदृष्टाभावादिति विस्तरेणान्य

त्रेदं प्रपञ्चितम् ।

अथ गयोत्पत्तिकथनम् ।

गारुडे ब्रह्मवाक्यम्,

सारात्सारतरं व्यास गयामाहात्म्यमुत्तमम् ।
प्रवक्ष्यामि समासेन भुक्तिमुक्तिप्रदं शृणु ॥
गयासुरोऽभवत् पूर्वं बलवान् परमः स च ।
तपोऽतप्यन्महाघोरं सर्वभूतोपतापनम् ॥
तत्तपस्तापिता देवास्तद्वधार्थं हरिं गताः ।
शरणं हरिरूचे तान् भवितव्यं शिवात्मभिः ॥
पातितेऽस्य मया देहे तथेत्यूचुः सुरा हरिम् ।
कदाचित् सुरपूजार्थं क्षीराब्धेः कमलानि च ॥
आनीय कीकटे देशे शयनं चाकरोद्वने ।
विष्णुमायाविमूढोऽसौ गदया विष्णुना हतः ॥
अतो गदाधरो विष्णुर्गयायां मुक्तिदः स्थितः ।
तस्य देहे लिङ्गरूपी स्थितः शुद्धे पितामहः ॥
विष्णुराहाथ मर्यादां पुण्यक्षेत्रं भविष्यति ।
यज्ञं श्राद्धं पिण्डदानं स्नानादि कुरुते नरः ॥
स स्वर्गं ब्रह्मलोकं च गच्छेन्न नरकं नरः ।
गयातीर्थं परं ज्ञात्वा यागं चक्रे पितामहः ॥
ब्राह्मणान् पूजयामास ऋत्विक्त्वं समुपागतान् ।
नदीं रसवतीं दृष्ट्वा स्थितां व्याप्य दिशस्ततः ॥
भक्ष्यभोज्यफलानां च कामधेनुं तथाऽसृजत् ।
पञ्चक्रोशात्मकं तीर्थं ब्राह्मणेभ्यो ददौ प्रभुः ।
धर्मयागे तु लोभाद्वै प्रतिगृह्य धनादिकम् ॥
स्थिता विप्रास्तदा शप्ता गयायां ब्रह्मणा ततः ।

माभूत्त्रैपुरुषी विद्या माभूत्त्रैपुरुषं धनम् ॥
युष्माकं स्याद्वारिवहा नदी पाषाणपर्वतः ।
शप्तैस्तु प्रार्थितो ब्रह्मा स्वगृहं कृतवान् प्रभुः ॥
लोकाः पुण्या गयायां ये श्राद्धिनो ब्रह्मलोकगाः ।
युष्मान् ये पूजयिष्यन्ति तैरहं पूजितः सदा ॥
ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा ।
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥
समुद्राः सरितः सर्वा वापीकूपह्रदानि च ।
स्नातुकामा गयातीर्थं व्यास यान्ति न संशयः ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
पापं तत्सङ्गजं सर्वं गयाश्राद्धाद्विनश्यति ॥
असंस्कृता मृता ये च पशुचौरहताश्च ये ।
सर्पदष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति ते ॥
गयायां पिण्डदानेन यत्फलं लभते नरः ।
न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ॥ इति ।

ब्रह्मज्ञानमित्यादि । गयाश्राद्धं, स्वोद्देश्यकगयाश्राद्धमित्यर्थः । ब्रह्मज्ञानसमभिव्याहारात् कर्तृगतमेवेदं फलमित्यन्ये । ब्रह्महत्येत्यादि । यस्य गयाश्राद्धं कृतं तस्य महापातकमपि ततो नश्यतीत्यर्थः । मुक्ता इत्यस्य, पापेभ्य इतिशेषः ।

ब्रह्मपुराणे,

क्रियते पतितानां च गते संवत्सरे क्वचित् ।
देशधर्मप्रमाणत्वाद्गयाकूपेषु बन्धुभिः ॥
मार्त्तण्डपादमूले वा श्राद्धं हरिहरं स्मरन् । इति ।

स्मरन्निति विभक्तिव्यत्ययात् स्मरते इत्यर्थः । चकारादपतितानामपि वर्षोत्तरमेव । कूपपदं सकलगयोपलक्षणमिति वदन्ति ।

गारुडे,

तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम् ।
अब्दमध्ये न कुर्वीत महागुरुविपत्तिषु ॥

तत्रैव,

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपाक्षिकम् ।
अब्दमध्ये न कुर्वीत कृतेऽपि हि सपिण्डने ॥ इति ।

अत्र 'सपिण्डीकरणं विना' इति चतुर्थचरणं पठित्वा कृते सपिण्डीकरणे वर्षमध्येऽपि गयाश्राद्धं कारयन्ति । अत्र पित्रादेरेव वर्षमध्ये न कार्यं "महागुरुविपत्तिषु" इतिश्रवणात् । पितृव्यादेः करणे न दोषः ।

वायवीये,

गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥
न त्यजेत गयाश्राद्धं सिंहस्थे च बृहस्पतौ । इति ।

अग्निपुराणे,

गयाश्राद्धं प्रकुर्वीत सङ्क्रान्त्यादौ विशेषतः ।
काले चापरपक्षे वा चतुर्थ्यादितिथिष्वपि ॥ इति ।

सकलापरपक्षे चतुर्थ्यादौ वेत्यर्थः । एषु फलातिशयः । 'विशेषतः' इत्युपादानात् ।

स्मृतिरत्नावल्याम्,

मकरे वर्त्तमाने तु ग्रहणे चन्द्रसूर्ययोः ।
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥ इति ।

गयाश्राद्धं द्वादशदैवतं कार्य्यम् ।

अन्वष्टकासु वृद्धौ च गयायां च मृतेऽहनि ।
अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह ॥

इतिवायवीयात् । पित्रादित्रिकं, मात्रादित्रिकं, मातामहादित्रिकं, विश्वेदेवानां त्रयमिति द्वादशदैवतम् । अत एव "पिता पितामहश्चैव" इत्यादिमन्त्रे पौराणिके नवानामेवोल्लेखः श्रूयते । हेमाद्र्यादिमतेऽप्येवम् । मातामहादीनां सपत्नीकत्वेन निर्देश इति विशेषः । परन्तु अग्निपुराणे—

पित्रादिनवदैवत्यं तथा द्वादशदैवतम् ।

इत्यत्र तथा शब्दो विकल्पे । तथा च मातामह्यादित्रयप्रवेशात् षोडशदैवतमाहुः । छन्दोगानां तु षड्दैवतमेव ।

न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते । इतिवचनात् ।

गयायां पिण्डदाने उदासीनस्याप्यधिकारः ।

आत्मजो वाऽन्यजो वापि गयाकूपे यदा तदा ।

यन्नाम्ना पातयेत् पिण्डं तन्नयेद्ब्रह्म शाश्वतम् ॥

इतिसामान्यप्रघट्टके प्रपञ्चितम् ।

**वायवीये,**

दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः ।

न्यस्य विष्णुपदे दण्डं मुच्यते पितृभिः सह ॥

पायसेन गयायां च सक्तुना पिष्टकेन वा ।

चरुणा तण्डुलाद्यैर्वा पिण्डदानं विधीयते ॥

पिष्टकेन, तण्डुलपिष्टेन । तण्डुलाद्यैः, केवलतण्डुलैरित्यप्याहुः ।

**हेमाद्रौ,**

महालये गयाश्राद्धे प्रेतश्राद्धे दशाहिके ।

पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्त्तयेत् ॥

तथा,

वृद्धिश्राद्धे गयाश्राद्धे प्रेतश्राद्धे तथैव च ।

सपिण्डीकरणश्राद्धे न जपेत् पितृसूक्तकम् ॥ इति ।

अत्र मूलं मृग्यमित्याहुः ।

वायवीये,

पिण्डं दद्याच्च पित्रादेरात्मनोऽपि तिलैर्विना ।

आत्मनो दध्यक्तं पिण्डत्रयं जनार्द्दनहस्ते देयम् ।

त्रयः पिण्डा मया दत्तास्तव हस्ते जनार्द्दन ।

परलोकगते मह्यमक्षय्यमुपतिष्ठताम् ॥

इति अग्निपुराणीयमन्त्रलिङ्गात् । आत्मपिण्डदानं सव्येन विना तिलं कार्य्यम् ।

मन्त्रेण चात्मनोऽन्येषां सव्येनापि तिलैर्विना ।

इतिवचनात् ।

## अथ गयापरिमाणम्

वायवीये,

पञ्चक्रोशं गयाक्षेत्रं क्रोशमात्रं गयाशिरः ।

अत्र मध्यावधिः—

तत्रैव,

मुण्डपृष्ठाच्च पूर्वस्मिन् दक्षिणे पश्चिमोत्तरे ।

सार्द्धं क्रोशद्वयं मानं गयेतिपरिकीर्त्तितम् ॥

मुण्डपृष्ठात्त्रिमध्यमित्यर्थः । गयाशिरः परिमाणमाह—

अग्निपुराणम्,

नागकूटाद्गृध्रकूटात्तथा चोत्तरमानसात् ।

एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥

तावदेव फल्गुतीर्थमित्यर्थः ।

तथा,

महानद्याः पश्चिमेन यावद्गृध्रेश्वरो गिरिः ।

उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमानसम् ॥

एतद्गयाशिरो नाम त्रिषु लोकेषु विश्रुतम् ॥ इति ।
गयासुरशिरःपातनस्थानमेव गयाशिरःशब्देनाभिलप्यते ।
**पाद्मे सृष्टिखण्डे,**
कीकटेषु गया पुण्या पुण्यं राजगृहे वनम् ।
च्यवनस्याश्रमः पुण्यो नदी पुण्या पुनःपुना ॥ इति ।

अथ गयाशब्दार्थनिर्वचनम् ।

**वायवीये,**
श्वेतकल्पे तु वाराहे गयो यागमकारयत् ।
गयनाम्ना गया ख्याता क्षेत्रं ब्रह्मादिकाङ्क्षितम् ॥ इति ।

अथ गयागमनफलम् ।

**अग्निपुराणे,**
यथा यथा व्रजन् याति जनः स्थानाद्गयां प्रति ।
तथा तथा दिवं यान्ति प्रेताः पूर्वपितामहाः ॥ इति ।

अथ श्राद्धफलम् ।

**कल्पतरौ वराहपुराणे,**

सनत्कुमार उवाच ।

धन्यस्त्वमेव द्विजवर्यमुख्य यद्वेदवादाभिरतः पितॄंश्च ।
प्रीणासि मन्त्रव्रतहोमजप्यैर्गयां समासाद्य तथान्नपिण्डैः ॥
शृणुष्व वाक्यं नृपतिर्बभूव विशालनामा स पुरीं विशालाम् ।
उवास धन्यां धृतिमानपुत्रः स्वयं विशालाधिपतिर्द्विजाग्र्यान् ॥
पप्रच्छ पुत्रार्थममित्रहन्ता ते ब्राह्मणाश्चोचुरदीनसत्त्वाः ।
राजन् पितॄंस्तर्पय पुत्रहेतो गत्वा गयायां विधिवत्तु पिण्डैः ॥
ध्रुवं सुतस्ते भविता नृवीर सहस्रदाता सकलक्षितीशः ।
इतीरितो ब्राह्मणैः सम्प्रहृष्टो राजा विशालाधिपतिः प्रयत्नात् ॥

समागतस्तीर्थवरं द्विजेश गयामिमां तद्गतमानसः सन् ।
आगत्य सोऽथ मवरं सुतार्थी गयाशिरो यागपरः पितॄणाम् ॥
पिण्डप्रदानं विधिना प्रयच्छेत्तावद्दियत्युत्तममूर्त्तियुक्तान् ।
पश्यन् स पुंसः सितरक्तकृष्णा नुवाच राजा किमिदं महद्भिः ॥
समीक्ष्यते शंसत सर्वमेव कुतूहलं मे मनसि प्रवृत्तम् ।

सित उवाच ।

अहं सितस्ते जनकोऽस्मि तात नाम्ना च वृत्तेन च कर्मणा च ।
अयं च मे जनको रक्तवर्णो नृशंसकृद्ब्रह्महा पापकारी ॥
अधीश्वरः शृणु परः पितास्य कृष्णो नाम्ना कर्मणा वर्णतश्च ।
एतेन कृष्णेन हताः पुरा वै जन्मन्यनेके ऋषयः पुराणाः ॥
तथा,
एतौ मृतौ द्वावपि पितृपुत्राववीचिसंज्ञं नरकं प्रपन्नौ ।
अधीश्वरोऽयं जनकः परोऽस्य तौ कृष्णरक्तावपि दीर्घकालम् ॥
अहं च शुद्धेन निजेन कर्मणा शक्रासनं प्राप्य सुदुर्लभं तत् ।
त्वया पुनर्मन्त्रविदा गयायां पिण्डप्रदानेन बलादिमौ च ॥
मोक्षायितौ तीर्थवरप्रभावादवीचिसंज्ञं नरकं गतौ तौ ।
पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ।
प्रीणयामीति यत्तोयं त्वया दत्तमरिन्दम ॥
तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम ।
तीर्थप्रभावाद्गच्छामः पितृलोकं न संशयः ॥
अत्र पिण्डप्रदानेन एतौ तव पितामहौ ।
दुर्गतावपि संसिद्धौ पापाद्विकृतलिङ्गिनौ ॥
तीर्थप्रभाव एषोऽत्र ब्रह्मघ्नस्यापि सत्तम ।
पितुः पिण्डप्रदानेन कुर्यादुद्धरणं सुतः ॥
एतस्मात् कारणात् पुत्र अहमेतौ विगृह्य तु ।

आगतोऽस्मि भवन्तं वै द्रष्टुं यास्यामि साम्प्रतम् ॥

विगृह्य, गृहीत्वा। एवं च महापातकिनोऽपि श्राद्धोद्देश्यस्य गयाश्राद्धेन सद्गतिर्भवति, कर्त्तुः पुत्रकामत्वेन तस्य पुत्रोऽपि भवतीतिप्रघट्टतात्पर्यम्। पितॄनित्यादिवचनबलादिदं तिलोदकं तस्मै स्वधा इत्यस्यान्ते पितरं प्रीणयामीतितर्पणवाक्यं सिद्ध्यति। एवं पितामहादावपि। पितॄनितिबहुवचनमविवक्षितमिति सम्प्रदायः। अत्र च योगसिद्ध्यधिकरणविरोधान्न युगपदुभयं फलम्। किन्तु एकेन प्रयोगेण पितुर्महापातकनिवृत्तिः पुत्रकामनया कृतेन प्रयोगान्तरेण पुत्रोत्पत्तिरितिध्येयम्।

वामनपुराणे,

प्रेतराजो वणिजं कञ्चित् प्रत्याह।
गयायां तीर्थजुष्टायां स्नात्वा शौचसमन्वितः।
मम नाम समुद्दिश्य पिण्डनिर्वपणं कुरु॥
तत्र पिण्डप्रदानेन प्रेतभावादहं सखे।
मुक्तस्तु सर्वदातॄणां प्राप्स्यामि शुभलोकताम्॥
इत्येवमुक्त्वा वणिजं प्रेतराजोऽनुजैः सह।
स्वनामानि यथान्यायं सम्यगाख्यातवान् शुचिः॥
तथार्चयित्वा प्रययौ गयाशिरमनुत्तमम्।
पिण्डनिर्वपणं तत्र प्रेतानामनुपूर्वशः॥
चकार च स दायादान् पितॄंश्चक्रे त्वनन्तरम्।
आत्मनश्च महाबुद्धिर्महाबोधौ तिलैर्विना॥
पिण्डनिर्वपणं चक्रे तथान्यानपि गोत्रजान्।
एवं दत्तेषु पिण्डेषु वणिजा प्रेतभावतः॥
विमुक्तास्ते द्विजाः प्राप्य ब्रह्मलोकं ततो गताः।

गयाशिरमिति। एवं च गयाशिरसि प्रेताय पिण्डे दत्ते

तत्वानिवृत्तिब्रह्मलोकावाप्तिर्भवतीति।

**वायुपुराणे,**

आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये।
कृष्णो लोहस्तथा छाग आनन्त्याय प्रकल्पयेत्॥
गयायामक्षयं श्राद्धं जपहोमतपांसि च।
पितृक्षये हि तत् पुत्र तेन तत्राक्षयं भवेत्॥ इति।
पितृक्षये, गयायाम्। तत्, गयास्थानम्।

### अथ गयावासफलम्।

**भारते,**

शुक्लकृष्णावुभौ पक्षौ गयायां यो वसेन्नरः।
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः॥ इति।
वायवीये गयां प्रक्रम्य—
पक्षत्रयनिवासी च पुनात्यासप्तमं कुलम्। इति।
अत्र पक्षः सावनः।

### अथ यावज्जीवस्थितिफलम्।

**वाराहे,**

सकृद्गयाभिगमनं सकृत्पिण्डप्रदापनम्।
दुर्लभं त्वं पुनर्नित्यमस्मिन्नेव व्यवस्थितः॥
किमत्र प्रोच्यते रैभ्य तव पुण्यमिह प्रभो।
येन शार्ङ्गगदापाणिर्दृष्टो नारायणः स्वयम्॥
यतो गदाधरः साक्षादस्मिंस्तीर्थे व्यवस्थितः।
ततो हि विख्याततमं तीर्थमेतद्द्विजोत्तम॥ इति।

### अथ गदाधरमाहात्म्यम्।

**अग्निपुराणे,**

ये द्रक्ष्यन्ति सदा भक्त्या देवमादिगदाधरम्।

ते प्राप्स्यन्ति धनं धान्यमायुरारोग्यमेव च ॥
कलत्रपुत्रपौत्रादिगुणकीर्तिसुखादिकम् ।
श्रद्धया यो नमस्येत नित्यं विष्णुपुरे वसेत् ॥
गन्धदानेन गन्धाढ्यः सौभाग्यं पुष्पदानतः । इत्यादि ।

अथ फल्गुमाहात्म्यम् ।

वायुपुराणे,

अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ।
नासौ तत्फलमाप्नोति फल्गुतीर्थे यदाप्नुयात् ॥ इति ।
स्नानप्रकरणात् स्नानफलमिदम् ।

अथ पदानि ।

वायुपुराणे,

विष्णोः पदं रुद्रपदं ब्रह्मणः पदमुत्तमम् ।
कश्यपस्य पदं दिव्यं द्वौ हस्तौ यत्र निर्गतौ ॥
पञ्चाग्नीनां पदान्यत्र इन्द्रागस्त्यपदे परे ।
रवेश्च कार्त्तिकेयस्य क्रौञ्चमातङ्गकस्य च ॥
मुखलिङ्गानि सर्वाणि पदानीति निबोधत । इति ।
पदानां महिमाऽग्रे वक्ष्यते ।

अथ गदालोलोपाख्यानम् ।

विष्णुना हेतिनाम्नोऽसुरस्य गदया शिरोऽभिनिर्भिद्य प्रक्षालनाय यत्र गदा लोलिता तद्गदालोलतीर्थमासीदिति ।

हेत्यसुरस्य यच्छिरो गदया तद्द्विधाकृतम् ।
यतः प्रक्षालिता तीर्थे गदा लोलस्तदाऽभवत् ॥

इति वायुपुराणात् ।

## अथ गयास्थब्राह्मणप्रशंसा।

आग्नेये ब्रह्मवाक्यम्।

ये युष्मान् पूजयिष्यन्ति गयायामागता नराः।
हव्यकव्यैर्द्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत्।
नरकात्स्वर्गलोकं च स्वर्गलोकात्परां गतिम्॥ इति।

## अथ गयायां नानातीर्थानि।

महाभारते पुलस्त्यतीर्थयात्रायाम्।

ततो गयां समासाद्य ब्रह्मचारी जितेन्द्रियः।
अश्वमेधमवाप्नोति गमनादेव भारत॥
यत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः।
यत्र दत्तं पितृभ्यस्तु भवत्यक्षय्यमित्युत॥
महानद्यामुपस्पृश्य तर्पयेत् पितृदेवताः।

महानदी, फल्गुः।

अक्षयान् प्राप्नुयाल्लोकान् कुलं चैव समुद्धरेत्॥
ततो ब्रह्मसरो गच्छेद्ब्रह्मारण्योपशोभितम्।
ब्रह्मलोकमवाप्नोति प्रभातामेव शर्वरीम्॥
ब्रह्मणा तत्र सरसि यूपः पुण्यः प्रकल्पितः।
यूपं प्रदक्षिणं कृत्वा वाजपेयफलं लभेत्॥
ततो गच्छेत्तु राजेन्द्र धेनुकं लोकविश्रुतम्।
एकरात्रोषितो यत्र प्रयच्छेत्तिलधेनुकम्॥
सर्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवम्।
तत्र चिह्नं महाराज अद्यापि सुमहाद्भुतम्॥
कपिला सहवत्सा वै पूर्वमेव चरत्युत।
सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि तत्र वै॥

तेषूपस्पृश्य राजेन्द्र पदेषु नृपसत्तम ।
यत्किञ्चिदशुभं कर्म तत् प्रणश्यति भारत ॥
ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमतः ।
स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम् ॥
ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम् ।
इतरेषां तु वर्णानां सर्वं पापं प्रणश्यति ॥
उद्यन्तं च ततो गच्छेत् पर्वतं गीतनादितम् ।
सावित्र्यास्तु पदं तत्र दृश्यते भरतर्षभ ॥
तत्र सन्ध्यामुपासीत ब्राह्मणः संशितव्रतः ।
उपासिता भवेत् सन्ध्या तेन द्वादशवार्षिकी ॥
योनिद्वारं च तत्रैव दृश्यते भरतर्षभ ।
तत्राभिगम्य मुच्येत पुरुषो योनिसङ्करात् ॥
कृष्णशुक्लावुभौ पक्षौ गयायां यो वसेन्नरः ।
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
ततः फल्गुं व्रजेद्राजंस्तीर्थसेवी नराधिप ।
अश्वमेधमवाप्नोति सिद्धिं च परमां लभेत् ॥
ततो गच्छेत राजेन्द्र धर्मपृष्ठं महाफलम् ।
तत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर ॥
अभिगम्य ततस्तत्र वाजिमेधफलं लभेत् ।
ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम् ॥
तत्राभिगम्य राजेन्द्र ब्रह्माणं भरतर्षभ ।
राजसूयाश्वमेधाभ्यां फलमाप्नोति मानवः ॥
महानदी–ब्रह्मसरो–धेनुक–गृध्रवट–उद्यन्त–धर्मपृष्ठ–ब्रह्म-

तीर्थानां सप्तानां क्रमेण गमनं कार्यमिति प्रघट्टकार्थः ।

तथा धौम्यतीर्थयात्रायाम्,

पूर्वं प्राचीं दिशं राजन् राजर्षिगणसेविताम् ।
रम्यां ते कीर्त्तयिष्यामि युधिष्ठिर यथामति ॥
यस्यां गिरिवरः पुण्यो गयो राजर्षिसत्कृतः ।
शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः ॥
यदर्थं पुरुषव्याघ्र कीर्त्तयन्ति पुरातनाः ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
उत्तारयति सन्तत्या दश पूर्वान् दशापरान् ।
महानदी च तत्रैव तथा गयाशिरो नृप ॥
यत्रासौ कीर्त्यते विप्रैरक्षय्यकरणो वटः ।
यत्र दत्तं पितृभ्योऽन्नमक्षय्यं भवति प्रभो ॥
सा च पुण्यजला यत्र फल्गुनामा महानदी ।
बहुमूलफला चापि कौशिकी भरतर्षभ ॥ इति ।

तथा आङ्गिरसतीर्थयात्रायाम्,

मुण्डपृष्ठं गयां चैव नैरृतं देवपर्वतम् ।
तृतीयां क्रौञ्चपादीं च ब्रह्महत्या विमुच्यते ॥ इति ।

वामनपुराणे प्रह्लादतीर्थयात्रायाम्,

गयायां गोपतिं द्रष्टुं जगाम स महासुरः ।
सरसि ब्रह्मणः स्नात्वा कृत्वा चास्य प्रदक्षिणम् ॥
पिण्डनिर्वपणं पुण्यं पितॄणां स चकार ह । इति ।

नरसिंहपुराणे,

शिवनद्यां शिवकरं गयायां च जनार्दनम् ।
सर्वत्र परमात्मानं यः पश्यति स मुच्यते ॥ इति ।

शिवनदी विहारनगरोपकण्ठेऽस्ति ।

मत्स्यपुराणे गौरीस्थानप्रस्तावे,

वाराणस्यां विशालाक्षी प्रयागे ललिता तथा ।
गयायां मङ्गलानाम कृतशौचे तु सिंहिका ॥ इति ।

बृहस्पतिः,

काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः ।
गयां यास्यति यः कश्चित्सोऽस्मान् सन्तारयिष्यति ॥
गयायां धर्मपृष्ठे च सदसि ब्रह्मणस्तथा ।
गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम् ॥
धर्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च ।
दृष्ट्वैतानि पितॄंश्चार्च्य वंशान् विंशतिमुद्धरेत् ॥ इति ।

वायुपुराणे,

गयायां धर्मपृष्ठे च सदसि ब्रह्मणस्तथा ।
गयां गृध्रवटे चैव श्राद्धं दत्तं महाफलम् ॥
भरतस्याश्रमे पुण्ये नित्यं पुण्यतमैर्वृते ।
मतङ्गस्य पदं तत्र दृश्यते सर्वमानवैः ॥
ख्यापितं धर्मसर्वस्वं लोकस्यास्य निदर्शनात् ।
यच्चम्पकवनं पुण्यं पुण्यकृद्भिर्निषेवितम् ॥
तस्मिन् पाण्डुविशल्येति तीर्थं सद्योनिदर्शनम् ।
तृतीयायां तथा पादे निष्ठीवायाश्च मण्डले ॥
महाह्रदे च कौशिक्यां दत्तं श्राद्धं महाफलम् ।
मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥
बहून् वर्षगणांस्तप्त्वा तपस्तीव्रं सुदुश्चरम् ।
अल्पेनाप्यत्र कालेन नरो धर्मपरायणः ॥
पाप्मानमुत्सृजत्याशु जीर्णां त्वचमिवोरगः ।
नाम्ना कनखलं विप्र तीर्थं जगति विश्रुतम् ॥

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १६

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम् — बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्योः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहित-श्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । माणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ... ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः १

(३२) स्मृतिसारोद्धारः । विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ... ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... ... १

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... १

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः—प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद. शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । १

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) ... व्याख्यया ... सहिता । अथ
व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपाद । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।
श्रीमद्दुर्बलाचार्य बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता । १०

(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वेश्वरसूरिविरचितः । ६

(४८) वीरमित्रोदयः । लक्षणप्रकाशः ।
महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ७

(४९) ... मिश्रविरचितः । ... व्याख्यया टीकया समलंकृतः । ४

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृता । १

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् १

(५३) कमदीपिका । श्रीमन्महामहोपाध्याय कर्मारिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेत २

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः । ४

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,
चौखम्बा बनारस सिटी

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 247.

# वीरमित्रोदयः ।

तीर्थप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः ।

VÎRAMITRODAYA,

TIRTH-PRAKÂSA,

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MISRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. X.

FASCICULUS V-६

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.

AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAM MUKUNDAJI. BOMBAY:

PROBSTHAIN & CO; BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

*Benares.*

*Price Rupee one.*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२४७

१ अस्यां चौखम्बा- संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभा अमुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था

३ एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।
काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्--मुद्राः ७ आनकाः ४

५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... ... " " १ " ०

६ आपणव्ययः पृथग् नास्ति ।० ... ... ... ... ... ... ।

---

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्ड ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १२

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणि । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः ( मीमांसा ) २

(८) ब्रह्मसूत्रभाष्यम्- बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्ण । ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्--विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृता परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णः(वेदान्तः) १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५

(१३) विधिरसायनम् । श्रीअप्पय्यदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... ... २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) गङ्गेशोमेश्वरविरचिता । ( मीमांसा ) ९

उदीच्यां मुण्डपृष्ठस्य ब्रह्मर्षिगणसेवितम् ।
तत्र स्नात्वा दिवं यान्ति स्वशरीरेण मानवाः ॥
कृतं चापि सदा श्राद्धमक्षयं समुदाहृतम् ।
स्नात्वा ऋणत्रयं तत्र निष्क्रीणाति नरोत्तमः ॥
मानसे सरसि स्नात्वा श्राद्धं निर्वर्त्तयेत्ततः ।
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥
तस्मिन्निर्वर्त्तयेत् श्राद्धं यथाशक्ति यथाबलम् ।
कामान् स लभते दिव्यान् मोक्षोपायांश्च कृत्स्नशः ॥ इति

अथ प्रथमदिनकृत्यम् ।

वायुपुराणे,

आच्छादितः शिलापादः प्रभासेनाद्रिणा ततः ।
प्रभासो मुनिभिः स्पृष्टः शिलाङ्गुष्ठो विनिर्गतः ॥
अङ्गुष्ठस्थित ईशोऽपि प्रभासेशः प्रकीर्तितः ।
शिलाङ्गुष्ठैकदेशो यः सा च प्रेतशिला स्मृता ॥
पिण्डदानात् यतस्तस्मात् प्रेतत्वान्मुच्यते नरः ।
महानदीप्रभासाख्योः सङ्गमे स्नानकृन्नरः ॥
रामो देवैः सह स्नातो रामतीर्थं ततः स्मृतम् ।
प्रार्थितोऽथ महानद्या राम स्नातो भवान्यदि ॥
रामतीर्थं भवेदत्र सर्वलोकेषु पावनम् ।
जन्मान्तरशतं साग्रं यत्कृतं दुष्कृतं मया ॥
तत्सर्वं विलयं यातु रामतीर्थाभिषेचनात् ।
मन्त्रेणानेन यः स्नात्वा श्राद्धं कुर्वीत मानवः ॥
रामतीर्थे पिण्डदस्तु विष्णुलोकं प्रयात्यसौ ।
इत्येवमुक्त्वा स्थितो रामः सीतया भरताश्रमे ॥
रामतीर्थे नरः स्नात्वा मन्त्रैः पिण्डप्रदो भवेत् ।

प्रेतत्वात्तस्य पितरो विमुक्ताः पितृतां ययुः ॥
राम राम महाबाहो देवानामभयङ्कर ।
त्वां नमस्येह देवेश मम नश्यतु पातकम् ॥
नमस्कृत्य प्रभासेशं भासमानः शिवं व्रजेत् ।
तं च शम्भुं नमस्कृत्य कुर्य्याद्याम्यबलिं ततः ॥
आपस्त्वमसि देवेश ज्योतिषां पतिरेव च ।
पापं नाशय देवेश मनोवाक्कायकर्मजम् ॥
शिलाया जघनं भूयः समाक्रान्तं नगेन च ।
धर्मराजेनाद्रिरुक्तो न गच्छेति नगः स्मृतः ॥
यमराजभ्रमराजौ निश्चलायेरितौ स्मृतौ ।
ताभ्यां बलिमकृत्वा स्याद्गयाश्राद्धमपार्थकम् ॥
श्वानौ द्वौ श्यावशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ ॥ इति ।

अच्छादित इत्यादि । शिलायाः प्रेतशिलायाः पादः प्रभासेनाद्रिणाऽऽच्छादितः । तत्र प्रभासे शिलाङ्गुष्ठो विनिर्गतः । तदङ्गुष्ठस्थित ईशोऽपि प्रभासेशः तच्छिलाङ्गुष्ठैकदेशो यः प्रभासेशसन्निहितः सैव प्रेतशिला तस्यां यस्य पिण्डो दीयते स प्रेतत्वान्मुच्यत इत्यर्थः । महानदीति । महानदीप्रभासाद्र्योः सङ्गमे स्नानकृदपि प्रेतत्वान्मुच्यत इत्यर्थः । जन्मान्तरेति । अनेन मन्त्रेण स्नात्वा य इह रामेशसन्निधाने पिण्डं श्राद्धं वा करोति स विष्णुलोकं प्रयातीत्यर्थः । मन्त्रैरिति । स्वशाखोक्तैः, "अस्मत्कुले मृता ये च" इत्यादिपौराणिकमन्त्रैश्चेत्यर्थः । प्रेतत्वादिति । प्रेतत्वमुक्तिपूर्वकपितृत्वप्राप्तिः फलमित्यर्थः । प्रेतशिलाश्राद्धेन पितृत्वान्मुक्ता रामतीर्थश्राद्धेन पितृत्वं प्राप्नुवन्तीत्यन्ये । राम रामेति । मन्त्रलिङ्गादनेन मन्त्रेण रामो नमस्कार्य्य इत्यर्थः ।

प्रभासेशनमस्कारमाह—नमस्कृत्येति। तत्फलमाह—भासमान इति। शिवं, शिवलोकम्। भासमानस्वकर्तृकशिवलोकव्रजनं फलमित्यर्थः। तं, रामम्। रामं शम्भुं च नमस्कृत्येत्यर्थः। अनेन च शम्भुनमस्कारानुवादेन तदुत्तरं याम्यबलिर्विधीयते। पुनरपि रामप्रभासेशौ नमस्कार्य्याविसेतस्यार्थ इतिमिश्राः। तत इत्यादि। प्रभासपर्वते "आपस्त्वमसि"इत्यादिमन्त्रं पठित्वा कुशत्रयजलेन यमायैष बलिर्नम इति देवरीत्या बलिर्देय इतिमिश्राः। कुशतिलजलैः पितृरीत्या देय इत्यन्ये। अस्याः प्रेतशिलाया जघनं मध्याङ्गं नगेन नगनाम्ना पर्वतेन समाक्रान्तं तस्य नगनामपर्वतस्य स्थिरीकरणाय यमराजधर्मराजौ तदुपरिस्थापितौ। अतः प्रेतशिलाजघनस्थे नगनाम्नि पर्वते गयाश्राद्धसाफल्यकामनया "श्वानौ द्वौ"इतिश्लोकं पठित्वा यमराजधर्मराजाभ्यामेष बलिर्नम इति ताभ्यामेको बलिर्देयः। अयं बलिरावश्यकः। अन्यत्कार्य्यं यथाशक्ति कार्य्यम्। एतदन्तं प्रथमदिनकृत्यम्। अत्र प्रथमदिने प्रेतशिलाकर्म। सकलदेशीयशिष्टाचारात्,

तीर्थे प्रेतशिलादौ च चरुणा सघृतेन च।
पितृनावाह्य तेभ्यश्च मन्त्रैः पिण्डांस्तु निर्वपेत्॥

इतिवायुपुराणे प्रेतशिलायाः प्रथमोल्लेखाच्च। एतच्च प्रेतपर्वतोक्तेतिकर्त्तव्यतया कार्यम्। प्रेतपर्वतेतिकर्त्तव्यतामभिधाय—

सर्वस्थानेषु चैवं स्यात् पिण्डदानं तु नारद।

इतिवायुपुराणात्। विशेषानुपदेशे सर्वत्र तादृशेतिकर्त्तव्यताप्रतीतेरिति मिश्राः। वस्तुतः प्रथमदिने तीर्थप्राप्तिनिमित्तकश्राद्धम्। द्वितीये प्रथमं प्रेतपर्वते ततः प्रेतशिलायां श्राद्धमुचितम्।

सर्वस्थानेषु चैवं स्यात पिण्डदानं तु नारद।
प्रेतपर्वतमारभ्य कुर्यात्तीर्थेषु च क्रमात्॥

इतिवायुपुराणात् । अत एव वायुपुराणे प्रथमदिने महानद्यां स्नानादिकमेवोक्तम् ।

गयायाश्च प्रवेशे तु पूर्वतोऽस्ति महानदी ।
तस्यास्तोयं समासाद्य स्नातव्यं तत्र निर्मलम् ॥
स्नात्वा च तर्पणं कुर्याद्देवादीनां यथाविधि ।
अपरेऽह्नि शुचिर्भूत्वा गच्छेच्च प्रेतपर्वतम् ॥

इत्यन्तेन प्रेतपर्वतश्राद्धमुक्त्वा,

नाम्ना प्रेतशिला ख्याता गयायां च विमुक्तये ।

इति चोक्तम् । प्रथमदिने फल्गुभिन्नमहानदीभागे स्नानम् । दिनान्तरे फल्गुस्नानविधानादिति ।

गयायां तीर्थप्राप्तिनिमित्तकमुण्डनोपवासौ न स्तः । दैवात्तद्दिने एकादशीपातेऽपि नोपवास इतिभ्रमः । प्रेतशिलादौ तु पितृव्यादीनामेकोद्दिष्टं पृथगेव कार्य्यम् ।

अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥

इतिवचनात् । पितृव्यादिश्राद्धं तु नैकप्रयोगेण । पित्रादिपार्वणे तत्प्रवेशप्रापकाभावात् ।

पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।

इतिवदत्र तादृशवचनाभावादिति ।

## अथ द्वितीयदिनकृत्यम् ।

तत्र वायुपुराणे,

अपरेऽह्नि शुचिर्भूत्वा गच्छेच्च प्रेतपर्वतम् ।
ब्रह्मकुण्डे ततः स्नात्वा देवादींस्तर्पयेत्सुधीः ॥
कृत्वाऽऽह्वानं पितॄणां तु प्रयतः प्रेतपर्वते ।
प्राचीनावीतिना भाव्यं दक्षिणाभिमुखः स्मरन् ॥

कव्यवालो नलः सोमो यमश्चैवार्यमा तथा ।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥
आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह ।
मदीयाः पितरो ये च कुले जाताः सनाभयः ॥
तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् ।
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ॥
आचम्योक्त्वा च पञ्चाङ्गं प्राणानायम्य यत्नतः ।
पुनरावृत्तिरहितब्रह्मलोकाप्तिहेतवे ॥
एवं सङ्कल्प्य विधिवत् श्राद्धं कुर्याद्यथाक्रमम् ।
पितॄनावाह्य चाभ्यर्च्य मन्त्रैः पिण्डप्रदो भवेत् ॥
तीर्थे प्रेतशिलादौ च चरुणा सघृतेन च ।
प्रक्षाल्य पूर्वतः स्थानं पञ्चगव्यैः पृथक्पृथक् ॥
स्वैर्मन्त्रैरथ सम्पूज्य पदे च पददेवताम् ।
यावत्तिला मनुष्यैस्तु गृहीताः पितृकर्माणि ॥
गच्छन्ति भीता असुराः सिंहत्रस्ता यथा मृगाः ।
दत्त्वा श्राद्धं सपिण्डानां तेषां दक्षिणभागतः ॥
कुशैरास्तीर्य तेषां तु सकृद्दत्त्वा तिलोदकम् ।
गृहीत्वाञ्जलिना तेभ्यः पितृतीर्थेन यत्नतः ॥
सक्तुना मुष्टिमात्रेण दद्यादक्षय्यपिण्डकम् ।
तिलाज्यदधिमध्वादि पिण्डद्रव्येषु योजयेत् ॥
सबन्धिनस्तिलाद्भिश्च कुशेष्वावाहयेत्ततः ।
एतांस्तु सर्वमन्त्रांश्च स्त्रीलिङ्गान्तान् समूह्य च ॥
पिण्डान् दद्याद्यथापूर्वं पितॄनावाह्य पूर्ववत् ।
स्वगोत्रे परगोत्रे वा दम्पत्योः पिण्डपातने ॥
अपृथङ्निष्फलं श्राद्धं पिण्डे चोदकतर्पणम् ।

पिण्डपात्रे तिलान् दत्त्वा पूरयित्वा शुभोदकैः ॥
मन्त्रेणानेन पिण्डांस्तान् प्रदक्षिणकरं यथा ।
परिषिञ्चेत्त्रिधा सर्वान् प्रणिपत्य क्षमापयेत् ॥
पितॄन् विसृज्य चाचम्य साक्षिणः श्रावयेत्सुरान् ।
सर्वस्थानेषु चैवं स्यात् पिण्डदानं तु नारद ॥
प्रेतपर्वतमारभ्य कुर्य्यात्तीर्थेषु च क्रमात् ।
तिलमिश्रांस्ततः सक्तून् निक्षिपेत् प्रेतपर्वते ॥
प्रेतत्वात्तु विमुक्ताः स्युः पितरस्तस्य नारद ।
प्रेतत्वं तस्य माहात्म्यादस्य चापि न विद्यते ॥
नाम्ना प्रेतशिला ख्याता गयायां तु विमुक्तये ।
तीर्थमूर्त्त्यादिरूपेण स्थित आदिगदाधरः ॥ इति ।

कृत्वाऽऽह्वानमिति । सुप्रक्षालितपाणिपाद आचान्तः कृतापसव्यो दक्षिणामुखः"कव्यवाल"इत्यादि "शाश्वतीम्"इत्यन्तं मन्त्रं पित्रावाहनरूपं पठेदित्यर्थः । आचम्येति । सव्येनाचम्य ओङ्कारव्याहृतिसप्तकगायत्रीशिरओङ्काररूपपञ्चाङ्गजपसहितान् प्राणानायम्य । सन्ध्यावन्दनवत् पूरककुम्भकरेचकात्मकप्राणायामं कुर्यादित्यर्थः । यत्तु पञ्चाङ्गं देशमासपक्षातिथिनिमित्तरूपमुक्त्वेत्यर्थ इति, तत्र सङ्कल्पस्य पुनरावृत्तीत्यादिना प्राणायामोत्तरं विधानेन पञ्चाङ्गोल्लेखस्य प्राणायामपूर्वं विधानेनानन्वयात् । न च प्राणायामशब्देनैवोङ्कारादिजपसहितप्राणसंयमवाचिना तत्सिद्धेः त्वन्मते पञ्चाङ्गमुक्त्वेत्यस्य वैयर्थ्यमिति वाच्यम् । प्राणायामपदस्य पूरकादित्रिष्वेव शक्तिर्न तु तादृशजपसहितेषु । अत एव सगर्भागर्भभेदेन प्राणायामो द्विविध इति हि योगशास्त्रे प्रपञ्चितम् । जपशून्यस्यैवागर्भत्वात् । तीर्थे प्रेतशिलादाविति । "सर्वस्थानेषु चैवं स्यात्"इतिवक्ष्यमाणातिदेशेन प्रेतशिलायामपि चरुणा

पिण्डदानं लभ्यते। तथापि प्रेतपर्व्वतातिरिक्तसकलतीर्थकृत्यानां प्रेतशिलाकृत्यपूर्वकत्वं दर्शयितुं प्रेतशिलादावित्युक्तम्। तथा च द्वितीयदिने प्रेतपर्वतकृत्यानन्तरमेव प्रेतशिलाकृत्यम्। अन्यथा तत्पूर्वकस्य तृतीयादिनकृत्यस्यानुपपत्तेः। एतेन प्रथमदिन एव प्रेतशिलाकृत्यमितिमिश्रमतमनादरणीयम्। कुशैरित्यादि। दक्षिणादानान्तं पार्वणं कृत्वा तद्वेदिदक्षिणत उपविश्य कृतापसव्यो दक्षिणामुखः कुशत्रयं धृत्वा "ओंकव्यवालो नलः सोम"इत्यादि "शाश्वतीम्" इत्यन्तं पूर्वलिखितमन्त्रं पठित्वा सकृत्तिलोदकाञ्जलिदानरूपमावाहनं कुर्य्यात्। तत एतानि पाद्यादीनि ओंपित्रादिभ्यो नम इति क्रमेण पञ्चोपचारेण पित्रादीन् सम्पूज्य।

ओं आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः।

इत्यादिमन्त्रेण पूर्ववदञ्जलिदानरूपं मिलितपित्राद्यावाहनं कृत्वा ओमद्य पितरमुकदेवशर्मन्नेष ते पिण्डः स्वधेति तिलाज्यदधिमध्वादिमिश्रं पिण्डं दद्यात्। एवमन्येषामपीति। वस्तुतश्चरुणा घृतेन च मन्त्रैः पिण्डप्रदो भवेदित्यन्वयात् प्रकृतश्राद्धीयपिण्डदानमेव द्रव्यविशेषविशेषितं विधीयते। अन्यथा मन्त्रैरित्यस्यामुख्यत्वापत्तेः। पित्रे पितामहायेत्यादीनां मुख्यमन्त्रत्वाभावात्। न च मन्त्रैः कव्यवाल इत्यादिमन्त्रैरावाह्येत्यन्वयः। तथापि तादृशमन्त्रकावाहनोत्तरत्वमात्रस्यैव विधानात्। एवं प्रकृतपिण्डदानानन्तरमेवाक्षय्यपिण्डदानमपि श्राद्धाङ्गभूतमेव। अपूर्वपिण्डदानान्तरविधौ गौरवात्। नच श्राद्धं कृत्वेत्यनेनैव सपिण्डकश्राद्धप्राप्तौ तद्वैयर्थ्यम्। श्राद्धपदस्यात्र त्यागविशेषमात्रवाचकत्वादिति। दत्त्वा श्राद्धमिति। सपिण्डानां पितामहादीनां पिण्डदानान्तं कर्म कृत्वेत्यर्थ इति। एतांस्त्विति। "मदीयाः पितरो ये च"इत्यादौ यथायोग्यं स्त्रीलिङ्गोहः का-

र्थः । पुंषोडशीवत् स्त्रीषोडश्यामूहः कार्य्य इत्यर्थ इति केचित् ।

अथ तृतीयदिने पञ्चतीर्थीकृत्यम् ।

वायुपुराणे,

आदौ तु पञ्चतीर्थेषु चोत्तरे मानसे विधिः ।
आचम्य कुशहस्तेन शिरश्चाभ्युक्ष्य वारिणा ॥
उत्तरं मानसं गच्छेन्मन्त्रेण स्नानमाचरेत् ।
उत्तरे मानसे स्नानं करोत्यात्मविशुद्धये ॥
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ।
स्नात्वाथ तर्पणं कुर्याद्देवादीनां यथाविधि ॥
आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
श्राद्धं सपिण्डकं कुर्य्यात् स्वसूत्रोक्तविधानतः ।
अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि ॥
मातुःश्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह ।
वृद्धिश्राद्धे च मात्रादि गयायां पितृपूर्वकम् ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ।
मातामहस्तत्पिता च प्रमातामहकादयः ॥
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ।
ओंनमो भानवे भर्त्रे सोमभौमस्वरूपिणे ॥
जीवभार्गवशनैश्चरराहुकेतुस्वरूपिणे ।
सूर्यं नत्वार्चयित्वा च सूर्यलोकं नयेत् पितॄन् ॥
मानसं हि सरो ह्यत्र तस्मादुत्तरमानसम् ।
उत्तरान्मानसान्मौनी व्रजेद्दक्षिणमानसम् ॥
उदीचीतीर्थमित्युक्तं तत्रोदीच्यां विमुक्तिदम् ।

उदीच्यां मुण्डपृष्ठस्य देवर्षिपितृसेवितम् ॥
मध्ये कनखलं तीर्थं पितॄणां मुक्तिदायकम् ।
स्नातः कनकवद्भाति नरो याति पवित्रताम् ॥
अतः कनखलं लोके ख्यातं तीर्थमनुत्तमम् ।
तस्य दक्षिणभागे तु तीर्थं दक्षिणमानसम् ॥
दक्षिणे मानसे चैवं तीर्थत्रयमुदाहृतम् ।
स्नात्वा तेषु विधानेन श्राद्धं कुर्यात्पृथक् पृथक् ॥
दक्षिणे मानसे स्नानं करोम्यात्मविशुद्धये ।
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ॥
नमामि सूर्य्यं तृप्त्यर्थं पितॄणां तारणाय च ।
पुत्रपौत्रधनैश्वर्य्यआयुरारोग्यवृद्धये ॥
ब्रह्महत्यादिपापौघघातनाय विमुक्तये ।
दिवाकर करोमीह स्नानं दक्षिणमानसे ॥
अनेन स्नानपूजादि कुर्याच्छ्राद्धं सपिण्डकम् ।
कृत्वा नत्वाऽथ मौनार्कमिमं मन्त्रमुदीरयेत् ॥
कव्यवालो नलः सोमो यमश्चैवार्यमा तथा ।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥
आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह ।
मदीयाः पितरो ये च कुले जाताः सनाभयः ॥
तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् ।
फल्गुतीर्थं व्रजेत्तस्मात् सर्वतीर्थोत्तमोत्तमम् ॥
मुक्तिर्भवति कर्तॄणां पितॄणां श्राद्धतः सुराः ।
ब्रह्मणा प्रार्थितो विष्णुः फल्गुको ह्यभवत् पुरा ॥
दक्षिणाग्नौ हुतं नूनं तद्रवं फल्गुतीर्थकम् ।
यस्मिन् फलति फल्गुर्गौः कामधेनुर्जलं मही ॥

सृष्टिरन्तर्गतं यस्मात् फल्गुतीर्थे न निष्फलम् ।
तीर्थानि यानि सर्वाणि भुवनेष्वखिलेषु च ॥
तानि स्नातुं समायान्ति फल्गुतीर्थे सुरैः सह ।
गङ्गा पादोदकं विष्णोः फल्गुस्त्वादिगदाधरः ।
स्वयं हि द्रवरूपेण तस्माद्गङ्गाधिकां विदुः ॥
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ।
नासौ तत्फलमाप्नोति फल्गुतीर्थे यदाप्नुयात् ॥
फल्गुतीर्थे विष्णुजले करोमि स्नानमादृतः ।
पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये ॥
फल्गुतीर्थे नरः स्नात्वा तर्पणं श्राद्धमाचरेत् ।
सपिण्डकं स्वसूत्रोक्तं नमेदथ पितामहम् ॥
ओंनमः शिवाय देवाय ईशानपुरुषाय च ।
अघोरवामदेवाय सद्योजाताय शम्भवे ॥
नत्वा पितामहं देवं मन्त्रेणानेन पूजयेत् ।
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ॥
आत्मानं पितृभिः सार्द्धं तन्नयेद्वैष्णवं पुरम् ।
ओंनमो वासुदेवाय नमः सङ्कर्षणाय च ॥
प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे ।
पञ्चतीर्थ्यां नरः स्नात्वा ब्रह्मलोकं नयेत्पितॄन् ॥
अमृतैः पञ्चभिः स्नानं पुष्पवस्त्राद्यलङ्कृतिम् ।
न कुर्याद्यो गदापाणेस्तस्य श्राद्धमनर्थकम् ॥ इति ।

आदाविति । पञ्चतीर्थीकर्मणि आदावुत्तरमानसे विधिरित्यर्थः । "उत्तरे मानसे" इत्यादिमन्त्रं प्रकृतस्नानीयमन्त्रानन्तरं पठित्वा मज्जेदित्यर्थः । आगन्तुकानामन्ते विनिवेश इति न्यायात् । उत्तरमानसस्नानस्य पापक्षयः सूर्यलोकादिसंसि-

द्धिः पितृमुक्तिश्च फलम्। योगसिद्धिर्गयायादेकैकफलकामनया कार्य्यम्। समुच्चितमेव फलमित्यन्ये। एवं प्रकृततर्पणानन्तरम् "आब्रह्मस्तम्ब"इत्यादिना मन्त्रेण देवविधिना एकोऽञ्जलिर्देयः। ततः पित्रादिमात्रादिमातामहादीनां पार्वणं कृत्वा प्रेतशिलावदक्षय्यपिण्डं दद्यादिति। वृद्धीति। आभ्युदयिकं मातृपक्रमकं कार्य्यं गयायां पितृपक्रमकमित्यर्थः। अत्र च पित्रादीनां शाश्वतब्रह्मलोकप्राप्तिः फलम्।

शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे।
यन्नाम्ना पातयेत्पिण्डं तन्नयेद्ब्रह्म शाश्वतम्॥

इतिवचनात्। उत्तरमानसस्यापि गयाशिरोऽभ्यन्तरत्वात्। सूर्य्यमिति। सूर्य्यनमस्कारस्य पितृणां सूर्य्यलोकनयनं फलम्। एवं सूर्यार्चनस्यापि। उभयत्रैव "ओं नमो भानवे" इत्यादिमन्त्रः। उत्तरमानसश्राद्धस्याक्षयपितृतृप्तिर्वा फलम्। पुष्करेष्वक्षयं श्राद्धमित्युपक्रम्य—

एवं गयाशीर्षेऽक्षयवटे फल्गुतीर्थे उत्तरमानसे मतङ्गवाप्यां च।

इति विष्णुवचनात्। दक्षिणमानसं तु त्रिधा विभक्तम्। उत्तरभाग उदीचीतीर्थं मध्यभागः कनखलं दक्षिणभागो दक्षिणमानसमिति। अत्र प्रत्येकं तीर्थत्रये स्नाने श्राद्धे च पितृमुक्तिः फलम्। दक्षिणमानसस्नाने तु "ओंदक्षिणे मानसे"इत्यादिः "ब्रह्महत्यादि"इत्यादिश्च मन्त्रः पठनीयः। "नमामि सूर्य"इत्यादिना मन्त्रेण दक्षिणार्कं पूजयेत् नमेच्च। अत्र सर्वं मौनेन कार्य्यम्। अतोऽयं मौनार्कनामा। ततः "कव्यवाल"इतिमन्त्रस्तत्रैव पठनीयः। ततः फल्गुतीर्थं गच्छेत्। मुक्तिरिति। श्राद्धकर्तृणां ये पितरस्तेषां मुक्तिर्भवतीत्यर्थः। कर्तुः पितुश्च मुक्तिः फलमित्यन्ये। ब्रह्मणेति। विष्णुः फल्गुनदीरूपोऽभवद्दक्षिणाग्नौ यद्ब्रह्मणा हुतं तत् फल्गुती-

र्थमभूदिति 'तद्धृतम्'इत्यस्यार्थः । तद्द्रव इतिपाठे तस्य घृतस्य द्रवो रसो यस्मिन् । कामधेनुगवाभिन्नफलत्वात्मकं जलं मही च तत्र निष्पन्नम् । अन्तर्गतम्, अन्तःसलिलसरस्वतीवदन्तः प्रविष्टमित्यर्थः । तत्र "फल्गुतीर्थे"इत्यनेन स्नात्वा तर्पयेत् । तत्र च स्वधोदीरणानन्तरं प्रीणपार्थानिप्रयोज्यम् । "पितॄणां विष्णुलोकाय"इतिमन्त्राल्लिङ्गात् पितॄणां विष्णुलोकाप्तिः स्वस्य भुक्तिमुक्तिप्रसिद्धिश्च फल्गुस्नानफलम् । ततः स्वसूत्रोक्तविधिना पितृमुक्तिकामनया सापिण्डकं श्राद्धं कार्यम् । नत्वेदधेति । मधुस्रवादक्षिणकूलस्थं पितामहं "नमः शिवाय"इत्यादिमन्त्रेण नमेत् पूजयेच्च । फल्गुतीर्थं इति । ततः पुनर्गदाधरप्राच्यां फल्गुतीर्थे पित्रादिसहितात्मवैष्णवपदकामनया तत्र स्नात्वा गदाधरं पश्येत् । वस्तुतस्तर्पणादिव्यवहितमपि पूर्वोक्तस्नानमनूद्य गदाधरदर्शनं विधीयते न तु स्नानान्तरम् । अपूर्वान्तरकल्पनापत्तेः । "ओं नमो वासुदेवाय"इत्यादिमन्त्रेण दर्शनस्पर्शनपञ्चामृतस्नानगन्धपुष्पालङ्कारादि गदाधरस्य कुर्य्यात् । इदमावश्यकम् । पञ्चतीर्थ्यामिति । उत्तरमानसोदीचीतीर्थकनखलदक्षिणमानसफल्गुरूपपञ्चतीर्थीस्नानस्य फलान्तरविधानमिति । मिश्रास्तु पितृब्रह्मलोकनयनकामनया पुनः पञ्चतीर्थीस्नानं कृत्वा गदाधरस्नानादि कारयेदित्याहुः ।

### अथ पञ्चतीर्थीदिनोत्तरदिनकृत्यम् ।

वायुपुराणे,

प्रथमेऽह्नि विधिः प्रोक्तो द्वितीये दिवसे व्रजेत् ।
धर्मारण्यं तत्र धर्मो यस्माद्यागमकारयत् ॥
मतङ्गवाप्यां स्नात्वा तु तर्पणं श्राद्धमाचरेत् ।
गत्वा नत्वा मतङ्गेशमिमं मन्त्रमुदीरयेत् ॥

प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ।
मयाऽऽगत्य मतङ्गेऽस्मिन् पितॄणां निष्कृतिः कृता ॥
पूर्ववद्ब्रह्मतीर्थे च कूपे श्राद्धादि कारयेत् ।
तत्कूपयूपयोर्मध्ये कुर्वंस्तु त्रायते पितॄन् ॥
धर्म्मं धर्म्मेश्वरं नत्वा महाबोधितरुं नमेत् । इति ।

प्रथमेऽह्नीति । पञ्चतीर्थीकृत्यदिनाद्यपेक्षया तस्य प्रथमत्वम् ।

प्रथमे दिवसे तीर्थे गत्वा तूत्तरमानसे ।

इत्यग्निपुराणादावप्येवमेव प्रथमत्वम् । धर्मारण्य एव मतङ्गवापी । तत्र स्नाने सर्वपापविमुक्तिः फलम् । पुष्करे स्नानमात्रतः सर्वपापेभ्यः पूतो भवतीत्युपक्रम्य —

एवमेव फल्गुतीर्थे उत्तरमानसे मतङ्गवाप्याम् ।

इतिविष्णुस्मृतेः । श्राद्धे तु अक्षया पितृतृप्तिः फलम् । "पुष्करेष्वक्षयं श्राद्धम्"इत्यादि–"मतङ्गवाप्यां च"इतिविष्णुवचनात् । पूर्ववदिति । मतङ्गवाप्यामिव ब्रह्मतीर्थसंज्ञके कूपेऽपि श्राद्धं कुर्य्यात् । श्राद्धफलं स्वर्गः विश्वजिन्न्यायात् । श्राद्धादीत्यादिपदात्तर्पणसङ्ग्रहः । तत्कूपेति । इदं च पूर्वोक्तकूपश्राद्धापेक्षया कूपयूपयोर्मध्ये श्राद्धान्तरम् । न तु पूर्वोक्तश्राद्धस्यैव कूपयूपमध्यात्मकदेशविधायकमिदम् । देशकालविशेषसाधनत्वयोर्विधाने वाक्यभेदापत्तेरित्येके । परे तु प्रयोगविधौ विधेयभेदेऽपि न वाक्यभेदः । यथा "स्वाराज्यकामो राजा राजसूयेन यजेत"इत्यादौ । अन्यथा तत्र कर्तुः फलविशेषवत्त्वस्य च विधेयस्य भेदेन तथात्वापत्तेरित्याहुः । ततो धर्मधर्मेश्वरौ नत्वा महाबोधितरुमश्वत्थं नमेत् ।

महाबोधितरुं गत्वा पिण्डदः स्वर्गलोकभाक् ।

इति अग्निपुराणात्तन्मूले पिण्डमपि दापयन्ति ।

अथ पञ्चतीर्थीदिनापेक्षया तृतीयदिनकृत्यम् ।

वायुपुराणे,

तृतीये ब्रह्मसरसि कुर्याच्छ्राद्धं सपिण्डकम् ।
स्नानं करोमि तीर्थेऽस्मिन् ऋणत्रयविमुक्तये ॥
श्राद्धाय पिण्डदानाय तर्पणायात्मशुद्धये ।
तत्कूपयूपयोर्मध्ये कुर्वंस्तारयते पितॄन् ॥
स्नानं कृत्वोच्छ्रितो यूपो ब्रह्मणा यूप इत्युत ।
कृत्वा ब्रह्मसरःश्राद्धं ब्रह्मलोकं नयेत्पितॄन् ॥
गोप्रचारसमीपस्था आम्रा ब्रह्मप्रकल्पिताः ।
तेषां सेचनमात्रेण पितरो मोक्षगामिनः ॥
आम्रं ब्रह्मसरोद्भूतं सर्वदेवमयं तरुम् ।
विष्णुरूपं प्रसिञ्चामि पितॄणां चैव मुक्तये ॥
आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया ह्यर्थकरी प्रसिद्धा ।
आम्रस्य मूले सलिलं ददानो नोपेक्षणीयो विबुधैर्मनुष्यः ॥
यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत् ।
ब्रह्माणं च नमस्कृत्य पितॄन् ब्रह्मपुरं नयेत् ॥
ओंनमो ब्रह्मणेऽजाय जगज्जन्मादिकारिणे ।
भक्तानां च पितॄणां हि तारणाय नमो नमः ॥
ततो यमबलिं क्षिप्त्वा मन्त्रेणानेन संयतः ॥
यमराजधर्मराजौ निश्चलार्थं हि संस्थितौ ।
ताभ्यां बलिं प्रयच्छामि पितॄणां मुक्तिहेतवे ॥
ततः श्वानबलिं दद्यान्मन्त्रेणानेन नारद ।
वैवस्वतकुलोद्भूतौ द्वौ श्यावशबलौ सुतौ ॥
ताभ्यां पिण्डं प्रयच्छामि रक्षेतां पथि सर्वदा ।
ततः काकबलिं दत्त्वा पुनः स्नानं समाचरेत् ॥

ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयोज्झितम्॥ इति।

सपिण्डकमिति पिण्डस्य प्राशस्त्यबोधनाय। अक्षय्यपिण्डसहितमित्यर्थ इतिमिश्राः। ब्रह्मसरः स्नानफलम्—ऋणत्रयविमुक्तिः श्राद्धाद्यर्थमात्मशुद्धिश्च मन्त्रलिङ्गात्। पापक्षय एव फलमितिमिश्राः। तत्रानुपस्थितफलकल्पने गौरवादिति। तत्कूपेति। "स्नानं करोमि" इतिमन्त्रेण स्नात्वा कूपयूपयोर्मध्ये पितृतारणकामनया श्राद्धं कुर्यादित्यर्थः। उच्छ्रित इत्यस्य ब्रह्मणेत्यादिः। स एव ब्रह्मयूप इति प्रसिद्ध इत्यर्थः। कृत्वेति। श्राद्धं कृत्वा पितॄन् ब्रह्मलोकं नयेदित्यर्थः। अनयोः फलयोः समुच्चय इति मिश्राः। तत्र मानाभावाद्विकल्प इत्यन्ये। ततो गोप्रचारसमीपस्थं यं कञ्चिदाम्रं "आम्रम्" इत्यादिमन्त्रेण शिष्टाचारात् ब्रह्मसरोजलेन पितृमोक्षकामनया सिञ्चेत्। आम्रा इत्यत्र बहुत्वमविवक्षितम्। अत एव मन्त्रे आम्रमित्येकवचनम्। ओंनमो ब्रह्मण इति ब्रह्मनमस्कारमन्त्रः। ततो यमराजेत्यादिमन्त्रेण तयोर्बलिः। वैवस्वतेतिमन्त्रेण श्वबलिः। "ऐन्द्र" इतिमन्त्रेण काकबलिस्ततः स्नानमिति।

**अथ पञ्चतीर्थादिनापेक्षया चतुर्थदिनकृत्यम्।**

**वायुपुराणे,**

फल्गुतीर्थे चतुर्थेऽह्नि स्नानादिकमथाचरेत्।
गयाशिरस्यथ श्राद्धं पदे कुर्यात् सपिण्डकम्॥
साक्षाद्गयाशिरस्तत्र फल्गुतीर्थाश्रयं कृतम्।
क्रौञ्चपादात् फल्गुतीर्थं यावत्साक्षाद्गयाशिरः॥
गयाशिरे नगाद्याश्च साक्षात्तत्फल्गुतीर्थकम्।
मुखं गयासुरस्यैतन् स्नात्वा श्राद्धमथाक्षयम्॥

आद्यो गदाधरो देवो व्यक्ताव्यक्तात्मना स्थितः ।
विष्ण्वादिपदरूपेण पितॄणां मुक्तिहेतवे ॥
तत्र विष्णुपदं दिव्यं दर्शनात्पापनाशनम् ।
स्पर्शनात् पूजनाद्यैश्च पितॄणां मोक्षदायकम् ॥
श्राद्धं सपिण्डकं कृत्वा कुलसाहस्रमात्मनः ।
विष्णुलोकं समुद्धृत्य नयेद्विष्णुपदं नरः ॥
श्राद्धं कृत्वा रुद्रपदे नयेत् कुलशतं नरः ।
सहात्मना शिवपुरं तथा ब्रह्मपदे नरः ॥
ब्रह्मलोकं कुलशतं समुद्धृत्य नयेत्पितॄन् ।
दक्षिणाग्निपदे श्राद्धी वाजपेयफलं लभेत् ॥
गार्हपत्यपदे श्राद्धी राजसूयफलं लभेत् ।
श्राद्धं कृत्वाऽऽहवनीये वाजिमेधफलं लभेत् ॥
श्राद्धं कृत्वा सभ्यपदे ज्योतिष्टोमफलं लभेत् ।
आवसथ्यपदे श्राद्धी सोमलोकमवाप्नुयात् ॥
श्राद्धं कृत्वा चेन्द्रपदे शक्रलोकं नयेत्पितॄन् ।
श्राद्धी सूर्यपदे पञ्चपापिनोऽर्कपुरं नयेत् ॥
कार्त्तिकेयपदे श्राद्धी शिवलोकं नयेत्पितॄन् ।
श्राद्धं कृत्वागस्त्यपदे ब्रह्मलोकं नयेत्पितॄन् ॥
कश्यपस्य पदे श्राद्धी पितॄन् ब्रह्मपदं नयेत् ।
अन्येषां च पदे श्राद्धी पितॄन् ब्रह्मपुरं नयेत् ॥
सर्वेषां कश्यपं श्रेष्ठं विष्णो रुद्रस्य वै पदम् ।
ब्रह्मणश्च पदं चापि श्रेष्ठं तत्र प्रकीर्त्तितम् ॥
प्रारम्भे च समाप्तौ च तेषामन्यतमं स्मृतम् ।
श्रेयस्करं भवेत्तत्र श्राद्धकर्त्तुश्च नारद ॥
कश्यपस्य पदे दिव्ये भारद्वाजो मुनिः पुरा ।

श्राद्धं कृत्वोद्यतो दातुं पित्रादिभ्यश्च पिण्डकम् ॥
शुक्लकृष्णौ ततो हस्तौ पदमुद्भिद्य निर्गतौ ।
दृष्ट्वा हस्तद्वयं तत्र पितृसंशयमागतः ॥
ततः स्वमातरं शान्तां भारद्वाजस्तु पृष्टवान् ।
कश्यपस्य पदे कस्मिन् शुक्ले कृष्णेऽथ वा करे ॥
पिण्डो देयो मया मातर्जानासि पितरं वद ।

शान्तोवाच ।

भारद्वाज महाप्राज्ञ पिण्डं कृष्णाय देहि भोः ।
भारद्वाजस्ततः पिण्डं दातुं कृष्णाय चोद्यतः ॥
श्वेतोऽदृश्योऽब्रवीत्पुत्रं देहि सत्यं ममौरसः ।
कृष्णोऽब्रवीत् क्षेत्रजस्त्वं ततो मे देहि पिण्डकम् ॥
शुक्लोऽब्रवीत् स्वैरिणीयं यतोऽतस्त्वं ममौरसः ।
स्वैरिणीत्वाद्ददौ चादौ क्षेत्रिणे बीजिने ततः ॥
हंसयुक्तेन यानेन ब्रह्मलोकमुभौ गतौ ।

अनेनोपाख्यानेन जारजस्यापि गयायां पिण्डदानेऽधिकारो गम्यते ।

भीष्मो विष्णुपदे श्राद्ध आहूय तु पितॄन् स्वकान् ।
श्राद्धं कृत्वा विधानेन पिण्डदानाय चोद्यतः ॥
पितुर्विनिर्गतौ हस्तौ गयाशिरसि शन्तनोः ।
भीष्मः पिण्डं ददौ भूमौ नाधिकारः करे यतः ॥
शन्तनुः प्राह संतुष्टः शास्त्रार्थे निश्चलो भवान् ।
त्रिकालदृष्टिर्भवतु अन्ते विष्णुश्च ते गतिः ॥
स्वेच्छया मरणं चास्तु इत्युक्त्वा मुक्तिमागतः ।
रामो रुद्रपदे रम्ये पिण्डार्पणकृतोद्यमः ॥
पिता दशरथः स्वर्गात् प्रसार्य करमागतः ।

नादात् पिण्डं करे रामो ददौ रुद्रपदे ततः ॥
शास्त्रार्थातिक्रमाद्भीतो रामं दशरथोऽब्रवीत् ।
तारितोऽहं त्वया पुत्र रुद्रलोको ह्यभून्मम ॥
पदे पिण्डप्रदानेन हस्ते तु स्वर्गतिर्न हि ।
त्वं च राज्यं चिरं कृत्वा पालयित्वा प्रजादिकम् ॥
यज्ञान् सदक्षिणान् कृत्वा विष्णुलोकं गमिष्यसि ।
सहायोध्याजनैः सर्वैः कृमिकीटादिभिः सह ॥
इत्युक्त्वा दशरथः पुत्रं रुद्रलोकं परं ययौ ।
तथा,
गयाशिरसि यः पिण्डं येषां नाम्ना तु निर्वपेत् ।
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥
गयाशिरसि यः पिण्डं शमीपत्रप्रमाणतः ।
कन्दमूलफलाद्यैर्वा दद्यात् स्वर्गं नयेत्पितॄन् ॥
पदानि यत्र दृश्यन्ते विष्ण्वादीनां तदग्रतः ।
श्राद्धं कृत्वा तेषु पिण्डान् तेषां लोकं नयेन्नरः ॥
सर्वत्र मुण्डपृष्ठाद्रिः पदैरेभिः सुलक्षितः ।
प्रयान्ति पितरः सर्वे ब्रह्मलोकमनामयम् ॥ इति ।

साक्षादिति । फल्गुतीर्थसमीपस्थगयाशिरोभागोऽतिशस्त इत्यर्थः । क्रौञ्चपादादिति । क्रौञ्चपादस्तु मुण्डपृष्ठे ।

क्रौञ्चरूपेण हि मुनिर्मुण्डपृष्ठे तपोऽकरोत ।
तस्य पादाङ्कितो यस्मात् क्रौञ्चपादस्ततः स्मृतः ॥

इति वायुपुराणात् । एवं च क्रौञ्चपादादारभ्य प्राग्दिशि फल्गुपर्य्यन्तं गयाशिरोऽतिप्रशस्तमित्यर्थः । व्यक्तेति । प्रतिमा व्यक्तं,पदादि अव्यक्तमिति। पञ्चपापिनः,पञ्चमहापातकयुक्तान्। श्रेयस्करं मोक्षकरम् । 'श्रेयो निःश्रेयसामृतम्'इति कोषात् । पदे

श्राद्धं कर्तुरपि मोक्षहेतुरित्यर्थः। अत्र गयाशिरःश्राद्धं पदश्राद्धभिन्नमपि प्रसङ्गात् पदश्राद्धेनैव तन्निष्पद्यते मघात्रयोदशीश्राद्धेन पक्षश्राद्धवदिति। पदश्राद्धेषु यद्यपि ब्रह्मविष्णुरुद्रकश्यपपदानामन्यतममेवारम्भे समाप्तौ च विहितं तथापि रुद्रपदे आरम्भः कार्य्यः। फल्गुतीर्थे चतुर्थेऽह्नि स्नात्वा देवादितर्पणम्।

कृत्वा श्राद्धं गयाशीर्षे कुर्याद्रुद्रपदादिह।

इतिगारुडादिति मिश्राः। वस्तुतो वायुपुराणरीत्या करणे गारुडक्रमो न ग्राह्यः। किन्तु "तत्र विष्णुपदं दिव्यम्" इत्यादिपाठक्रमात् प्रथमं विष्णुपदे चरममुक्तान्यतमपदे श्राद्धं कार्य्यम्। ऋजवस्तु—

क्रमतोऽक्रमतो वापि गयायात्रा महाफला।

इत्यग्निपुराणात् येन केन चित्क्रमेण कार्य्यमित्याहुः।

अथ पञ्चतीर्थीदिनापेक्षया पञ्चमदिनकृत्यम्।

वायुपुराणे,

पञ्चमेऽह्नि गदालोले कृत्वा स्नानादि पूर्ववत्।
श्राद्धं सपिण्डकं कुर्य्यात्ततोऽक्षयवटे नरः॥
तत्र श्राद्धादिकं कृत्वा पितॄन् ब्रह्मपुरं नयेत्।
ब्रह्मप्रकल्पितान् विप्रान् भोजयेत्पूजयेदथ॥
कृतश्राद्धोऽक्षयवटे ह्यनेनैव प्रयत्नतः।
दृष्ट्वा नत्वा च सम्पूज्य वटेशं च समाहितः॥
पितॄन्नयेत् ब्रह्मपुरमक्षयं च सनातनम्।
गयायां धर्मपृष्ठे च सदसि ब्रह्मणस्तथा॥
गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम्। इति।

स्नानमन्त्रस्तु—

गदालोले महातीर्थे गदाप्रक्षालने ह्रदे।

स्नानं करोमि शुद्ध्यर्थमक्षयाय स्वराप्तये ॥

तथा चात्र पापक्षयस्वर्गप्राप्तिः फलम्। अयं मन्त्रः सकलस्नानमन्त्रान्ते पाठ्यः। स्नानादीत्यादिपदात्तर्पणश्राद्धसङ्ग्रहः। अक्षयवटश्राद्धफलमाह—तत्रेत्यादि। परे तु स्नानादीत्यादिना तर्पणसङ्ग्रहः। ततोऽक्षयवटे नरः, श्राद्धं कुर्य्यादित्यनुपज्यते इत्याहुः। ब्रह्मेति। श्राद्धे भोजनं ब्रह्मस्थापितविप्राणां कारयेत्। तत्र 'विप्रान' इति बहुवचनं यावन्तोऽपेक्षितास्तत्परं न तु कपिञ्जलन्यायात् त्रयपरम्। वटप्रकरणे—

एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता।

इत्यवयुत्यानुवादः "एकं वृणीते" इत्यादिवदित्येके। ब्राह्मणत्रयं श्राद्धात्पृथगेव भोजयेदितिमिश्राः। परे तु श्राद्धेन एव अन्न वा तान् विप्रान् भोजयेत्पूजयेच्च। अलाभे ब्राह्मणान्तरमपि। अत एव—

ये युष्मान् पूजयिष्यन्ति गयायामागता नराः।
हव्यकव्यैर्द्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत् ॥
नरकात् स्वर्गलोकाय स्वर्गलोकात्परां गतिम्।

इत्यग्निपुराणे हव्यधनयोः पृथगुपादानम्। न च धनपदं तद्दाक्षिणापरम्। श्राद्धैरित्यनेन साङ्गस्य तस्य प्रापणादित्याहुः। वटश्राद्धं तु पाकेनैव कार्यमिति वदन्ति। दृष्ट्वेति। वटेशं दृष्ट्वा।

एकार्णवे वटस्याग्रे यः शेते योगनिद्रया।
बालरूपधरस्तस्मै नमस्ते योगशायिने ॥
इतिमन्त्रेण नमेत् पूजयेच्चेत्यर्थः। ततश्च
संसारवृक्षशस्त्रायाशेषपापक्षयाय च।
अक्षयब्रह्मदात्रे च नमोऽक्षयवटाय वै ॥

इतिमन्त्रेण वटं नत्वा पूजयेत् । वायुपुराणे तथैवाभिधानात् । ततश्च

कलौ माहेश्वरा लोका येन तस्माद्गदाधरः ।
लिङ्गरूपोऽभवत्तं च वन्दे श्रीप्रपितामहम् ॥

इतिमन्त्रेण प्रपितामहं नत्वा पूजयेदिति । गयायामित्यादिनाऽक्षयवटश्राद्धस्याक्षयपितृतृप्तिः पूर्वापेक्षया फलान्तरं दर्शितम् । एवं क्रमेण सप्तदिनपर्यन्तं गयायां कर्मानुष्ठेयम् । अन्येषु तीर्थेषु गयामध्यपातिषु यथासम्भवमुपित्वा काम्यं कर्मानुष्ठेयम् । तद्यथा—

वायुपुराणे,

उपोषितोऽथ गायत्रीतीर्थे महानदीस्थिते ।
गायत्र्याः पुरतः स्नातः प्रातः सन्ध्यां समाचरेत् ॥
श्राद्धं सपिण्डकं कृत्वा नयेद्ब्राह्मणतां कुलम् ।
तीर्थे समुद्यते स्नात्वा गायत्र्याः पुरतो नरः ॥
सन्ध्यामुपास्य मध्याह्ने नयेत्कुलशतं दिवम् ।
प्राचीसरस्वतीस्नातः सरस्वत्यास्ततोऽग्रतः ॥
सन्ध्यामुपास्य सायाह्ने नयेत्सर्वज्ञतां कुलम् ।
बहुजन्मकृतात् सन्ध्यालोपान्मुक्तस्त्रिसन्ध्यकृत् ॥
विशालायां लेलिहाने तीर्थे च भरताश्रमे ।
पादाङ्किते मुण्डपृष्ठे गदाधरसमीपतः ॥
तीर्थे आकाशगङ्गायां गिरिकर्णमुखेषु च ।
श्राद्धदः पिण्डदो ब्रह्मलोकं कुलशतं नयेत् ॥
स्नातो गोदो वैतरण्यां त्रिःसप्तकुलमुद्धरेत् ।
देवनद्यां गोप्रचारे तथा मानसके पदे ॥
पुष्करिण्यां घृतकुल्यां मधुकुल्यां तथैव च ।

पुष्करिण्यां गदालोले तीर्थे चामरके तथा ॥
कोटितीर्थे रुक्मकुण्डे पिण्डदः स्वर्नयेत्पितॄन् ।
मार्कण्डेयेशकोटीशौ नत्वा स्यात्पितृतारकः ॥ इति ।

उपोषित इति । पूर्वदिने कृतोपवासः गयाग्राममध्यस्थगायत्रीसम्मुखप्राग्देशे महानदीस्थे गायत्रीतीर्थे स्नानसन्ध्यावन्दनश्राद्धानि कुर्यादित्यर्थः । अत्र श्राद्धस्य कुलब्राह्मणतानयनं, स्नानसन्ध्यावन्दनयोर्विश्वजिन्न्यायात् स्वर्गः फलमितिमिश्राः । तयोरपि कुलब्राह्मणतानयनं फलम् उपस्थितत्वात् अनुपस्थितस्वर्गकल्पने गौरवादिति तु साधीयः । बह्विति । सन्ध्यात्रयवन्दने बहुजन्मकृतसन्ध्यालोपजनितपापमुक्तिः फलमित्यर्थः । विशालायामिति । विशालादितीर्थसप्तकेऽन्यतमस्मिन् श्राद्धे पिण्डदाने वा कुलशतब्रह्मलोकनयनं फलमित्यर्थः । स्नात इति । स्नात्वा गोदः गोदानकर्ता । गोदा वैतरण्यामिति पाठे गोदातीर्थे वैतरण्यां च स्नात इत्यर्थः । प्रत्येकमेकविंशतिकुलोद्धारः फलमिति । वैतरणी च भस्मकूटस्थितदेवनदीपूर्वतः । तत्र च सन्तरणमाचारात्कार्य्यम् । तत्र आचारप्राप्तो मन्त्रः—

या सा वैतरणी नाम नदी त्रैलोक्यविश्रुता ।
सावतीर्णा महाभागा पितॄणां तारणाय वै ॥ इति ।

देवनद्यामिति । देवनद्यादिदशके पिण्डदाने प्रत्येकं पितृस्वर्गनयनं फलमित्यर्थः ।

## अथ पाण्डुशिलादिमाहात्म्यम् ।

केन चित्कारणेन शिवेन शप्तो मरीचिनामा मुनिस्तत्र तपस्यन् पाण्डुरभूत् । ततो ब्रह्मादिभिर्वरं वृणीष्वेत्युक्तो मरीचिराह—

हरशापाद्विमुक्तोऽहं शिला भवतु पावनी ।
पितृमुक्तिकरी च स्यात्तथेत्युक्त्वा दिवं ययुः ॥

पाण्डुशिलेति सा प्रोक्ता श्राद्धं तत्राक्षयं भवेत् ।
पाण्डुशिला चेयं पितामहसमीपस्थचम्पकवनेऽस्ति ।

**तथा,**

घृतकुल्या मधुकुल्या देविका च महानदी ।
शिलायां सङ्गतास्तत्र मधुस्रवा प्रकीर्त्तिता ॥
अयुतं ह्यश्वमेधानां स्नानकृल्लभते नरः ।
तर्पयित्वा पितॄणां च श्राद्धं कृत्वा सपिण्डकम् ॥
सहस्रकुलमुद्धृत्य नयेद्विष्णुपदं नरः ।
उद्भिदः स्वेदजा वापि ह्यण्डजा ये जरायुजाः ॥
मधुस्रवां समासाद्य मृता विष्णुपुरं ययुः ।

घृतकुल्येति । एताश्चतस्रो मुण्डपृष्ठदक्षिणभागे शिलासङ्गता मधुस्रवापदवाच्या भवन्ति । अत्र स्नानेऽश्वमेधायुतफलम् । तर्पणे सपिण्डकश्राद्धे च सहस्रकुलोद्धरणपूर्वकविष्णुलोकनयनं फलमित्यर्थः । उद्भिद इति । मधुस्रवायां मरणे विष्णुलोकगमनं फलमित्यर्थः ।

**तथा,**

दशाश्वमेधिके हंसतीर्थे श्राद्धी दिवं व्रजेत् ।
दशाश्वमेधहंसौ च नत्वा शिवपुरं व्रजेत् ॥
पितामहाद्दक्षिणतो महानद्यां दशाश्वमेधः ।

**तथा,**

मतङ्गस्य पदे श्राद्धी नयेद्ब्रह्मालयं पितॄन् ।
निर्मथ्याग्निं शमीगर्भे विधिविष्ण्वादिभिः सह ॥
मथोयज्ञं हि तत्तीर्थं पितॄणां मुक्तिदायकम् ।
तर्पणात् पिण्डदानाच्च स्नानकृन्मुक्तिमाप्नुयात् ॥
पितॄन् स्वर्गं नयेन्नत्वा रामेशाङ्गारकेश्वरौ ॥

गयाकूपे पिण्डदानादश्वमेधफलं लभेत् ।
भस्मकूपे भस्मनाथ स्नात्वा तारयते पितॄन् ॥
धौतपादेऽथ निःक्षीरासङ्गमे स्नानकृन्नरः ।
श्राद्धी रामपुष्करिण्यां ब्रह्मलोकं नयेत्पितॄन् ॥
सुषुम्नायां महाकोष्ठ्यां त्रिःसप्तकुलमुद्धरेत् ।
स्नातो नत्वा वसिष्ठेशं तस्य तीर्थेऽश्वमेधभाक् ॥
पिण्डदो धेनुकारण्ये कामधेनुपदेषु च ।
स्नातो नत्वा कामधेनुं ब्रह्मलोकं नयेत्पितॄन् ॥
कर्दमाने गयानाभौ मुण्डपृष्ठसमीपतः ।
स्नात्वा श्राद्धी नयेत्स्वर्गं पितॄन् नत्वा च चण्डिकाम् ॥
फल्गुचण्डीश्मशानाख्यसङ्गमेशान् समर्च्य च ।
गयागजो गयादित्यो गायत्री च गदाधरः ।
गया गयाशिरश्चैव षड् गया मुक्तिदायिकाः ॥
गयायां तु वृषोत्सर्गात् त्रिःसप्तकुलमुद्धरेत् ।
यत्र तत्र स्थितो विप्र उदितो विजितेन्द्रियः ॥
आद्यं गदाधरं ध्यायन् श्राद्धपिण्डादि कारयेत् ।
कुलानां शतमुद्धृत्य ब्रह्मलोकं नयेद्ध्रुवम् ।
ततो दध्योदनेनैव दत्त्वा नैवेद्यमुत्तमम् ।
जनार्दनाय देवाय समभ्यर्च्य यथाविधि ॥
दद्यादक्षय्यपिण्डांस्तु तत्क्षेपेणैव जीवताम् ।
दैत्यस्य मुण्डपृष्ठे तु यस्मात्सा संस्थिता शिला ।
तस्मादसौ मुण्डपृष्ठः पितॄणां ब्रह्मलोकदः ।
रामे वनं गते शैलमालम्ब्य भरतः स्थितः ।
पित्रे पिण्डादिकं दत्त्वा रामेशं स्थाप्य तत्र च ।
स्नात्वा नत्वा च रामेशं रामं सीतां समाहितः ॥

श्राद्धं पिण्डप्रदानं च कृत्वा विष्णुपुरं व्रजेत्।
पितृभिः सह धर्मात्मा कुलानां च शतैः सह॥
शिलादक्षिणहस्ते च स्थापितः कुण्डपर्वतः।
तत्र श्राद्धादिना सर्वान् पितॄन् ब्रह्मपुरं नयेत्॥
कुण्डनाथस्तपस्तेपे सीताद्रेर्दक्षिणे गिरौ।
मतङ्गस्य पदे पुण्ये पिण्डदः स्वर्नयेत्पितॄन्॥
वामहस्ते शिलायाश्च तथा उद्यन्तको गिरिः।
उदयाद्रिरिरानीतो ह्यगस्त्येन महात्मना॥
स्थापितः पिण्डदस्तत्र पितॄन् ब्रह्मपुरं नयेत्।
कुण्डमुद्यन्तकं तत्र स्वात्मना तपसे कृतम्।
ब्रह्मा तत्र च सावित्री कुमाराभ्यां स्थितस्त्विह॥
हाहाहूहूप्रभृतयो गीतनादं प्रचक्रिरे।
स्नातस्तत्र च मध्याह्ने सावित्रीं समुपास्य च॥
कोटिजन्म भवेद्विप्रो धनाढ्यो वेदपारगः।
अगस्त्यस्य पदे स्नातः पिण्डदो ब्रह्मलोकगः॥
पितृभिः सह धर्मात्मा पूज्यमानो दिवौकसैः।
ब्रह्मयोनिं प्रविश्याऽथ निर्गच्छेद्यस्तु मानवः॥
परं ब्रह्म स यातीह विमुक्तो योनिसङ्कटात्।
नत्वा गयाकुमारं च ब्राह्मण्यं लभते नरः॥
सोमकुण्डाभिषेकाद्यैः सोमलोकं नयेत्पितॄन्।
व्रजेदिति क्वचित्पाठः।
पिण्डदो व्योमगङ्गायां निर्मलत्वं नयेत्पितॄन्॥
शिलाया दक्षिणे हस्ते भस्मकूटमधारयत्।
धर्मो यस्तत्र च हरस्तन्नमः समकारयत्॥
यतोऽसौ भस्मकूटाद्रिर्भस्मस्नानात्तु नाकदः।

वटो वटेश्वरस्तत्र स्थितश्च प्रपितामहः ॥
तदग्रे रुक्मिणीकुण्डं पश्चिमे कपिला नदी ।
कपिलेशो नदीतीरे अमासोमसमागमे ॥
कपिलायां नरः स्नात्वा कपिलेशं नमेद्यजेत् ।
श्राद्धदः स्वर्गभागी स्यान्माहेशीकुण्ड एव च ॥
गौरी च मङ्गला तत्र सर्वसौभाग्यदार्च्चिता ।
जनार्दनो भस्मकूटे तस्य हस्ते तु पिण्डदः ॥
मन्त्रेण चात्मनोऽन्येषां सव्येनापि तिलैर्विना ।
पिण्डं च दधिसम्मिश्रं सर्वे ते विष्णुलोकगाः ॥
आत्मानं पितृभिः सार्द्धं विष्णुलोकं नयेन्नरः ।
एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ।
गयाशीर्षे त्वया देयो मह्यं देव मृते मयि ॥
यस्तु पिण्डो मया दत्तस्त्वामुद्दिश्य जनार्दन ।
देहि देव गयाशीर्षे तस्मै तस्मै मृते तु तम् ॥
जनार्दन नमस्तुभ्यं नमस्ते पितृरूपिणे ।
पितृमात्रे नमस्तुभ्यं नमस्ते मुक्तिहेतवे ॥
गयायां पितृरूपेण स्वयमेव जनार्दनः ।
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥
नमस्ते पुण्डरीकाक्ष ऋणत्रयविमोचन ।
लक्ष्मीकान्त नमस्तेऽस्तु नमस्ते पितृमोक्षद ॥
पुण्डरीकाक्षमभ्यर्च्य स्वर्गतः स्याज्जनार्दनम् ।
वामजानु तु सम्पात्य नत्वा भीमं जनार्दनम् ॥
श्राद्धं सपिण्डकं कृत्वा पितृभिर्विष्णुलोकभाक् ।
शिलाया वामपादे तु प्रेतकूटो गिरिर्धृतः ॥
धर्मराजेन पापाढ्यो गिरिः प्रेतशिलाश्रयः ।

पादेन दूरे निक्षिप्तः शिलायाः पापभारतः ॥
प्रेता धानुष्करूपेण करग्रहणकारकाः ।
पृथक्स्थिताश्च बहवो विघ्नकारिण एव च ॥
श्राद्धादिकरणं नृणां तीर्थे पितृविमुक्तिदम् ।
गतः शिलायाः दिसम्पर्कात् प्रेतकूटः पवित्रताम् ॥
प्रेतकुण्डं तु तत्रास्ते देवास्तत्र पदे स्थिताः ।
श्राद्धपिण्डादिकृत्स्नातः प्रेतत्वान्मोचयेत्पितॄन् ॥
कीकटेषु गया पुण्या पुण्यं राजगृहं वनम् ।
च्यवनस्याश्रमः पुण्यो नदी पुण्या पुनःपुना ॥
वैकुण्ठो लोहदण्डश्च गृध्रकूटश्च शोणगः ।
श्राद्धपिण्डादिकृत्तत्र पितॄन् ब्रह्मपुरं नयेत् ॥
शिलादक्षिणपादे तु गृध्रकूटो गिरिर्धृतः ।
धर्मराजेन तत्स्थैर्य्यकरणाद्यस्तु पावनः ।
गृध्ररूपेण संसिद्धास्तपः कृत्वा महर्षयः ॥
अतो गिरिर्गृध्रकूटस्तत्र गृध्रेश्वरः शिवः ।
दृष्ट्वा गृध्रेश्वरं नत्वा याति शम्भोः पुरं नरः ॥
तत्र गृध्रवटं नत्वा प्राप्तकालो दिवं व्रजेत् ।
ऋणमोक्षं पापमोक्षं शिवं दृष्ट्वा शिवं व्रजेत् ।
आदिपालेन गिरिणा समाक्रान्तं शिलोदरम् ।
तत्रास्ते गजरूपेण विघ्नेशो विघ्ननाशनः ॥
तं दृष्ट्वा मुच्यते विघ्नैः पितॄन् शिवपुरं नयेत् ।
गायत्रीं च गयादित्यं स्नातो दृष्ट्वा दिवं व्रजेत् ॥
ब्रह्माणं चादिपालस्थं दृष्ट्वा स्यात् पितृतारकः ।
नाभौ च पिण्डदो यस्तु पितॄन् ब्रह्मपुरं नयेत् ॥
नितम्बे मुण्डपृष्ठस्य अरविन्दवनं त्वभूत् ।

मुण्डपृष्ठारविन्दाद्रौ दृष्ट्वा पापं विनाशयेत् ॥ इति ।

निर्मथ्येति। मथोकुण्डे तर्पणात् पिण्डदानात् पितृणां मुक्तिः । स्नानात् स्नानकर्त्तुर्मुक्तिरित्यर्थः । उद्यन्तपर्वतसमीपे मथोकुण्डं ज्ञातव्यम् । पितॄन् इति । रामेश्वरस्याङ्गारकस्य च नमस्कारः प्रत्येकं पितृस्वर्गफलक इत्यर्थः । गयेति । गयाकूपे पिण्डदातुरश्वमेधफलप्राप्तिरित्यर्थः । भस्मनेति । तत्कूपभस्मना स्नातस्य पितॄणां नरकतारणं फलमित्यर्थः । धौतपाद इति । धौतपादे निःक्षीरायाः सङ्गमे रामपुष्करिणीनामके स्नात्वा पित्रादिश्राद्धकरणे पित्रादेर्ब्रह्मलोकनयनं फलमित्यर्थः । इदं तु विशिष्टस्यैव फलम् । सुषुम्नायामिति । सुषुम्नायां श्राद्धस्य कुलसप्तकोद्धारः फलमित्यर्थः । सुषुम्ना गयाग्राममध्ये । तस्य, वसिष्ठस्य । तीर्थे, कुण्डे । तेन वसिष्ठकुण्डे स्नात्वा वसिष्ठेशनमस्कारे कृतेऽश्वमेधतुल्यं फलमित्यर्थः । गृध्रवटोत्तरे वसिष्ठाश्रमः । तत्र वासिष्ठकुण्डवसिष्ठेश्वरौ ज्ञातव्यौ। पिण्डद इति। धेनुकारण्ये पिण्डदानस्य तथा कामधेनुपदे पिण्डदानस्य कामधेनुनमस्कारस्य च प्रत्येकं पितृब्रह्मलोकनयनं फलमित्यर्थः । कर्दमान इति । कर्दमाने गयानाभौ तथा मुण्डपृष्ठसमीपे स्नानपूर्वकश्राद्धे पितृस्वर्गनयनं फलम् । फल्ग्वीति । फल्ग्वीशस्य सङ्गमेशस्य च नमस्कारे पितृस्वर्गनयनं प्रत्येकं फलमित्यर्थः। चण्डिकानमस्कारेऽपीदं फलं बोध्यम् । गयागज इति। एते षट् पूजापिण्डदानादितो गयायां मुक्तिदायका इत्यर्थः। गयायामिति । गयायां वृषोत्सर्गस्यैकविंशतिकुलोद्धारः फलमित्यर्थः। यत्र तत्रेति। गयायां यत्र कुत्रचित् प्रदेशे श्राद्धे पिण्डदाने च प्रत्येकं कुलशतोद्धारपूर्वकब्रह्मलोकनयनं फलम् । स्नात्वेति । महानदीपरपारस्थभरताश्रमसन्निधाने महानद्यां स्नात्वा रामेशरामसीता दृष्ट्वा रामपदे सपिण्डं श्राद्धं

कार्य्यमित्यर्थः । अत्र पित्रादिकुलशतसहितस्य विष्णुपुरव्रजनं फलम्। शिलेति। शिलादक्षिणहस्ते कुण्डनामा पर्वतः स्थापितः तत्र श्राद्धे पिण्डदाने च पितॄणां ब्रह्मपुरनयनं भवतीत्यर्थः। मतङ्गस्येति। सीताद्रिदक्षिणे गिरौ मतङ्गपदे पिण्डदानस्य पितृस्वर्गनयनं फलमित्यर्थः। वामहस्त इति। शिलावामहस्ते उद्यन्तपर्वते पिण्डदानात् पितृब्रह्मपुरनयनं भवतीत्यर्थः। कुण्डमुद्यन्तकमिति। तत्र उद्यन्तककुण्डे स्नात्वा सावित्रीनामकमध्याह्नसन्ध्यावन्दने कोटिजन्माविच्छिन्नधनाढ्यवेदपारगविप्रत्वं फलमित्यर्थः। अगस्त्यस्येति। स्नात्वाऽगस्त्यस्य पदे पिण्डदातुर्दिवौकोगणपूज्यमानपितृसहितब्रह्मलोकगमनं फलम्। ब्रह्मयोनिमिति। योनिसङ्कटविमुक्तिपूर्वकपरब्रह्मगमनं,ब्रह्मयोनिं प्रविश्य निर्गमनस्य फलमित्यर्थः। नत्वेति। गयाकुमारनमस्कारस्य ब्राह्मण्यं फलमित्यर्थः । सोमेति । सोमकुण्डस्नानतर्पणपिण्डदानानां पितृसोमलोकनयनं फलमित्यर्थः। बलिरिति। काकशिलायां काकबलिः। क्षणमोक्षदः, सद्योमोक्षदः। मोक्षश्च पितॄणां कर्त्तुरेव च। स्वर्गेति । स्वर्गद्वारेश्वरनमस्कारात् स्वर्गतदुत्तरब्रह्मलोकप्राप्तिर्भवतीत्यर्थः। पिण्डद इति। आकाशगङ्गापिण्डदानस्य पितृनिर्मलत्वं फलमित्यर्थः। शिलाया इति। प्रेतशिलाया दक्षिणहस्ते भस्मकूटनामा पर्वतस्तत्र भस्मस्नानात् मुक्तो भवतीत्यर्थः। वट इति। तत्राक्षयवटवटेश्वरप्रपितामहाग्रे रुक्मिणीकुण्डं तत्पश्चिमे कपिलानाम नदी तत्तीरे कपिलेश्वर इत्यर्थः। यजेत्, पूजयेत् । गौरी चेति। तत्र माहेश्वरीकुण्डे मङ्गलाऽस्ति तत्पूजनात् सर्वसौभाग्यप्राप्तिरित्यर्थः।

अथ वायुपुराणीयो गयाश्राद्धानुष्ठानक्रमो लिख्यते।

सामान्यप्रघट्टकोक्तरीत्या गृहाद्गयायात्रां कृत्वा गयाप्राप्ति-

दिने प्रथमं फल्गुतीर्थे गत्वा ओमद्याश्वमेधसहस्रजन्यफलविलक्षणफलप्राप्तिकामः फल्गुतीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य स्नायादिति बहवः। वस्तुतः प्रथमदिने फल्गुभिन्नमहानदीभागादौ स्नायात्। दिनान्तर एव फल्गुस्नानविधानदिति। तत्र च गृह्योक्तः पौराणिको वा विधिः। ततस्तर्पणमपि गृह्योक्तेन पौराणिकेन वा विधिना कुर्य्यात्। विशेषस्त्वयम्। अमुकगोत्रोऽस्मत्पिताऽमुकदेवशर्मा तृप्यतामेतत्तिलोदकं तस्मै स्वधा पितरं प्रीणयामि। एवं पितामहादीनामपि स्वधान्ते पितामहं प्रीणयामीतियोज्यम्। तर्पणं निर्वर्त्य देवार्चनादिकं कृत्वा अद्य तीर्थप्राप्तिनिमित्तकपार्वणश्राद्धमहं करिष्ये इति सङ्कल्प्यार्घावाहनरहितं पार्वणं कुर्य्यात्। तदसम्भवे पिण्डदानमात्रमपि तीर्थप्राप्तिनिमित्तकं कुर्यात्। गयायां वपनोपवासौ न स्तः।

एतावत् प्रथमदिनकृत्यम्।

मिश्रास्तदनुयायिनश्च तीर्थप्राप्तिनिमित्तकश्राद्धानन्तरं प्रेतशिलायां श्राद्धं यमराजधर्मराजबलिदानपर्य्यन्तं वक्ष्यमाणरीत्या प्रथमदिन एव कारयन्ति। तदसत्।

सर्वस्थानेषु चैवं स्यात् पिण्डदानं तु नारद।
प्रेतपर्वतमारभ्य कुर्य्यात्तीर्थेषु च क्रमात्॥

इतिवायुपुराणात्।

अथ द्वितीयदिनकृत्यम्।

फल्गुतीर्थे यथाविधि स्नात्वा देवार्चनान्तं कर्म कृत्वा प्रेतपर्वतं गयावायव्यदिशि गयातो गव्यूत्यधिकदूरस्थं गत्वा तन्मूलसंलग्ने तदीशानकोणस्थे ब्रह्मकुण्डे स्वर्गकामनया स्नात्वा तर्पणं कृत्वा तं प्रेतपर्वतमारुह्य तत्र श्राद्धं कुर्य्यात्। तद्यथा—कृतपञ्चभूसंस्कारदेशे आचान्त उपविश्य कृतापसव्यो दक्षिणामुखो भूत्वा

कव्यवालोऽनलः सोमो यमश्चैवार्य्यमा तथा।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः॥
आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह।
मदीयाः पितरो ये च कुले जाताः सनाभयः॥
तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम्।
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम्॥

इति पठित्वा पितॄन् ध्यात्वा सव्यं कृत्वाऽऽचम्य सन्ध्यावन्दनवत् ओङ्कारव्याहृतिसप्तकगायत्रीशिरओङ्कारान् जपन् पूरककुम्भकरेचकात्मकप्राणायामं कुर्य्यात्। ततः पुण्डरीकाक्षस्मरणेन श्राद्धीयद्रव्याणि कुशोदकेन प्रोक्ष्य ओमद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकदेवशर्मणाम्, एवं मात्रादीनां मातामहादीनां च, पुनरावृत्तिरहितब्रह्मलोकावाप्तिकामः श्राद्धमहं करिष्ये इति सङ्कल्प्य विश्वेदेवप्रवेशाद्द्वादशदैवतं श्राद्धं कुर्यात्। एवमेव हेमाद्रिरपि। मातामहादीनां सपत्नीकत्वेन निर्देश इति विशेषः। मातामह्यादीनामनुप्रवेशात् षोडशदैवतं श्राद्धं कार्य्यमित्यन्ये। साम्प्रदायिकास्तु षण्णां पुंसामेव कार्य्यमित्याहुः। छन्दोगैस्तु षट्पुरुषाणामेव कार्य्यम्। पार्वणेतिकर्तव्यताकं प्रकृतपिण्डदानान्तं श्राद्धं कृत्वा तद्वेदिदक्षिणत उपविश्य कृतापसव्यो दक्षिणामुखः कुशत्रयं गृहीत्वा "ॐ कव्यबालो ऽनल" इत्यादि "शाश्वतीम्" इत्यन्तं पूर्वलिखितमन्त्रं पठित्वा तेषु कुशेषु सकृत्तिलोदकाञ्जलिदानरूपमावाहनं कुर्य्यात्। तत एतानि पाद्यादीनि ओंपित्रादिभ्यो नम इत्यनेन क्रमेण पञ्चोपचारेण पित्रादीन् सम्पूज्य

ॐ आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः॥

अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनांल्लोकानिदमस्तु तिलोदकम् ॥

इति पूर्ववदञ्जलिदानरूपं मिलितपित्राद्यावाहनं कृत्वा ओमद्यामुकगोत्र पितरमुकदेवशर्मन्नेष ते पिण्डः स्वधेति तिलजलदधिमधुमिश्रं पायसान्यतमपिण्डं पित्रे, एवं पितामहादिभ्योऽपि यथादाक्षिणं दद्यात् । ततस्तद्दक्षिणत उपविश्य समूलान् दक्षिणाग्रान् कुशानास्तीर्य्य "ओंकव्यवाल"इत्यादि"शाश्वतीम्"इत्यन्तं मन्त्रं पूर्ववत् पठित्वा तेषु कुशेषु सकृत्तिलोदकाञ्जलिदानरूपमावाहनं कृत्वा पूर्ववदभ्यर्च्य "ॐ आब्रह्मस्तम्ब"इत्यादिना सतिलाञ्जलिदानरूपं पूर्ववदावाहनं कृत्वा

ॐ पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥

इति पौराणिकमन्त्रमुच्चार्य्य तिलघृतदधिमधुजलयुतं मुष्टिमितसक्तुकृतं मिलितेभ्यः पित्रादिभ्य एकं पिण्डं दद्यात् । ततः षोडशीकर्म ।

**संवत्सरप्रदीपे,**

अमावास्यां तु कन्यार्के तीर्थप्राप्तौ तथा नृप ।
कृत्वा श्राद्धं विधानेन दद्यात् षोडशपिण्डकम् ॥ इति ।

वायुपुराणीयस्तत्प्रयोगो यथा—ऊनविंशतिदास्यमानपिण्डस्थानानि यथादक्षिणं भागचतुष्टयेन कृतानि । तत्र दक्षिणाग्रान् कुशानास्तीर्य्य

ॐ अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
आवाहयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः ॥

ॐमातामहकुले ये च गतिर्येषां न विद्यते।
आवाहयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः॥
ॐबन्धुवर्गकुले ये च गतिर्येषां न विद्यते।
आवाहयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः॥
इत्येतैस्तिलोदकैरावाह्य
ॐ आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्।
आब्रह्मभुवनांल्लोकानिदमस्तु तिलोदकम्॥
इत्याभ्यां सतिलोदकाञ्जलिं दद्यात्। ततो मूलादितः पितृतीर्थेन पिण्डान् दद्यात्। तत्र क्रमः—
ॐ अस्मत्कुले मृता ये च गतिर्येषां न विद्यते।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ १॥
ॐ मातामहकुले ये च गतिर्येषां न विद्यते।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ २॥
ॐ बन्धुवर्गकुले ये च गतिर्येषां न विद्यते।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ ३॥
अजातदन्ता ये केचिद्ये च गर्भे प्रपीडिताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ ४॥
अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथाऽपरे।
विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम्॥ ५॥
ॐदावदाहे मृता ये च सिंहव्याघ्रहताश्च ये।
दंष्ट्रिभिः शृङ्गिभिर्वापि तेभ्यः पिण्डं ददाम्यहम्॥ ६॥
ॐ उद्बन्धनमृता ये च विषशस्त्रहताश्च ये।
आत्मोपघातिनो ये च तेभ्यः पिण्डं ददाम्यहम्॥ ७॥

ॐ अरण्ये वर्त्मनि रणे क्षुधया तृष्णया हताः ।
भूतप्रेतपिशाचाश्च तेभ्यः पिण्डं ददाम्यहम् ॥ ८ ॥
ॐ रौरवे चान्धतामिस्रे कालसूत्रे च ये मृताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ९ ॥
ॐ अनेकयातनासंस्थाः प्रेतलोके च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ १० ॥
ॐ अनेकयातनासंस्था ये नीता यमकिङ्करैः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ११ ॥
ॐ नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ १२ ॥
ॐ पशुयोनिगता ये च पक्षिकीटसरीसृपाः ।
अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम् ॥ १३ ॥
ॐ जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन कर्मणा ।
मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ॥ १४ ॥
ॐ दिव्यन्तरिक्षभूमिष्ठाः पितरो बान्धवादयः ।
मृता येऽसंस्कृता ये च तेभ्यः पिण्डं ददाम्यहम् ॥ १५ ॥
ये केचित्प्रेतरूपेण वर्त्तन्ते पितरो मम ।
ते सर्वे तृप्तिमायान्तु पिण्डदानेन सर्वदा ॥ १६ ॥
ये बान्धवाबान्धवा ये येऽन्यजन्मनि बान्धवाः ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ १७ ॥
पितृवंशे मृता ये च मातृवंशे च ये मृताः ।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ।

तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ १८ ॥
आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः ।
कुलद्वये ये मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥
मित्राणि सख्यः पशवश्च वृक्षा दृष्टाश्चादृष्टाश्च कृतोपकाराः ।
जन्मान्तरे ये मम दासभूतास्तेभ्यः स्वधा पिण्डमहं ददामि १९

अत्रोनविंशतिपिण्डे षोडशपिण्डसंज्ञा पारिभाषिकी पञ्चाम्रसंज्ञावत् । दाक्षिणात्यास्तु श्राद्धाशक्तौ सङ्क्षेपश्राद्धमहं करिष्य इति सङ्कल्प्य

ॐ पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥

इतिमन्त्रेणैकपिण्डं दद्यात् । इत्थमेव सर्वतीर्थेष्वित्याहुः । स्त्रीषोडश्यां तु "अस्मत्कुले मृता ये च"इत्यावाहनमन्त्रादारभ्य "मित्राणि सख्य"इत्यन्तं सम्भवत्स्त्रीलिङ्गमूहनीयम् । अन्यत्तु पुंषोडशीवत् सर्वं कार्य्यमित्याहुः । ततः सर्वेषु पिण्डेषु तिलजलपूर्णपात्रेण वारत्रयं परिषेचनं कार्य्यम् । तत्र मन्त्रः—

ॐ ये च वोऽत्र ये चास्मानाशंसन्ते याश्च वोऽत्र याश्चास्मानाशंसन्ते ते चात्राहन्तां ताश्चात्राहन्तां तृप्यन्तु भवन्तस्तृप्यन्तु भवत्यः तृप्यत पुत्रान् पौत्रानभितर्पयन्तीरापो मधुमतीरिमाः । स्वधा पितृभ्योऽमृतं दुहाना आपो देवीरुभयांस्तर्पयन्तु तृप्यत तृप्यत॥इति।

ततः प्रणिपत्य पित्रादयः क्षमध्वमिति विसृजेत् । ततः सव्येनाचम्य श्राद्धशेषं समाप्य

ॐ साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा ।
मया गयां समासाद्य पितॄणां निष्कृतिः कृता ॥

आगतोऽस्मि गयां देव पितृकार्ये गदाधर ।
त्वमेव साक्षी भगवन्ननृणोऽहमृणत्रयात् ॥

इति प्राङ्मुखः पठेत्। एतावत्समस्तश्राद्धाशक्तौ पिण्डदानमात्रमपि कार्य्यम्। तद्यथा—ओमद्यामुकगोत्रः पित्रादित्रयमात्रादित्रयमातामहादीनां नामगोत्राणि क्रमेणोच्चार्य्य पुनरावृत्तिरहितब्रह्मलोकावाप्तिकामः प्रेतपर्वते पिण्डदानमहं करिष्य इति सङ्कल्प्यापसव्यं कृत्वा "ॐ कव्यवालोऽनलः" इत्याद्यारभ्य "अनृणोऽहमृणत्रयात्" इत्यन्तं प्रागुक्तकाण्डं कुर्य्यात्। केचित्तु षट्पुरुषाणां पुनरावृत्तिरहितब्रह्मलोकावाप्तिकामनया पिण्डदानं कार्य्यम्। तत्र वेदीद्वयकरणतद्रेखाकरणकुशास्तरणावनेजनपिण्डदानप्रत्यवनेजनश्वासधारणसूत्रदानगन्धादिदानान्येव स्वगृह्योक्तविधिना कार्याणीत्याहुः। मिश्रास्तु समस्तश्राद्धं कृत्वा तद्वेदिदक्षिणत उपविश्येत्यादिनोक्तपक्षद्वयपिण्डदानं षोडशीपिण्डदानं च कुर्य्यात्। "अनृणोऽहमृणत्रयात्" इत्यन्तं च पठेदित्याहुः। साक्षिश्रावणानन्तरं पितृगतप्रेतत्वविमुक्तिस्वगतप्रेतत्वाभावकामः प्रेतपर्वते तिलमिश्रसक्तुनिक्षेपमहं करिष्ये इति सङ्कल्प्य तिलमिश्रसक्तून् प्रेतपर्वते दक्षिणामुखः क्षिपेदनेन मन्त्रेण।

ॐ ये केचित् प्रेतरूपेण वर्तन्ते पितरो मम।
ते सर्वे तृप्तिमायान्तु सक्तुभिस्तिलमिश्रितैः ॥ इति।
ॐ आब्रह्मस्तम्बपर्यन्तं यत्किञ्चित् सचराचरम्।
मया दत्तेन तोयेन तृप्तिमायातु सर्वशः ॥

इति मन्त्रेण तिलतोयाञ्जलिं तत्र दद्यात्। ततो यथाशक्ति ब्राह्मणाय दक्षिणां दद्यात्।

इति प्रेतपर्वतविधिः।

ततः प्रेतपर्वतादवरुह्य प्रेतशिलां गत्वा "कव्यवाल" इत्यादि "शाश्वतीम्" इत्यन्तं पूर्ववदुक्त्वा पूर्ववदेव पित्रादिनामगोत्राद्युच्चार्य्य पित्रादीनां प्रेतत्वविमुक्तिकामनया मोक्षकामनया वा प्रेतशिलायां श्राद्धमहं करिष्ये इति सङ्कल्प्य साक्षिश्रावणान्तं प्रेतपर्वतवत्कर्म कुर्यात्। श्राद्धासम्भवे पिण्डदानमात्रमपि पूर्ववदेव कार्यम्। ततः पर्वतादवरुह्य प्रभासाद्रिसङ्गतायां महानद्यां रामतीर्थत्वेन प्रसिद्धे प्रभासह्रदे ओमद्य साग्रजन्मान्तरशतकृतदुष्कृतविलयकामोऽस्मिन् रामतीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य स्नानातर्पणे च कुर्य्यात्। तत्र स्नानीयप्रकृतसकलमन्त्रपाठानन्तरम्—

ॐ जन्मान्तरशतं साग्रं यत्कृतं दुष्कृतं मया।
तत्सर्वं विलयं यातु रामतीर्थाभिषेचनात्॥

इति पौराणिकमन्त्रं पठित्वा मज्जेत्। ओमद्य विष्णुलोकगमनकामो रामतीर्थे श्राद्धं पिण्डदानं चाहं करिष्ये इति सङ्कल्प्य पार्वणं पिण्डदानं वा तत्र कुर्य्यात्। इदं पार्वणं पिण्डदानं च स्वसूत्रानुसारेणैव कार्य्यम्। ओमद्य पित्रादिप्रेतत्वविमुक्तिपूर्वकपितृत्वप्राप्तिकामो रामतीर्थे पितृणां पिण्डदानमहं करिष्ये इति सङ्कल्प्य प्रेतपर्वतोक्तरीत्या पित्रादिनवपिण्डाक्षय्यपिण्डषोडशीपिण्डान् दद्यात्। अशक्तौ एषामन्यतमं कुर्य्यात्। ततः

ॐ राम राम महाबाहो देवानामभयङ्कर।
त्वां नमस्येह देवेश मम नश्यतु पातकम्॥

इति पठित्वा स्वगतपापनाशकामो रामं नमस्कुर्यात्। ततः ओंभासमानस्वकर्तृकशिवगमनकामः प्रभासेशनमस्कारमहं करिष्ये इति सङ्कल्प्य प्रभासेशं नमस्कुर्य्यात्। ततः पुनरपि रामं

प्रभासेशं च नमस्कुर्य्यादिति मिश्राः । वस्तुतः पूर्वकृतनमस्कारादेव फलसिद्धिः । ततः

आपस्त्वमसि देवेश ज्योतिषां पतिरेव च ।
पापं नाशय मे देव मनोवाक्कायकर्मजम् ॥

इति पौराणिकमन्त्रं पठित्वा मनोवाक्कायकर्मजपापक्षयकामनया ओं यमायैष बलिर्नम इति कुशत्रयजलेन देवरीत्या पितृरीत्या वा भक्तादिरूपं बलिं दद्यात् । प्रभासाद्रिदक्षिणदिग्व्यवस्थितप्रेतशिलाजघनस्थे नगनाम्नि पर्वते

ओंश्वानौ द्वौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ ॥

इति पठित्वा ओं यमराजधर्मराजाभ्यामेष बलिर्नम इति याम्यबलिवत् तयोर्मिलितयोरोदनाद्यन्यतमबलिं दद्यात् । इदं च बलिदानं नित्यम् । अकरणेऽनिष्टश्रुतेः । अन्यत्तु सर्वं काम्यं स्वतन्त्रं च यावदिष्यते तावदेव कार्य्यम् ।

### अथ तृतीयदिने पञ्चतीर्थीकृत्यम् ।

फल्गुतीर्थे यथाविधि स्नात्वा देवार्चनान्तं कर्म कृत्वा पवित्रोपग्रहपाणिराचम्य वारिणा शिरोऽभ्युक्ष्य उत्तरमानसं गत्वा ओमद्य पापक्षयकाम उत्तरमानसे स्नानमहं करिष्ये इति सङ्कल्प्य स्नानीयमन्त्रान् पठित्वा

ॐ उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये ।
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ॥

इति पठित्वा मज्जनं कार्य्यम् । ततस्तर्पणम् । तत्र च पित्राद्यञ्जलिषु स्वधोदीरणानन्तरं पितरं प्रीणयामीति प्रयोज्यम् । ततस्तर्पणशेषे देवविधिना

ॐ आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः ।

तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥

इत्यादिमन्त्रं पठित्वा एकोऽञ्जलिर्देयः । ततः पित्रादित्रयमात्रादित्रयमातामहादित्रयाणां शाश्वतब्रह्मलोकप्राप्तिकामो मुक्तिकामो वा श्राद्धं कुर्यात् । तत उत्तरमानसे दक्षिणदिश्युपविश्य समूलान् दक्षिणाग्रान् कुशानास्तीर्य्य

ॐ कव्यवालोऽनलः सोमो यमश्चैवार्य्यमा तथा ।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥
आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह ।
मदीयाः पितरो ये च कुले जाताः सनाभयः ॥
तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् ।
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ॥

इति पठित्वा सकृत्तिलोदकाञ्जलिदानरूपमावाहनं कृत्वा एतानि पाद्यादीनि ओं पित्रादिभ्यो नम इति पञ्चोपचारेण पित्रादीन् सम्पूज्य

ॐ आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकानिदमस्तु तिलोदकम् ॥

इति पठित्वा सकृत्तिलोदकाञ्जलिदानरूपमावाहनं पुनःकृत्वा ।

ॐ पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥

इति पौराणिकमन्त्रमुच्चार्य्य तिलघृतदधिमधुजलयुतं मुष्टिमितसक्तुकृतं पिण्डमेकं मिलितेभ्यः पित्रादिभ्यो दद्यात् । तत

ॐ पितृसूर्य्यलोकगमनकामनया उत्तरार्कस्य नतिमहं करिष्ये । पूजायामप्ययमेव सङ्कल्पः । ततः

ॐ नमो भानवे भर्त्रे सोमभौमज्ञरूपिणे ।
जीवभार्गवशनैश्चरराहुकेतुस्वरूपिणे ॥

इतिमन्त्रेण नतिः पूजा च कार्य्या । ततो मौनेन दक्षिणमानसं गत्वा तत्रोदीच्याम् अद्य पितृमुक्तिकाम उदीचीतीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य पूर्ववत् स्नानतर्पणे कृत्वा पूर्ववदेव नवदैवतं षड्दैवतं वा पार्वणं कृत्वा मध्यमं कनखलतीर्थं गत्वा तत्रापि ओमद्य पितृमुक्तिकामः कनखलतीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य ततः पितृमुक्तिकामनया तत्र स्नानं कृत्वा ततः पितृमुक्तिकामस्तत्र श्राद्धं कुर्य्यात् । तत ॐ मद्य पितृमुक्तिकामो दक्षिणमानसे स्नानमहं करिष्ये इति सङ्कल्प्य स्नानीयसर्वमन्त्रान्ते

ॐ दक्षिणे नमानसे स्नानं करोम्यात्मविशुद्धये ।
सूर्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ॥
ब्रह्महत्यादिपापौघघातनाय विमुक्तये ।
दिवाकर करोमीह स्नानं दक्षिणमानसे ॥

इति पठित्वा मज्जेत् । ततः पूर्ववत्तर्पणं कृत्वा पितृमुक्तिकामनया तत्र श्राद्धं कृत्वा

ॐ नमामि सूर्य्यं तृप्त्यर्थं पितॄणां तारणाय च ।
पुत्रपौत्रधनैश्वर्य्य आयुरारोग्यवृद्धये ॥

इति मन्त्रेण दक्षिणार्कदर्शनं पूजा च । तस्य तु कर्म मौनेन कर्त्तव्यम् । अतः स मौनार्कनामा । ततः "ॐ कव्यवालोऽनलः सोमो यमः" इत्यादि "गयामिमाम्" इत्यन्तं दक्षिणमानसे पठित्वा गदाधरपूर्वदेशस्थमतिप्रशस्तं फल्गुतीर्थं गच्छेत् । तत्र च ओ-

मद्याश्वमेधजन्यफलविलक्षणफलप्राप्तिकामः पितॄणां विष्णुलोकप्राप्तिकामो वा फल्गुतीर्थस्नानमहं करिष्ये इति सङ्कल्प्य प्रकृतस्नानीयमन्त्रान्ते

ॐ फल्गुतीर्थे पुण्यजले करोमि स्नानमादृतः।
पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये॥

इति पठन् मज्जेत्। ततः पूर्ववत्तर्पणं कृत्वा पितृमुक्तिकामनया नवदैवतं षड्दैवतं वा श्राद्धं कुर्य्यात्। ततो मधुस्रवादक्षिणदिगवस्थितं पितामहम्—

ॐ नमः शिवाय देवाय ईशानपुरुषाय च।
अघोरवामदेवाय सद्योजाताय शम्भवे॥

इति पठित्वा प्रणमेत् पूजयेच्च। ततः पुनः फल्गुतीर्थमागत्य ओमद्य पित्रादिसहितात्मवैष्णवपदनयनकामः फल्गुतीर्थे स्नात्वा गदाधरदर्शनमहं करिष्ये इति सङ्कल्प्य तत्र सविधि स्नानं कार्य्यम्। ततो गदाधरं दृष्ट्वा

ॐ नमो वासुदेवाय नमः सङ्कर्षणाय च।
प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे॥

इति पठित्वा गदाधरं प्रणमेत्। पञ्चामृतादिना स्नपयेत्। पुष्पवस्त्रालङ्कारैर्गदाधरपूजनमावश्यकम्। अन्यत्काम्यं यथेच्छं कार्य्यम्।

इति तृतीयदिनकृत्यम्।

पुनः पितृब्रह्मलोकनयनकामनया पञ्चतीर्थ्यां स्नानं कृत्वा गदाधरपूजा कार्य्येतिमिश्राः।

अथ चतुर्थदिनकृत्यम्।

स्नात्वा देवार्चनान्तं कर्म कृत्वा अद्य ब्रह्मलोकगमनकामो धर्मारण्यगमनमहं करिष्ये इति सङ्कल्प्य धर्मारण्यं गच्छेत् इति

मिश्राः । वस्तुतः सङ्कल्पेऽत्र मानाभावः । धर्मारण्यं गत्वा ओ-मद्य सर्वपापक्षयकामो मतङ्गवाप्यां स्नानमहं करिष्ये इति स-ङ्कल्प्य श्राद्धं कृत्वा मतङ्गवाप्युत्तरस्थं मतङ्गेश्वरं नत्वा

प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ।
मयाऽऽगत्य मतङ्गेऽस्मिन् पितॄणां निष्कृतिः कृता ॥

इति पठित्वा अद्य पितृतारणकामो ब्रह्मकूपयूपयोर्मध्ये श्रा-द्धमहं करिष्ये इति सङ्कल्प्य तत्र श्राद्धं कुर्यात् । कूपे एकं श्राद्धं कूपयूपयोर्मध्येऽपरं श्राद्धमित्यन्ये । ततो धर्मं धर्मेश्वरं महाबो-धिं च क्रमेण स्वर्गकामो नमेदिति । महाबोधितरुमूले श्राद्धं पिण्डदानं वा कुर्यात् ।

चलदलाय वृक्षाय सर्वदाऽचलविष्णवे ।
बोधितत्त्वाय यज्ञाय अश्वत्थाय नमोनमः ॥[1]
एकादशोऽसि रुद्राणां वसूनामष्टमस्तथा ।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल ॥

एतन्मन्त्राभ्यामश्वत्थनमस्कारं कारयन्ति । ब्रह्मकूपश्च मत-

१ मुद्रितगयामाहात्म्ये त्वित्थं पाठः-
नमस्तेऽश्वत्थराजाय ब्रह्मविष्णुमहेश्वर ।
बोधिद्रुमाय पितॄणां कर्तॄणां तारणाय च ॥
२अत्र "अश्वत्थ यस्मात्त्वयि वृक्षराज नारायणस्तिष्ठति सर्वकालम् ।
अतः शुभस्त्वं सततं तरूणां धन्योऽसि दुःस्वप्नविनाशनोऽसि ॥
अश्वत्थरूपिणं देवं शङ्खचक्रगदाधरम् ।
नमामि पुण्डरीकाक्षं शाखारूपधरं हरिम् ॥
येऽस्मत्कुले मातृवंशे बान्धवा दुर्गतिं गताः ।
त्वद्दर्शनात्स्पर्शनाच्च स्वर्गतिं यान्तु तेऽक्षयाम् ॥
ऋणत्रयं मया दत्तं गयामागत्य वृक्षराट् ।
त्वत्प्रसादान्महापापाद्विमुक्तोऽहं भवार्णवात् ॥"
इत्यधिकं मुद्रितगयामाहात्म्ये वर्तते ।

कृत्वाप्या आग्नेयकोणे इदानीं गर्त्तवत्परिभासते ।

अथ पञ्चमदिनकृत्यम् ।

फल्गुतीर्थे देवार्चनान्तं कर्म कृत्वा ओमद्य ऋणत्रयविमुक्तिकामोऽस्मिन् ब्रह्मसरसि स्नानमहं करिष्ये इति सङ्कल्प्य प्रकृतस्नानमन्त्रान्ते

ॐ स्नानं करोमि तीर्थेऽस्मिन् ऋणत्रयविमुक्तये ।
श्राद्धाय पिण्डदानाय तर्पणायात्मशुद्धये ॥

इति पठित्वा तर्पणं च कृत्वा ओमद्य पितृब्रह्मलोकनयनकामो ब्रह्मकूपयूपयोर्मध्ये श्राद्धमहं करिष्ये इति सङ्कल्प्य नवदैवतं षड्दैवतं वा श्राद्धं कुर्य्यात् । तत ओमद्य पितृमोक्षकामो ब्रह्मप्रकल्पिताम्रसेचनमहं करिष्ये इति सङ्कल्प्य

ॐ आम्रं ब्रह्मसरोद्भूतं सर्वदेवमयं तरुम् ।
विष्णुरूपं प्रसिञ्चामि पितॄणां च विमुक्तये ॥

इति पठित्वा कुशत्रयेणाचारात् ब्रह्मसरोजलेन गोप्रचारसमीपस्थान् ब्रह्मकल्पितानाम्रान् सिञ्चेदिति ।

आम्रं ब्रह्मसरोद्भूतं सर्वदेवमयं तरुम् ।
विष्णुरूपं प्रसिञ्चामि पितॄणां च विमुक्तये ॥

इति मन्त्रेण प्रत्याम्रं सिञ्चेदित्यपि वदन्ति । तत ओमद्य वाजपेयजन्यफलसमफलप्राप्तिकामो ब्रह्मयूपप्रदक्षिणमहं करिष्ये इति सङ्कल्प्य प्रदक्षिणां कुर्य्यात् । तत ओमद्य पितृब्रह्मपुरनयनकामो ब्रह्मनमस्कारमहं करिष्ये इति सङ्कल्प्य

ॐ नमो ब्रह्मणेऽजाय जगज्जन्मादिकारिणे ।
भक्तानां च पितॄणां च तारकाय नमोनमः ॥

इति पठित्वा ब्रह्मसरोवायव्यकोणस्थं ब्रह्माणं प्रणमेत् । तत

ॐ यमराजधर्मराजौ निश्चलार्थं स्थिरीकृतौ ।

ताभ्यां बलिं प्रयच्छामि पितॄणां मुक्तिहेतवे ॥

इति पठित्वा यमायैष बलिर्नम इत्यनेन कुशोदकेन देववद्यमबलिं दद्यात् । ततः

ॐ वैवस्वतकुलोद्भूतौ द्वौ श्यावशबलौ शुनौ ।
ताभ्यां पिण्डं प्रयच्छामि रक्षेतां पथि सर्वदा ॥

इति पठित्वा श्वभ्यामेष बलिर्नम इति कुशोदकेन देववद्बलिं दद्यात् । ततः

ॐ ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयोज्झितम् ॥

इत्युच्चार्य्य काकेभ्य एष बलिर्नम इति कुशोदकेन देववत् काकबलिं दद्यात् । श्लोकेनैव यमश्वकाकबलयो देया न तु वाक्येनापीत्यन्ये । काकबल्यनन्तरं स्नायादिति ।

## अथ षष्ठदिनकृत्यम् ।

फल्ग्वां स्नानादिदेवार्चनान्तं पूर्ववत् कुर्य्यात् । ततः पदेषु श्राद्धम् । तत्र यद्यपि ब्रह्मविष्णुरुद्रकश्यपपदानामन्यतममेवारम्भे समाप्तौ च विहितं तथापि वायुपुराणीयपाठक्रमात् प्रथमं विष्णुपद एव श्राद्धम् । मिश्रास्तु प्रथमं रुद्रपद एव श्राद्धम् ।

फल्गुतीर्थे चतुर्थेऽह्नि स्नात्वा देवादितर्पणम् ।
कृत्वा श्राद्धं गयाशीर्षे कुर्य्याद्रुद्रपदादिह ॥

इति गारुडादित्याहुः । तन्न । वायुपुराणीयप्रयोगे गारुडक्रमायोगात् । अन्यथा स्नानतर्पणादावन्यपुराणीयक्रमप्रवेशापत्तेः । तदयं क्रमः । प्रथमम् ओमद्य पापक्षयकामो विष्णुपददर्शनमहं करिष्ये इति सङ्कल्प्य विष्णुपदं दृष्ट्वा ओमद्य पितृमोक्षकामो विष्णुपदस्पर्शनमहं करिष्ये इति सङ्कल्प्य तत् स्पृष्ट्वा तत ओमद्य पितृमोक्षकामो विष्णुपदे विष्णुपूजनमहं करिष्ये इति

सङ्कल्प्य विष्णुप्रकाशकमन्त्रेण विष्णुं पञ्चोपचारैः सम्पूज्य श्राद्धीयद्रव्याणि पुण्डरीकाक्षस्मरणपूर्वकं कुशोदकेन प्रोक्ष्य ओमद्यात्मसहितकुलसहस्रोद्धरणपूर्वकविष्णुलोकनयनकामो विष्णुपदे श्राद्धमहं करिष्ये इति सङ्कल्प्य नवदैवतं षड्दैवतं वा सविश्वेदेवं श्राद्धं कृत्वा तद्वेदिदक्षिणत उपविश्येत्युपक्रम्य ऋणत्रयादिति प्राङ्मुखः पठेत् । इत्यन्तं कर्म प्रेतपर्वतवत् कुर्यात् । एतावत्समस्तश्राद्धाशक्तौ पिण्डदानमपि कार्य्यम् । पिण्डदानस्यापि श्राद्धवदेव फलम् । संन्यासिनां तु विष्णुपदे दण्डस्पर्शनं कार्य्यम् । ब्रह्मपदे श्राद्धस्यात्मसहितकुलशतनरकोद्धरणपूर्वकब्रह्मलोकनयनं फलम् । रुद्रपदस्पर्शनस्यापुनरावृत्तिः फलम् । रुद्रपदश्राद्धस्य तु आत्मसहितकुलशतशिवपुरनयनं फलम् । दक्षिणाग्निपदे श्राद्धस्य वाजपेयफलम् । गार्हपत्यपदे श्राद्धस्य राजसूयफलम् । आहवनीयपदे श्राद्धस्याश्वमेधफलम् । सभ्यपदे श्राद्धस्य ज्योतिष्टोमफलम् । आवसथ्यपदे श्राद्धस्य पितृशक्रलोकनयनं फलम् । सूर्य्यपदे श्राद्धस्य पतितपितृसूर्य्यपुरनयनं फलम् । कार्त्तिकेयपदे श्राद्धस्य पितृशिवलोकनयनं फलम् । क्रौञ्चपदे श्राद्धस्य पितृब्रह्मलोकनयनं फलम् । कश्यपपदे श्राद्धस्य पितृब्रह्मपुरनयनं फलम् । सर्व्वत्र पदपूजानन्तरं श्राद्धादि कार्य्यम् । विष्णुरुद्रब्रह्मकश्यपपदेषु श्राद्धकर्त्तुर्मुक्तिरपि फलम् । पितॄणामक्षयतृप्तिः सर्व्वपदेषु साधारणं फलम् । नरकस्थानां स्वर्गप्राप्तिः स्वर्गस्थानां मोक्षप्राप्तिर्वा । वायुपुराणमते ब्रह्मरुद्रकश्यपान्यतमपदे श्राद्धोपसंहारः । श्राद्धोपसंहारः कश्यपपदे इति मिश्राः । ततः पदशिलागतायामेवोत्तरभागस्थायां गजकर्णिकायां पितॄणां स्वर्गनयनकामनया पितृतर्पणं कारयन्ति । अथ गयाशिरसि । ओमद्यामुक-

गोत्रस्यामुकशर्मणः स्वर्गप्राप्तिकामो गयाशिरसि पिण्डदानमहं करिष्ये इति सङ्कल्प्य स्वसूत्रोक्तरीत्या रेखास्तरणावनेजनादिपिण्डसमुत्थानपर्य्यन्तं कुर्य्यात् । ततः पुनस्तत्रैव ओमद्यामुकगोत्रस्यामुकशर्मणो मोक्षप्राप्तिकामो गयाशिरसि पिण्डदानमहं करिष्ये इति सङ्कल्प्य पूर्ववत् पिण्डदानं कुर्य्यात् । एवं स्त्रीपिण्डोऽपि देयः । अत्र च न सम्बन्धादरः "यन्नाम्ना" इतिस्मरणात् । एतच्च पिण्डदानं जिह्वालोलमधुस्रवामुण्डपृष्ठोत्तरमानसाभ्यन्तरे गदाधरावासादिप्रदेशे क्वापि कार्य्यम् ।

क्रौञ्चपादात् फल्गुतीर्थं यावत्साक्षाद्गयाशिरः ।

इतिवचनात् । क्रौञ्चपादस्तु मुण्डपृष्ठे ।

अथ सप्तमदिनकृत्यम् ।

कृतदेवार्चनान्तकर्मा गदालोलं गत्वा तत ओमद्य पापक्षयस्वर्गप्राप्तिकामो गदालोले स्नानमहं करिष्ये इति सङ्कल्प्य

गदालोले महातीर्थे गदाप्रक्षालने ह्रदे ।
स्नानं करोमि शुद्ध्यर्थमक्षयाय स्वराप्तये ॥

इति मन्त्रं पठित्वा मज्जेत् । ततस्तर्पणं कृत्वा ओमद्य पितृब्रह्मलोकनयनकामो गदालोले श्राद्धमहं करिष्ये इति सङ्कल्प्य श्राद्धं कुर्य्यात् । यदि पिण्डमात्रं ददाति तदाप्येवं सङ्कल्पः । पिण्डदानं तु स्वसूत्रानुसारेण कार्य्यम् । ततोऽक्षयवटं गत्वा तन्मूलसन्निहिते आचारादुत्तरभागे ओमद्य पितॄणामक्षयतृप्तिकामः पितृब्रह्मपुरनयनकामो वाऽक्षयवटे श्राद्धमहं करिष्ये इति सङ्कल्प्य तत्र श्राद्धं कुर्य्यात् । ओमद्य पितृब्रह्मलोकनयनकामो ब्रह्मकल्पितान् ब्राह्मणानहं भोजयिष्ये इति सङ्कल्प्य तान् त्रीन् भोजयेत् । तदलाभे ब्राह्मणान्तरमपि । ओमद्य कोटिब्राह्मणभोजनजन्यफलसमफलप्राप्तिकामोऽक्षयवट एकं

ब्राह्मणमहं भोजयिष्ये इति सङ्कल्प्य तत्रैकं ब्राह्मणं भोजयेत् । तत ओमद्य पितृब्रह्मलोकनयनकामो वटेशदर्शनमहं करिष्ये इति सङ्कल्प्य वटेशप्रतिमां पश्येत् । अनेन क्रमेणैव नतिं पूजां च कुर्य्यात् ।

ॐ एकार्णवे वटस्याग्रे यः शेते योगनिद्रया ।
बालरूपधरस्तस्मै नमस्ते योगशायिने ॥

इति मन्त्रः । ततः

ॐ संसारवृक्षशस्त्रायाशेषपापक्षयाय च ।
अक्षयब्रह्मदात्रे च नमोऽक्षयवटाय वै ॥

इत्यनेनाक्षयवटं प्रणमेत् ।

इति सप्तमदिनकृत्यम् ।

अथ नियतदिनकर्त्तव्यानि केवलकाम्यानि ।

तत्र पूर्वदिने कृतोपवासो गयाग्रामस्थगायत्रीसम्मुखमहानदीप्रदेशे गायत्रीतीर्थे तत्र स्नात्वा प्रातःसन्ध्योपासनं कार्य्यम् । तत्र स्नानप्रातःसन्ध्यावन्दनश्राद्धानां कुले ब्राह्मण्याविच्छेदः फलम् । तथा मध्याह्ने उद्यन्तपर्वते सावित्र्याः पुरतोऽवस्थिते समुद्यन्ततीर्थे कुलशतस्वर्गनयनकामनया मध्याह्नसन्ध्यावन्दनश्राद्धानि कार्य्याणि । एवमेव सायाह्ने सरस्वत्याः पुरतः प्राच्यां सरस्वत्यां स्नात्वा सायंसन्ध्योपासने कुलसर्वज्ञतानयनं फलम् । सन्ध्यात्रयवन्दने बहुजन्मजातसन्ध्यालोपजनितपापविनिर्मुक्तिः फलम् । अत्र पूर्वदिने उपवासोऽपि तन्त्रमित्याहुः । ततो विशालादितीर्थसप्तकेऽन्यतमस्मिन् श्राद्धे पिण्डदाने वा कुलशतब्रह्मलोकनयनं फलमिति । विशालालेलिहानभरताश्रममुण्डपृष्ठगदाधरसमीपाकाशगङ्गागिरिकर्णमुखानि सप्त तीर्थानि । गोदातीर्थे वैतरण्यां च प्रत्येकमेकविंश-

तिकुलोद्धारः फलमिति । वैतरणी भस्मकूटस्थितदेवनदीपूर्वतः । अत्र च सन्तरणे आचारमाप्तो मन्त्रः—

या सा वैतरणीनाम नदी त्रैलोक्यविश्रुता ।
सावतीर्णा महाभागा पितॄणां तारणाय वै ॥ इति ।

अत्र च पित्रादिनरकोद्धारणकामनया गोदानमपि कार्य्यम् । वैतरण्यां तर्पणं तीर्थप्राप्तिनिमित्तकं श्राद्धं पिण्डदानं वा कार्य्यम् । देवनद्यां गोप्रचारे मानसफले घृतकुल्यायां मधुकुल्यायां गदालोले अमरके कोटितीर्थे रुक्मिणीकुण्डे प्रत्येकं पिण्डदाने पितृस्वर्गनयनं फलमिति । मार्कण्डेयेशस्य कोटीशस्य नमस्कारे प्रत्येकं पितृतारणं फलमिति । पाण्डुशिलादर्शने नरकस्थपितृपूतत्वं स्वर्गनयनं च फलम् । पाण्डुशिलाश्राद्धे शाश्वताव्ययपदप्राप्तिः फलम् । दत्तश्राद्धस्य पाण्डोः शाश्वताव्ययपदश्रवणात् ।

घृतकुल्या मधुकुल्या देविका च महानदी ।
शिलायां सङ्गतास्तत्र मधुस्रवा प्रकीर्त्तिता ॥

एताश्चतस्रो मुण्डपृष्ठदक्षिणभागे शिलासङ्गता मधुस्रवापदवाच्या भवन्ति । तस्यां च स्नानेऽश्वमेधायुतफलम् । तर्पणे श्राद्धे च प्रत्येकं सहस्रकुलोद्धरणपूर्वकविष्णुलोकनयनं फलम् । दशाश्वमेधिके हंसतीर्थे च श्राद्धे प्रत्येकं पितृस्वर्गनयनं फलम् । अनयोर्नमस्कारे प्रत्येकं पितृशिवपुरनयनं फलम् । पितामहदक्षिणे महानद्यां दशाश्वमेधः । मतङ्गपदे श्राद्धकर्त्तुर्ब्रह्मलोकनयनं फलम् । मथोकुण्डस्नानात्कर्त्तुर्मुक्तिः, तर्पणात् पिण्डदानात् पितृमुक्तिः । उद्यन्तपर्वतसमीपे मथोकुण्डम् । रामेश्वरस्याङ्गारकेश्वरस्य च नमस्कारे प्रत्येकं पितृस्वर्गनयनं फलम् । गयाकूपे पिण्डदानस्याश्वमेधतुल्यं फलम् । गयाकूपभस्मना

स्नानेऽपि पितॄणां नरकतारणं फलम्। धौतपादे निःक्षीरासङ्गमे रामपुष्करिणीनामके स्नात्वा पित्रादिश्राद्धकरणे विशिष्ट एव ब्रह्मलोकनयनं फलम्। सुषुम्नायां श्राद्धस्य त्रिःसप्तकुलोद्धारः फलम्। सुषुम्ना गयामध्ये। वसिष्ठतीर्थकुण्डे स्नात्वा वसिष्ठेशनमस्कारेऽश्वमेधतुल्यं फलम्। गृध्रवटोत्तरे वसिष्ठाश्रमः। तत्र वसिष्ठकुण्डवसिष्ठेश्वरौ। धेनुकारण्यकामधेनुपदयोः पिण्डदानस्य कामधेनुनमस्कारस्य च प्रत्येकं ब्रह्मलोकनयनं फलम्। कर्दमाले गयानाभौ मुण्डपृष्ठसमीपे स्नानपूर्वकश्राद्धे पितृस्वर्गनयनं फलम्। चण्डिकानमस्कारेऽपीदं फलम्। फल्ग्वीशस्य चण्डीशस्य सङ्गमेशस्य च नमस्कारे प्रत्येकं पितृस्वर्गनयनं फलम्।

गयागजो गयादित्यो गायत्री च गदाधरः।
गया गयाशिरश्चैव षड्गया मुक्तिदायिकाः॥

एतेषां पूजापिण्डदानादितो मुक्तिः फलम्। गया तु महानद्युदीचीकनकनन्दामध्ये। गयाशिरस्तु नागकूटगृध्रकूटोत्तरमानसमध्यगतम्। गयायां वृषोत्सर्गस्य एकविंशतिकुलोद्धारः फलम्। गयायां यत्र कुत्रचित्प्रदेशे श्राद्धे पिण्डदाने च प्रत्येकं कुलशतस्योद्धारपूर्वकब्रह्मलोकनयनं फलम्। भरताश्रमे महानद्यां च स्नात्वा रामेशं रामं सीतां च दृष्ट्वा "रामराम महाबाहो" इत्यादिमन्त्रं पठेत्। रामेशसन्निहितरामपदे पित्रादिकुलसहितस्वविष्णुपदगमनकामनया श्राद्धं पिण्डदानं वा कार्य्यम्। शिलादक्षिणहस्ते कुण्डनामा पर्वतः। तत्र श्राद्धे पिण्डदाने पितॄणां ब्रह्मपुरनयनं फलम्। सीताद्रिदक्षिणे गिरौ मतङ्गपदे पिण्डदानस्य पितृस्वर्गः फलम्। शिलावामहस्ते उद्यन्तपर्वते पिण्डदानस्य पितृब्रह्मपुरनयनम्।

उद्यन्तककुण्डे मध्याह्ने सावित्रीनामकसन्ध्यावन्दने कोटिजन्माविच्छिन्नधनाढ्यवेदपारगविप्रत्वं फलम् । स्नात्वागस्त्यस्य पदे पिण्डदातुर्दिवौकोगणपूज्यमानपितृसहितब्रह्मलोकगमनं फलम् । योनिसङ्करविमुक्तिपूर्वकपरब्रह्मगमनकामनया ब्रह्मयोनिप्रवेशनिर्गमौ कार्य्यौ । गयाकुमारनमस्कारस्य ब्राह्मण्यं फलम् । सोमकुण्डे स्नानतर्पणपिण्डैः पितृसोमलोकनयनं फलम् । काकशिलायां काकबलिकर्तुः सद्योमुक्तिः । स्वर्गद्वारेश्वरनमस्कारात् स्वर्गतदुत्तरब्रह्मलोकप्राप्तिः फलम् । आकाशगङ्गायां पिण्डदानस्य पितृस्वर्गनयनं फलम् । प्रेतशिलाया दक्षिणहस्ते भस्मकूटनामा पर्वतः तत्र भस्मस्नानात् स्वर्गफलम् । अक्षयवटवटेशप्रपितामहाग्रे रुक्मिणीकुण्डं तत्पश्चिमे कपिलानदी तत्तीरे कपिलेश्वरः । नद्याममासोमसमागमे स्नानस्य कपिलेश्वरनमस्कारस्य तत्पूजायाश्च स्वर्गः फलम् । माहेश्वरीकुण्डे रुक्मिणीकुण्डे च श्राद्धकर्तुः स्वर्गः फलम् । माहेश्वरीकुण्डे मङ्गलापूजनस्य सर्वसौभाग्यप्राप्तिः फलम् । ततो जनार्दनं सम्पूज्य दध्योदनं नैवेद्यं दत्त्वा तच्छेषेण जनार्दनदक्षिणे पाणौ स्वस्य दध्यक्तपिण्डदानं वामजान्वाच्यापसव्येन तिलैर्विना कार्य्यम् । पितृभिः सहितविष्णुलोकनयनं फलम् । एवं जीवतामन्येषामपि विष्णुपुरनयनकामनया कार्य्यम् । मन्त्रस्तु—

एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ।
गयाशीर्षे त्वया देयो मह्यं देव मृते मयि ॥

एवं जीवतामुद्देशेनापि पिण्डं दत्त्वा—

यस्तु पिण्डो मया दत्तस्त्वामुद्दिश्य जनार्दन ।
देहि देव गयाशीर्षे तस्मै तस्मै मृते तु तम् ॥

इति पठेत् । नमस्कारमन्त्रस्तु—

जनार्द्दन नमस्तुभ्यं नमस्ते पितृरूपिणे ।
पितृमात्रे नमस्तुभ्यं नमस्ते मुक्तिहेतवे ॥
नमस्ते पुण्डरीकाक्ष ऋणत्रयविमोचन !
लक्ष्मीकान्त नमस्तेऽस्तु नमस्ते पितृमोक्षद ॥

इत्यग्निपुराणे जनार्द्दनहस्ते पिण्डत्रयदानमुक्तम् । प्रेतकुण्डे स्नानस्य श्राद्धपिण्डदानयोः पितृप्रेतत्वविमुक्तिः फलम् । वैकुण्ठे लोहदण्डे गिरिकूटे श्राद्धादिकर्त्तुः पितृब्रह्मपुरनयनं फलम् । गृध्रकूटे स्नात्वा गृध्रेश्वरदर्शनस्य शम्भोः पुरप्राप्तिः फलम् । गृध्रवटनमस्कारस्य स्वर्गः फलम् । ऋणमोक्षपापमोक्षशिवदर्शनस्य शिवपुरव्रजनं फलम् । गजरूपविघ्नेशदर्शनस्य शिवपुरनयनं फलम् । स्नात्वा गायत्रीगयादित्यदर्शनस्य स्वर्गः फलम् । आदिपालगिरिस्थब्रह्मदर्शने पितृतारणं फलम् । गयानाभौ पिण्डदाने पितॄणां ब्रह्मपुरनयनं फलम् । मुण्डपृष्ठाद्रेरराविन्दाद्रेश्च दर्शने प्रत्येकं पापनाशः फलम् । अग्निपुराणे सर्वकर्मान्ते गदाधरनमस्कारप्रार्थनामन्त्रा उक्तास्तेऽत्रानाकाङ्क्षितत्वान्न लक्षिताः । एवमेव नमस्कारप्रार्थने कुर्य्यादित्यन्ये ।

इतिवायुपुराणीयः प्रयोगः समाप्तः ।

अत्र च पतितादीनामपि प्रथमवर्षे गते प्रेतत्वमुक्तिकामनया गयायां श्राद्धं कार्य्यम् ।

क्रियते पतितानां तु गते संवत्सरे क्वचित् ।

इत्यादिवचनात् । इदं वचनम्—

पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ।
न चाश्रुपातः पिण्डो वा कार्य्यं वा श्राद्धिकं क्वचित् ॥

इत्यस्य प्रतिप्रसवः । पतितास्तु—

ब्रह्मपुराणे,

शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रियाजलैः ।
सुदूरात् परिहर्त्तव्यः कुर्वन् क्रीडां मृतस्तु यः ॥
नागानां विप्रियं कुर्वन् हतश्चाप्यथ विद्युता ।
निगृहीतः स्वयं राज्ञा चौर्य्यदोषेण कुत्रचित् ॥
परदारान् रमन्तश्च द्वेषात् तत्पतिभिर्हताः ।
असमानैश्च सङ्कीर्णैश्चाण्डालाद्यैश्च विग्रहम् ॥
कृत्वा तैर्निहतास्तांश्च चाण्डालादीन् समाश्रिताः ।
गराग्निविषदाश्चैव पाषण्डाः क्रूरबुद्धयः ॥
क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् ।
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ॥
कुशिल्पजीविनो ये च सूनालङ्कारकारिणः ।
मुखेभगास्तु ये केचित् क्लीबप्राया नपुंसकाः ॥
ब्रह्मदण्डहता ये तु ये चापि ब्राह्मणैर्हताः ।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः ॥

क्रीडामित्यभिधानात् दैवात् तेभ्यो मरणे न पातित्यम् । विद्युतेति । शोकादितो विद्युत्पातमङ्गीकृत्य तद्देशं गत्वा विद्युता मृत इति मिश्राः । गरं, व्याधिजनकमौषधम् । पाषण्डा, वेदबाह्याः । क्रूरबुद्धयो, यावज्जीवं परानिष्टचिन्तकाः । कुशिल्पिनः, चर्मादिशिल्पिनो ब्राह्मणादयः । सूनालङ्कारकारिणः, वधस्थानाधिकृता ब्राह्मणादयः । मुखेभगा उत्कलादौ प्रसिद्धाः ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजि-
तचरणकमल-
श्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजाधिराज-
मधुकरसाहसूनु-

श्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरी-
कविकासदिनकर-
श्रीवीरसिंहोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनु-
सकलविद्यापारावारपारीणजगद्दारिद्र्यमहागजपारीन्द्रविद्व-
ज्जनजीवातु-
श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे
तीर्थप्रकाशे गयाप्रकरणं समाप्तम् ॥

---

## अथ मन्दारमाहात्म्यम् ।

तत्र वराहपुराणे,

वराह उवाच ।

पुनरन्यत्प्रवक्ष्यामि एकान्ते शृणु सुन्दरि ।
स्थानं मे परमं गुह्यं कर्मिणां तु सुखावहम् ॥
जाह्नव्या दक्षिणे कूले विन्ध्यपृष्ठसमाश्रिते ।
मन्दारेति च विख्यातं सर्वभागवतप्रियम् ॥
तत्र त्रेतायुगे भूमिकामो नाम महाद्युतिः ।
भविष्यति न सन्देहः स मेऽर्चां स्थापयिष्यति ॥
क्रीडमानोऽस्म्यहं तत्र दृष्ट्वा मन्दारपुष्पितम् ।
कुण्डान्येकादशैवात्र विन्ध्ये मे सन्ति सुन्दरि ॥
मम चैव प्रभावेण मन्दारश्च महाद्रुमः ।
द्वादश्यां च चतुर्दश्यां स पुष्प्यति द्रुमोत्तमः ॥
तीर्थे मन्दारकुण्डे तु एकभक्तोषितो नरः ।
स्नानं करोति शुद्धात्मा स गच्छेत्परमां गतिम् ॥
अथ प्राणान् प्रमुञ्चेत कुण्डे मन्दारसंज्ञिते ।
तपः कृत्वा महाभागे मम लोकं स गच्छति ॥

तथा,

मन्दारं परमं गुह्यं तस्मिन् गुह्ये शिलोच्चये ।
दक्षिणार्द्धे स्थितं चक्रं वामभागे न वै गदा ॥
लाङ्गलं मुशलं चैव शङ्खं तिष्ठति चाग्रतः ।
एतन्न जानते केचित् मम मायाप्रमोहिताः ॥
मुक्त्वा भागवताम् सर्वान् श्रितान्वा नाहसंज्ञिनान् । इति ।
मन्दारे मधुसूदनम् इतिनारसिंहेऽप्युक्तम् ।

अथ कोकामुखमाहात्म्यम् ।

तत्र वाराहपुराणे,

वराह उवाच ।

नास्ति कोकामुखात् क्षेत्रं नास्ति कोकामुखाच्छुभम् ।
नास्ति कोकामुखात्स्थानं नास्ति कोकामुखात्प्रियम् ॥
शुचिः कोकामुखं गत्वा परं योगमवाप्नुयात् ।
कर्माणि रक्तः कुर्य्याच्चेदिष्टं भवति चात्मनः ॥
यानि यानि च क्षेत्राणि त्वया पृष्टो वसुन्धरे ।
कोकामुखसमं तीर्थं न भूतं न भविष्यति ॥
मम सा परमा मुक्तिर्न तां जानन्ति मोहिताः ।
स्थिता कोकामुखे भूमि एतत्ते कथितं मया ॥

तथा,

पञ्चयोजनविस्तारे क्षेत्रे कोकामुखे मम ।
यस्तीर्थानि विजानाति न स पापेन लिप्यते ॥
तत्र कोकामुखे तीर्थे स्थितोऽहं दक्षिणामुखः ।
वराहरूपी भगवांस्तिष्ठामि पुरुषाकृतिः ॥
वामोन्नतमुखं कृत्वा पञ्चदंष्ट्रासमन्वितम् ।
पश्यामि च जगत्सर्वं ये च भक्ता मम प्रियाः ॥
यदि कोकामुखं गच्छेत् कदाचित्कालपर्य्ययात् ।
न ततः सन्निवर्त्तेत यदीच्छेद्गतिमुत्तमाम् ॥
न साङ्ख्येन न योगेन सिद्धो याति महत्पदम् ।
याति कोकामुखं यस्तु तवैतत् कथितं मया ॥ इति ।

महाभारते,

कोकामुखमुपस्पृश्य ब्रह्मचारी यतव्रतः ।
जातिस्मरत्वं प्राप्नोति दृष्टमेतत् पुरातनैः ॥

दिष्टं, कथितम् ।

इति कोकामुखमाहात्म्यम् ।

अकुरुत कुरुक्षेत्रे यस्मिन् पुरा खलु कर्षणं
शतमखमुखैः साकं देवैर्मखं च पितामहः ।
वितरणविधिर्यस्मिन् वाञ्छाधिकं वसु वर्षति
प्रथयतु कुरुक्षेत्रं क्षेमं तदत्र चिराय नः ।

अथ कुरुक्षेत्रमाहात्म्यम् ।

श्रुतिः, तेषां कुरुक्षेत्रं देवयजनमास तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनमिति । तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यत इदं देवयजनमित्यादि ।

महाभारते गदापर्वणि,

ऋषय ऊचुः ।

प्रजापतेरुत्तरवेदिरुच्यते
सनातनी राम समन्तपञ्चकम् ।
समीजिरे यत्र पुरा दिवौकसो
वरेण सत्रेण महावरप्रदाः ।
पुरा च राजर्षिवरेण धीमता
बहूनि वर्षाण्यमितेन तेजसा ।
प्रकृष्टमेतत् कुरुणा महात्मना
ततः कुरुक्षेत्रमितीह पप्रथे ॥

राम उवाच ।

किमर्थं कुरुणा कृष्टं क्षेत्रमेतन्महात्मना ।
एतदिच्छाम्यहं श्रोतुं कथ्यमानं तपोधनाः ॥

ऋषय ऊचुः ।

पुरा किल कुरुं राम कर्षन्तं सततोत्थितम् ।

अभ्येत्य शक्रस्त्रिदिवात्पर्य पृच्छत कारणम् ॥

इन्द्र उवाच ।

किमिदं वर्त्तते राजन् प्रयत्नेन परेण च ।
राजर्षे किमभिप्रेतं येनेयं कृष्यते क्षितिः ॥

कुरुरुवाच ।

इह ये पुरुषाः क्षेत्रे मरिष्यन्ति शतक्रतो ।
ते गमिष्यन्ति सुकृताल्लोकान् पापविवर्ज्जितान् ॥
अवहस्य ततः शक्रो जगाम त्रिदिवं प्रभुः ।
राजर्षिरप्यनिर्विण्णः कर्षत्येव वसुन्धराम् ॥
आगम्यागम्य चैवैनं भूयो भूयोऽवहस्य च ।
शतक्रतुरनिर्विण्णं पृष्ट्वा पृष्ट्वा जगाम ह ॥
यदा तु तपसोग्रेण चकर्ष वसुधां नृपः ।
ततः शक्रोऽब्रवीद्देवान् राजर्षेर्यच्चिकीर्षितम् ॥
एतच्छ्रुत्वाऽब्रुवन् देवाः सहस्राक्षमिदं वचः ।
वरणे छन्द्यतां शक्र राजर्षिर्यदि शक्यते ॥
यदि ह्यत्र प्रमीता वै स्वर्गं गच्छन्ति मानवाः ।
अस्मानानिष्ट्वा क्रतुभिर्भोगो नो न भविष्यति ॥
आगम्य च ततः शक्रस्तदा राजर्षिमब्रवीत् ।
अलं खेदेन भवतः क्रियतां वचनं मम ॥
मानवा ये निराहारा देहं त्यक्ष्यन्त्ययन्त्रिताः ।
युधि वा निहताः सम्यगपि तिर्य्यग्गता अपि ॥
ते स्वर्गभाजो राजेन्द्र भविष्यन्ति महामते ।
तथास्त्विति ततो राजा कुरुः शक्रमुवाच ह ॥
ततस्तमभ्यनुज्ञाय प्रहृष्टेनान्तरात्मना ।
जगाम त्रिदिवं भूयः क्षिप्रं बलनिषूदनः ॥

एवमेतद्यदुश्रेष्ठ कृष्टं राजर्षिणा पुरा ।
शक्रेण चाभ्यनुज्ञातं ब्रह्माद्यैश्च सुरैस्तथा ॥
नातः परतरं पुण्यं भूमेः स्थानं भविष्यति ।
इह तप्स्यन्ति ये केचित्तपः परमकं नराः ॥
देहत्यागेन ते सर्वे यास्यन्ति ब्रह्मणः क्षयम् ।
ये पुनः पुण्यभाजो वै दानं दास्यन्ति मानवाः ॥
तेषां सहस्रगुणितं भविष्यत्यचिरेण वै ।
ये चेह नित्यं मनुजा निवत्स्यन्ति शुभैषिणः ॥
यमस्य विषयं ते तु न द्रक्ष्यन्ति कदाचन ।
यक्ष्यन्ति ये च क्रतुभिर्महद्भिर्मनुजेश्वराः ॥
तेषां त्रिविष्टपे वासो यावद्भूमिर्धरिष्यति ।
अपि चात्र स्वयंशक्रो जगौ गाथां सुराधिपः ॥
कुरुक्षेत्रे निबद्धां वै तां शृणुष्व हलायुध ।
पांशवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः ॥
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ।
सुरर्षभा ब्राह्मणसत्तमाश्च तथा नृगाद्या नरदेवमुख्याः ।
इष्ट्वा महार्हैः क्रतुभिर्नृसिंह सन्त्यज्य देहान् सुगतिं प्रपन्नाः ॥
तद्रन्तुकारन्तुयोर्यदन्तरं रामह्रदानां च मचक्रुकस्य च ।
एतत्कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तरवेदिरुच्यते ॥
शिवं महत्पुण्यमिदं दिवौकसां सुसम्मतं सर्वगुणैः समन्वितम् ।
अतश्च सर्वेऽत्र हता नृपा रणे यास्यन्ति पुण्यां गतिमक्षयां सदा॥इति।

वामनपुराणे,

शृणु सप्त वनानीह कुरुक्षेत्रस्य मध्यतः ।

---

१ स्थानम् ।

येषां नामानि पुण्यानि सर्वपापहराणि च ।
काम्यकं च वनं पुण्यं तथाऽदितिवनं महत् ॥
व्यासस्य च वनं पुण्यं फलकीवनमेव च ।
तत्र सूर्यवनं स्थानं तथा मधुवनं महत् ॥
पुण्यं सीतावनं नाम सर्वकल्मषनाशनम् ।
वनान्येतानि वै सप्त नदीः शृणुत मे द्विजाः ॥
सरस्वती नदी पुण्या तथा वैतरणी नदी ॥
अपर्णा च तथा पुण्या गङ्गा मन्दाकिनी नदी ।
दृषद्वती महापुण्या तथा हिरण्वती नदी ॥
वर्षाकालवहाः सर्वा वर्जयित्वा सरस्वतीम् ।
एतासामुदकं पुण्यं प्रावृट्काले प्रकीर्त्तितम् ॥
रजस्वलत्वमेतासां विद्यते न कदाचन ।
तीर्थस्य च प्रभावेन पुण्या ह्येताः सरिद्वराः ॥ इति ।

तत्रैव कुरुरुवाच ।

यावदेतन्मया कृष्टं धर्मक्षेत्रं तदस्तु च ।
स्नातानां च मृतानां च महापुण्यफलं त्विह ॥
उपवासं च दानं स्नानं जप्यं च माधव ।
होमो यज्ञादिकं चान्यच्छुभं वाप्यशुभं विभो ॥
त्वत्प्रसादाद्धृषीकेश शङ्खचक्रगदाधर ।
अक्षयं प्रवरे क्षेत्रे भवत्वेतन्महत्फलम् ॥
तथा त्वं च सुरैः सार्द्धं सह देवेन शूलिना ।
वसात्र पुण्डरीकाक्ष मन्नाम्ना चेदमुच्यते ॥
इत्येवमुक्तस्तेनाहं राज्ञा वै दत्तवान् वरम् ।
तथाच त्वं दिव्यवपुर्भव भूयो महीपते ॥
तथान्तकाले मय्येव लयमेष्यसि सुव्रत ।

कीर्त्तिश्च शाश्वती तुभ्यं भविष्यति न संशयः ॥
कलिद्वापरयोर्मध्ये व्यासेन च महात्मना ।
सरःप्रमाणं यत्प्रोक्तं तच्छृणुध्वं द्विजोत्तमाः ॥
विश्वेश्वरादस्ति पुरा तथा कन्या जरद्गवी ।
यावद्गौर्जरती प्रोक्ता तावत् सन्निहितं सरः ॥
मया श्रुतं प्रमाणं तु पठ्यमानं तु वामने ।
तच्छृणुध्वं द्विजश्रेष्ठाः पुण्यवृद्धिकरं महत् ॥
विश्वेश्वरादेकरात्रिर्यावच्चाथ सरस्वती ।
सरः सन्निहितं ज्ञेयं समन्तादर्द्धयोजनम् ॥
एतदाश्रित्य देवाश्च ऋषयश्च समागताः ।
सेवन्ते मुक्तिकामाश्च गन्धर्वाप्सरसः स्थिताः ॥
यदा सूर्य्यस्य ग्रहणं कालेन भविता क्वचित् ।
सन्निहत्यां तदा स्नात्वा पूताः स्वर्गं गमिष्यथ ॥
ये तु सिद्धा महात्मानस्ते लिङ्गस्पर्शनेन च ।
सृजन्ति परमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥
एवं ज्ञात्वा ततो ब्रह्मा देवानां हितकाम्यया ।
उपर्य्युपरि लिङ्गानि सप्त तत्र चकार ह ॥
ततो ये मुक्तिकामाश्च सिद्धा यज्ञपरायणाः ।
संसेव्य संप्रयत्नेन प्रयाताः परमं पदम् ॥
पांशवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ॥
ततोऽहं ताः प्रजा दृष्ट्वा पिहितास्तेन तेजसा ।
क्रोधेन महता युक्तो लिङ्गमुत्पाट्य चाक्षिपम् ॥
स क्षिप्तः सरसो मध्ये ऊर्ध्वमेव पुनः स्थितः ।
तदाप्रभृति लोकेषु स्थाणुरित्येव विश्रुतः ॥

सकृद्दर्शनमात्रेण विमुक्तः सर्वकिल्बिषैः ।
प्रयाति मोक्षं परमं यस्मान्नावर्त्तते पुनः ॥
यश्चेह तीर्थे निवसेत् कृष्णाष्टम्यां समाहितः ।
स मुक्तः पातकैः सर्वैरगम्यागमनोद्भवैः ॥

**महाभारते,**

ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम् ।
पापेभ्यो विप्रमुच्यन्ते तद्गताः सर्वजन्तवः ॥
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात् सोऽपि पापात् प्रमुच्यते ॥
तत्र वै संवसेद्धीरः सरस्वत्यां युधिष्ठिर ।
यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ॥
गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते ।
ब्रह्मक्षेत्रे महापुण्यमभिगच्छन्ति भारत ॥
मनसाप्यभिकामस्य कुरुक्षेत्रं युधिष्ठिर ।
पापानि च विनश्यन्ति स्वर्गलोकं स गच्छति ॥
गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रे कुरूद्वह ।
फलं प्राप्नोति च तदा राजसूयाश्वमेधयोः ॥

**तथा,**

ततो गच्छेच्च धर्मज्ञ तीर्थं सन्निहितामपि ।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥
मासि मासि समेष्यन्ति पुण्येन महतान्विताः ।
सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ॥
अश्वमेधशतं तत्र तेनेष्टं शाश्वतं भवेत् ।
पृथिव्यां यानि तीर्थानि अन्तरिक्षचराणि च ॥
नद्यो नदास्तडागाश्च सर्वप्रस्रवणानि च ।

मासि मासि समेष्यन्ति सन्निहत्यां न संशयः ॥
तीर्थसन्ननयनादेव सन्निहत्येति विश्रुता ।
यत्किञ्चिद्दुष्कृतं कर्म स्त्रिया वा पुरुषस्य वा ॥
स्नातमात्रस्य तत्सर्वं नश्यते नात्र संशयः ।
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥
प्रणिपत्य ततो यक्षं द्वारपालमवर्णकम् ।
कोटिकूटमुपस्पृश्य लभेद्बहुसुवर्णकम् ॥
गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नायीत धर्मज्ञ ब्रह्मचारी समाहितः ॥
राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः ।
पृथिव्यां नैमिषं पुण्यमन्तरिक्षे च पुष्करम् ॥
त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते ।
पांशवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः ॥
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ।
उत्तरेण दृषद्वत्या दक्षिणेन सरस्वतीम् ॥
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ।
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ॥
अप्येतां वाचमुत्सृज्य स्वर्गलोके महीयते ।
ब्रह्मवेदिं कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम् ॥
तत्रावसन्ति ये राजन् न ते शोच्याः कथञ्चन । इति ।

अथ कुरुक्षेत्रशब्दार्थनिर्वचनम् ।

कुरुणा कृष्टं क्षेत्रं कुरुक्षेत्रम् । तदुक्तम्—
आद्यं ब्रह्मसरः पुण्यं ततो रामह्रदः स्मृतः ।
कुरुणा कृषिणा कृष्टं कुरुक्षेत्रं ततः स्मृतम् ॥ इति ।
ननु तीर्थस्यानादित्वात् कुरुकर्षणात्पूर्वं कथं कुरुक्षेत्रत्व-

मिति चेत्, न। कुरोरुपलक्षणत्वात्। वस्तुतः संज्ञाभेदमात्रमेतत्। प्रथमं ब्रह्मसरःसंज्ञा ततो रामह्रदसंज्ञा ततः कुरुक्षेत्रसंज्ञेति। यथा बालस्य प्रथममेका संज्ञा ततो राज्यादिलाभे विक्रमादित्यादिसंज्ञा। कौ पृथिव्यां रुवन्ति ब्राह्मणादयो वर्णाः कुरवस्तेषां पापं क्षीयतेऽत्रेति कुरुक्षेत्रमित्यप्याहुः।

समन्तपञ्चकनिर्वचनम्।

सम्यक् अन्तो येषु क्षत्रियाणां ते समन्ता रामकृतरुधिरोदह्रदास्तेषां पञ्चकमित्यर्थः। उक्तं च–

आदिपर्वणि,

स सर्वं क्षत्रमुत्साद्य स्ववीर्येणातुलद्युतिः।
समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान्॥
तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम्।
समन्तपञ्चकमिति पुण्यं तत् परिकीर्त्तितम्॥
येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते।
तेनैव नाम्नातिदेशं वाच्यमाहुर्मनीषिणः॥
तस्मिन् परमधर्मिष्ठे देशे भूदोषवर्जिते।
अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया॥
एवं नामाभिनिर्वृत्तिस्तस्य देशस्य वै द्विजाः।
पुण्यश्च रमणीयश्च स देशो वः प्रकीर्त्तितः॥

एवं ब्रह्मसर इति तस्यैव संज्ञान्तरम्। रामह्रद इति च त्रेतायाम्। रामह्रदः स्मृत इत्युक्तेः। एवमुत्तरवेदिसंज्ञा विनशनसंज्ञा प्रयागसंज्ञा सन्निहतसंज्ञा सन्निहत्यादिसंज्ञाप्यस्यैव। विनशनपदेन यद्यपि यत्र नष्टा सरस्वती स देश उच्यते। तथाऽपि सम्पूर्णे कुरुक्षेत्रेऽपि तत्प्रयोगात्तदपि तथा। एवं च रामह्रदादिशब्दानां कुरुक्षेत्रैकदेशे रूढानां समस्तकुरुक्षेत्रे रूढिर्निरूढल-

क्षणा वेत्यन्यदेतत् । एवं कुरुजाङ्गलशब्दस्याप्येकदेशे रूढस्य तथात्वम् ।

सरस्वतीदृषद्वत्योरन्तरे कुरुजाङ्गले ।
मुनिप्रवरमासीनं पुराणं लोमहर्षणम् ॥

इतिवामनपुराणप्रयोगदर्शनात् । "समन्तपञ्चके पञ्च चकार"इत्यत्र समन्तपञ्चकत्वमुपलक्षणतया । अथ वा प्रवाहानादितया पूर्वमपि तत्र रामह्रदपञ्चकमासीदिति तस्य समन्तपञ्चकत्वमिति ।

## अथ कुरुक्षेत्रपरिमाणम् ।

भारते,

तद्रन्तुकारन्तुकयोर्यदन्तरं रामह्रदानां च मचक्रुकस्य च ।
एतत्कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते ॥
समन्तपञ्चकं नाम धर्मस्थानमनुत्तमम् ।
आसमन्ताद्योजनानि पञ्च पञ्च च सर्वतः ॥ इति ।

रन्तुकयक्षो वडगलग्रामादीशान्यां दिशि सरस्वतीतीरेऽस्ति। अरन्तुकयक्षद्वयम् । एकः शीकग्रामे । द्वितीयस्तु विनशननिकटे वहत्रग्रामे सरस्वतीतीरे । रामह्रदा रामत्रद्यग्रामे कुरुक्षेत्रनैर्ऋतकोणे प्रसिद्धाः । अदितिवनेऽमीतिग्रामे मचक्रुक इति प्राप्यते। एवं च समस्तकुरुक्षेत्रेशानकोणस्थवर्णकयक्षात् समसूत्रदक्षिणस्यां दिशि चत्वारिंशत्क्रोशोपरि समस्तकुरुक्षेत्राग्नेयकोणे शीकग्रामे पुराणाल्लोकप्रसिद्ध्या चारन्तुकयक्षो लभ्यते । तथा च रन्तुकारन्तुकयोः चत्वारिंशत्क्रोशात्मकमन्तरालं कुरुक्षेत्रस्य पूर्वमर्यादा । पूर्वोक्तरन्तुकयक्षात् सरस्वतीतीरक्रमेण चत्वारिंशत्क्रोशोपरि वायव्यकोणे वहत्रग्रामेऽरन्तुकयक्ष इति पुराणादितो लभ्यते । तथा चेदमपि चत्वारिंशत्क्रोशात्मकं रन्तुकारन्तुकयो-

रन्तरालं क्षेत्रस्योत्तरमर्य्यादा। एवं च "रन्तुकारन्तुकयोर्यदन्तरम्" इत्यत्र रन्तुकारन्तुकयोरित्यावृत्त्यान्वयः। शीकग्रामस्थादरन्तुकयक्षात् पश्चिमभागे किञ्चिन्न्यूनचत्वारिंशत्क्रोशोपरि क्षेत्रस्य नैर्ऋतकोणे पुष्करवंशमूलतीर्थयोर्मध्ये पुराणादितो रामह्रदाः प्राप्यन्ते। एवं च शीकग्रामस्थारन्तुकरामह्रदानामन्तराले किंचिदूनचत्वारिंशत्क्रोशपरिमिता क्षेत्रस्य दक्षिणमर्य्यादा। रामह्रदेभ्यश्चोत्तरादिशि चत्वारिंशत्क्रोशोपरि वहवग्रामेऽरन्तुकयक्षः। एवं च पश्चिमायामपि रामह्रदारन्तुकयोरन्तराले चत्वारिंशत्क्रोशपरिमिता क्षेत्रमर्य्यादा। रामह्रदेभ्योऽधिकमपि पश्चिमभागे क्षेत्रमानमस्ति। अन्यथा दक्षिणमर्य्यादाया दशयोजनात्मकतानुपपत्तेः। परन्तु प्राचीनानां तत्र तथाऽव्यवहाराभावादिदानीन्तैरपि रामह्रदादग्रे क्षेत्रत्वेन न व्यवाह्रियते इति। विदिङ्मर्यादाग्रहणार्थं "मचक्रुकस्य" इत्युक्तम्। स च लोकप्रसिद्ध्या ग्राह्यः। पितामहस्योत्तरवेदिः, गयाप्रयागपुष्करविरजापेक्षया उत्तरा उत्तरदिक्स्था उत्कृष्टा वा वेदिरित्यर्थः। आसमन्तादिति। समन्तात् सर्वदिक्षु आ अभिव्याप्य। पञ्च पञ्च चेत्यनेन दशयोजनात्मकं क्षेत्रमिति गम्यते। ब्रह्मसरस्तु रन्तुकाद्युपलक्षितं क्षेत्रस्येशानकोणे तिष्ठति। ननु

आदौ ब्रह्मसरः पुण्यं ततो रामह्रदः स्मृतः।

इत्यनेन रामह्रदब्रह्मसरसोरैक्यं गम्यते। न च तत् सम्भवति। रामह्रदानां नैर्ऋतकोणे सत्त्वादस्य चेशानकोणे वृत्तेरिति चेत्, न। तत्र ब्रह्मसरोरामह्रदानां शक्त्या लक्षणया वा समस्तकुरुक्षेत्रपरत्वात्।

## अथ सन्निहितसरोमाहात्म्यम्।

गत्वा तु श्रद्धया युक्तः स्नात्वा स्थाणुमहाह्रदे।

मनसा चिन्तितं कामं लभते नात्र संशयः ॥

इदं स्नानफलम् । स्थाणुह्रद एव सन्निहतसरोऽष्टक्रोशात्मकम् । अष्टक्रोशात्मकसरसः पश्चिमभागे स्वलिङ्गं स्थापयित्वोक्तं महादेवेन—

**वामने,**

एतत्सन्निहतं प्रोक्तं सरः पुण्यतमं महत् ।
मयोपसेवितं यस्मात् तस्मान्मुक्तिप्रदायकम् ॥ इति ।

सान्निहतसन्निहत्यासान्निहत्यसन्निहतापदवाच्यानि चत्वारि सरांसि । सन्निहतादिपदानां चतुर्ष्वपि यथासम्भवं क्वचित् क्वचित् प्रयोगो दृश्यते । अत एव—

सरः सन्निहतं प्रोक्तं समन्तादर्द्धयोजनम् ।

इति सङ्गच्छते । अन्यथाऽष्टक्रोशात्मकस्य सन्निहतस्यार्धयोजनात्मकत्वानुपपत्तेः । तस्मादत्र सन्निहतशब्देन सरोऽन्तरमेवोक्तम् । अत एवं—

कृते युगे सान्निहत्यं त्रेतायां वायुसंज्ञितम् ।
कलिद्वापरयोर्मध्ये कूपो रुद्रह्रदः स्मृतः ॥

इति वामनपुराणं सङ्गच्छते । नन्वेकस्यैव युगभेदेन नामभेदोऽस्तु । मैवम् ।

चैत्रकृष्णचतुर्दश्यां यस्त्वेतानि परिक्रमेत् ।
यस्तु वटस्थितो रात्र्यां ध्यायते परमेश्वरम् ॥
स्थाणोर्वटप्रसादेन मनसा चिन्तितं फलम् ।

इतिवामनपुराणेनैतानीति बहुवचननिर्देशात् । किञ्च सन्निहतसरसो ब्रह्मयज्ञवेदित्वात्तत्र कुण्डैर्भवितव्यम् । प्रयागगयापुष्करादिब्रह्मयज्ञवेदिष्विवेति युक्तम् । तथा च सान्निहत्या-

दिसरांसि कुण्डरूपाण्येव । प्रयागं प्रकृत्योक्तम्—

त्रीणि चाप्यग्निकुण्डानि तेषां मध्ये तु जाह्नवी ।

इत्यादि । गयायामपि कुण्डानि तत्र तत्रोक्तानि । पुष्करेऽपि

प्रतीची पुष्करे वेदिस्त्रिभिः कुण्डैरलङ्कृता ।

इत्युक्तं वामने । अत्र च सन्निहत्यासंज्ञमावसथ्यकुण्डं कृतयुगे ब्रह्मणा कृतम् । वायुसरःसंज्ञं सन्निहत्याकुण्डाद्दक्षिणभागे गार्हपत्यकुण्डं त्रेतायां कृतम् । इदमेव चेदानीं कुरुक्षेत्रत्वेन प्रसिद्धम् । भीमकभीमरीतिप्रसिद्धं पुराणप्रसिद्धरुद्रह्रद इति भवितुं योग्यम् । तदेव दाक्षिणाग्निकुण्डं द्वापरे कृतम् । वायुसरःपूर्वभागे करवालेतिलोकप्रसिद्धं रुद्रकूप इति भवितुं योग्यम् । तदेवाहवनीयकुण्डं कलियुगे कृतम् । तदुत्तरभागे पुराणाप्रसिद्धेऽपि सन्न आम्रवाटिकानिकटे कतिपयलोकप्रसिद्धास्तिष्ठतीति सरांसि प्रत्यक्षसिद्धानि नापलपितुमर्हाणि । ननु तान्यग्निकुण्डान्येव । तर्हि अग्निहोत्रकुण्डपरिमाणानि स्युः । मैवम् । यागकरणानन्तरं तानि कुण्डानि लोकानुग्रहाय तीर्थानि भवन्त्विवतिबुद्ध्या इष्टकादिभिः सम्यग्बद्धानि । तेषामेव मध्ये मध्ये महता कालेन लुप्यमानानां जीर्णोद्धारादिना न्यूनाधिकपरिमाणोपपत्तेः ।

मात्स्ये,

ऋक्षात्संवरणो जज्ञे कुरुः संवरणात्ततः ।
यः प्रयागमतिक्रम्य कुरुक्षेत्रमकल्पयत् ॥

अत्र ब्रह्मसरसोऽष्टक्रोशात्मकस्य सन्निहितापरनाम्नः प्रजापतेर्यागवेदिरूपप्रयागत्वं तदतिक्रम्याधिकदेशव्याप्त्यारुछाद्य कुरुक्षेत्रमकल्पयदित्यर्थः ।

अथ कुरुक्षेत्रदानादिमाहात्म्यम् ।

कूर्मपुराणे,

तीर्थं द्विजातिभिर्जुष्टं नाम्ना वै कुरुजाङ्गलम् ।
दत्त्वा दानं च विधिवद्ब्रह्मलोके महीयते ॥

तत्रैव स्थलान्तरे ।

तत्र स्नात्वा विशुद्धात्मा दम्भमात्सर्य्यवर्जितः ।
ददाति यत्किञ्चिदपि पुनात्युभयतः कुलम् ॥

श्राद्धप्रकरणे वायुपुराणे 'सर्वतश्च कुरुक्षेत्रम्' इत्युक्तम् । सर्वतीर्थेभ्य उत्कृष्टमित्यर्थः ।

गदापर्वणि,

ये चेह नित्यं मनुजा निवत्स्यन्ति शुभैषिणः ।
यमस्य विषयं ते तु न द्रक्ष्यन्ति कदाचन ॥
ये पुनः पुण्यभाजो वै दानं दास्यन्ति माधव ।
तेषां सहस्रगुणितं भविष्यत्यचिरेण वै ॥ इति ।

वामने शुक्रं प्रति अन्धकवाक्यम्—

कुजम्भाद्याश्च निहता भ्रातरो मम भार्गव ।
अक्षयाः प्रथमाश्चामी कुरुक्षेत्रे फलं यथा ॥ इति ।

फलस्याक्षयत्वं कल्पभोग्यत्वम्।कीर्त्तनाद्यनाश्यत्वमित्यन्ये।

रेवाखण्डे भृगुक्षेत्रे भृगुस्तुतपार्वतीवचनम्—

मत्प्रसादाद्द्विजश्रेष्ठ देवासिद्धर्षिसेवितम् ।
भविष्यति भृगोः स्नानं कुरुक्षेत्रादिभिः समम् ॥
मार्त्तण्डग्रहणे प्राप्ते यवं कृत्वा हिरण्मयम् ।
दत्त्वा शिरसि यः स्नायात् भृगुक्षेत्रे द्विजोत्तम ॥
अलश्यमेव तं विद्धि संस्नातं कुरुजाङ्गले ।

इति साम्यमुक्त्वा ।

भृगुक्षेत्रे महाराज यत्किञ्चित्क्रियते नरैः ।
त्रयोदशदिनान्येव त्रयोदशगुणं भवेत् ॥
अत ऊर्द्ध्वं तदर्द्धार्द्धं तदर्द्धार्द्धदिनानि वै ।
वृद्धिमायाति भूपाल तत ऊर्द्ध्वं तदक्षयम् ॥
स्नात्वा यः पूजयेत्सूर्य्यमुपोष्य च यथाविधि ।
यो ददाति हिरण्यादिदानानि मनुजो नृप ॥
तदनन्तफलं तस्य तथैव कुरुजाङ्गले ।
सोमसूर्य्यग्रहे पार्थ कुलानां शतमुद्धरेत् ॥ इति ।

अत्र 'तथैव कुरुजाङ्गले' इत्युपादनात् कुरुक्षेत्रेऽपि त्रयोदशगुणत्वं लभ्यते । द्वितीयदिने द्विगुणं तृतीये त्रिगुणमित्यादिक्रमेण त्रयोदशदिने त्रयोदशगुणमित्यर्थः । यद्यपि गदापर्वणि तेषां सहस्रगुणितमन्यत्र चाक्षयमप्युक्तम् । तथापि क्रमो दशगुणोत्तरं कियत्कालात् सहस्रगुणं चिरावस्थाने चाक्षयं कल्पभोग्यं भवतीत्यर्थः ।

**वामने,**

उपवासस्तथा दानं स्नानं जप्यं च माधव ।
अक्षयं प्रवरे क्षेत्रे भवत्यत्र महाफलम् ॥

इत्यनेन सन्निहत्यादिसरासि स्नानादिफलमुक्तम् । श्राद्धे प्राशस्त्यमुक्तम्—

**मात्स्ये,**

कुरुक्षेत्रं महापुण्यं सर्वतीर्थनिषेवितम् ।
तथा च सरयूः पुण्या सर्वदेवनमस्कृता ॥
पितॄणां दुर्लभा ह्येताः श्राद्धे कोटिगुणाः स्मृताः । इति ।

सन्निहतसरो रुद्रह्रदशब्देनोच्यते "तथा रुद्रसरः पुण्यम्" इति मात्स्ये श्राद्धप्रशंसायामिदमेवोक्तम् ।

अथोपरागे फलमुच्यते ।

सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ।
अश्वमेधशतं तत्र तेनेष्टं शाश्वतं भवेत् ॥
पृथिव्यां यानि तीर्थानि अन्तरिक्षचराणि च ।
नद्यो नदास्तडागानि सर्वप्रस्रवणानि च ॥
पल्वलाम्बुदपानाश्च पुण्यान्यायतनानि च ।
मासि मासि समेष्यन्ति सन्निहत्यां न संशयः ॥
तीर्थसन्नयनादेव सन्निहत्येति विश्रुता ।
तत्र स्नात्वा च पीत्वा च स्वर्गलोके महीयते ॥
अमावस्यां च तत्रैव राहुग्रस्ते दिवाकरे ।
यः श्राद्धं कुरुते मर्त्यस्तस्य पुण्यफलं शृणु ॥
अश्वमेधसहस्रस्य सम्यगिष्टस्य यत्फलम् ।
स्नात एव तदाप्नोति कृत्वा श्राद्धं च मानवः ॥ इति ।

मासि मासीत्यस्यामावास्यायामित्याशयः । 'अमावास्यां च तत्रैव' इतिनिदर्शनादिति वदन्ति । श्राद्धरहितस्नानेऽश्वमेधशतफलम् । तत्सहितस्नाने तु अश्वमेधसहस्रस्य फलमित्यर्थः ।

अथ वटमाहात्म्यम् ।

वामने,

यस्तत्र कुरुते श्राद्धं वटलिङ्गस्य चान्तरे ।
तस्य प्रीताश्च पितरो दास्यन्ति भुवि दुर्लभम् ॥ इति ।
लिङ्गस्य पश्चिमे भागे वट इति ।

अथ रामह्रदमाहात्म्यम् ।

वामने,

ततो रामह्रदान् गच्छेत्तीर्थसेवी द्विजोत्तमः ।

यत्र रामेण विप्रेण तरसा दीप्ततेजसा ॥
क्षत्रमुत्सार्य्य वीरेण ह्रदाः पञ्च निषेविताः।
पूरयित्वा नरव्याघ्र रुधिरेण विमिश्रिताः ॥
पितरस्तर्पितास्तेन तथैव च पितामहाः।
ततस्ते पितरः प्रीता राममूचुर्द्विजोत्तमाः ॥
राम राम महाबाहो प्रीताः स्म तव भार्गव।
अनया पितृभक्त्या च विक्रमेण च ते विभो ॥
वरं वृणीष्व भद्रं ते किमिच्छसि महायशः।
एवमुक्तस्तु पितृभी रामः प्रभवतां वरः ॥
अब्रवीत्प्राञ्जलिर्वाक्यं स पितॄन् गगनास्थितान्।
भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि ॥
पितृप्रसादादिच्छेयं तपसाप्यायनं पुनः।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ॥
ततस्तु पापान्मुच्येयं युष्माकं तेजसास्म्यहम्।
ह्रदाश्चैते तीर्थभूता भवेयुर्भुवि विश्रुताः ॥
एवमुक्ताः शुभं वाक्यं रामस्य पितरस्तदा।
प्रत्यूचुः परमप्रीता रामं हर्षपुरस्कृताः ॥
तपस्ते वर्द्धतां पुत्र पितृभक्त्या विशेषतः।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया ॥
ततश्च पापान्मुक्तस्त्वं पातितास्ते स्वकर्मभिः।
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ॥
ह्रदेष्वेतेषु ये स्नात्वा स्वान् पितॄंस्तर्पयन्ति च।
तेभ्यो दास्यन्ति पितरो यथाभिलषितं वरम् ॥
ईप्सितान् मनसा कामान् स्वर्गवासं च शाश्वतम्।
एवं दत्त्वा वरान् तृप्ता रामस्य पितरस्तदा ॥

आमन्त्र्य भार्गवं प्रीतास्तत्रैवान्तर्हितास्तदा ।
एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः ॥
स्नात्वा ह्रदेषु रामेषु ब्रह्मचारी शुचिव्रतः ।
राममभ्यर्च्य श्रद्धावान् विन्देद्बहुसुवर्णकम् ॥ इति ।

अथ गङ्गाह्रदमाहात्म्यम् ।

वामने,

अभिपद्य ततो यक्षं द्वारपालं तु रन्तुकम् ।
कोटितीर्थमुपस्पृश्य लभेद्बहुसुवर्णकम् ॥
गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नायीत धर्मज्ञो ब्रह्मचारी समाहितः ॥
राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः ॥ इति ।

अथ परिप्लवमाहात्म्यम् ।

ततः पारिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ।
तत्र स्नात्वा च दृष्ट्वा च ब्राह्मणं वेदसंयुतम् ॥
ब्रह्मयज्ञफलं प्राप्य निष्पापः स्वर्गमाप्नुयात् । इति ।

अथ कौशिकीसङ्गमफलम् ।

वामने,

तत्रापि सङ्गमं पुण्यं कौशिक्यास्तीर्थसम्भवम् ।
सङ्गमेऽपि नरः स्नात्वा प्राप्नोति प्रियसङ्गमम् ॥ इति ।

अथ पृथिवीतीर्थम् ।

वामने,

पृथिव्यास्तीर्थमासाद्य सर्वपापप्रमोचनम् ।
क्षान्तियुक्तो नरः स्नात्वा गोसहस्रफलं लभेत् ॥ इति ।

### अथ वाराहतीर्थम्।

**वामने,**

वाराहतीर्थं विख्यातं विष्णुना परिकीर्त्तितम्।
तस्मिन् स्नात्वा श्रद्दधानः प्राप्नोति परमं पदम्॥ इति।

### अथ सोमतीर्थम्।

**वामने,**

ततो गच्छेत विप्रेन्द्राः सोमतीर्थमनुत्तमम्।
यत्र सोमस्तपस्तप्त्वा व्याधिमुक्तोऽभवत्पुरा॥
तत्र सोमेश्वरं दृष्ट्वा स्नात्वा तीर्थवरे शुभे।
राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः॥
व्याधिभिश्च विनिर्मुक्तः सर्वदोषविवर्जितः।
सोमलोकमवाप्नोति सुखेन रमते चिरम्॥ इति।

### अथ कृतशौचम्।

**वामने प्रह्लादयात्रायाम्,**

कृतशौचं जगामाथ द्रष्टुं पुरुषकेसरी।
स्नात्वाऽथ देविकायां च नृसिंहं प्रतिपूज्य च॥
तत्रोष्य रजनीमेकां गोकर्णं दानवो ययौ। इति।

कृतशौचस्य नामान्तरं देविकेति। यद्वा देविकाग्राही पक्षिह्रद आदौ स्थितः पश्चान्नरसिंहेन कृतं शौचमस्मिन्निति कृतशौचमिति।

### अथ मुञ्जवटम्।

**वामने,**

ततो मुञ्जवटं नाम महादेवस्य धीमतः।
तत्रोष्य रजनीमेकां गाणपत्यमवाप्नुयात्॥ इति।

अथ तत्रैव रामेण पुष्करत्रयमेकीकृतम् । तन्माहात्म्यमुक्तं वामने,

पुष्करं च ततो गत्वा अभ्यर्च्य पितृदेवताः ।
जामदग्न्येन रामेण आहृतं तन्महात्मना ॥
कृतकृत्यो भवेद्राजा अश्वमेधं च विन्दति । इति ।
राजा अश्वमेधं विन्दति अन्यः कृतकृत्य इत्यर्थः ।

अथ रेणुकामाहात्म्यम् ।

रामः कार्त्तवीर्य्यं निहत्य प्रणीतायां शस्त्राणि प्रक्षाल्यैकवीरामाराधयामासेत्याद्युपक्रम्य–

स्कन्दपुराणे,

एवं रूपैकवीरा सा सर्वकामफलप्रदा ।
यस्याः सन्दर्शनादेव सर्वकामफलं लभेत् ॥
सर्वदेवनमस्काराद्यत्फलं तु भवेन्नृणाम् ।
तत्फलं रेणुकां दृष्ट्वा प्राणिनां च भवेद्ध्रुवम् ॥

तथा,

तस्थौ कोटीश्वरो देवो जमदग्निः स्वयंहरः ।
जगत्त्रयोपकाराय प्रणीतायास्तटे शुभे ॥
कोटितीर्थे च ये स्नात्वा भक्त्या कोटीश्वरं मुनिम् ।
पश्येयुस्ते विपाप्मानो गच्छन्ति हरिमन्दिरम् ॥
आजन्म यत्कृतं पापमिह जन्मकृतं महत् ।
भस्मीभवति जन्तूनां तत्कोटीश्वरदर्शनात् ॥
दुर्लभं रेणुकायास्तत्प्राणिनां दर्शनं शुभम् ।
दुर्लभं कोटितीर्थे च तत्कोटीश्वरदर्शनात् ॥
इदं रेणुकातीर्थं रेणुकाश्रमश्च ।
सम्प्राप्ता पुण्यसलिला पवित्रं रेणुकाश्रमम् ।

दीक्षितो यत्र रामोऽभूत् सर्वक्षत्रक्षयाध्वरे ॥
इति यमुनातटे यत्पद्मपुराणोक्तं तदपि युगभेदाश्रयम् ।

## अथ कुरुक्षेत्रे प्राणत्यागफलम् ।

लैङ्गे,

वाराणस्यां तथाप्येवमविमुक्ते विशेषतः ।
केदारे च महाक्षेत्रे प्रयागे च विशेषतः ॥
कुरुक्षेत्रे च यः प्राणांस्त्यजेत् स याति निर्वृतिम् ।
आधायाग्निं शिवक्षेत्रे सम्पूज्य परमेश्वरम् ॥
स्वदेहपिण्डं जुहुयाद्यः स याति परां गतिम् ।
यावता च निराहारो भूत्वा प्राणान् परित्यजेत् ।
शिवक्षेत्रे मुनिश्रेष्ठाः शिवसायुज्यमाप्नुयात् ॥
छित्त्वा पादद्वयं वापि शिवक्षेत्रे वसेत्तु यः ।
स याति शिवतां चैव नात्र कार्य्या विचारणा ॥
क्षेत्रस्य दर्शनं पुण्यं प्रवेशस्तच्छताधिकः ।
तस्माच्छतगुणं पुण्यं स्पर्शनं च प्रदक्षिणम् ॥
तस्माच्छतगुणं पुण्यं जलस्नानमतः परम् ।
क्षीरस्नानं ततो विप्राः शताधिकमनुत्तमम् ॥
दध्ना सहस्रमाख्यातं मधुना तच्छताधिकम् ।
घृतस्नानेन चानन्तं शार्करं तच्छताधिकम् ॥
तस्माच्छतगुणः प्राणत्यागः शर्वालये द्विजाः ॥ इति ।

## अथ पृथूदकमाहात्म्यम् ।

भारते,

ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।
पृथूदकमिति ख्यातं कार्त्तिकेयस्य धीमतः ॥

तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ।
अज्ञानाज्ज्ञानतो वापि स्त्रिया वा पुरुषेण वा ॥
यत्किञ्चिदशुभं कर्म कृतं मानुषबुद्धिना ।
तत्सर्वं नश्यते राजन् स्नातमात्रस्य कौरव ॥
अश्वमेधफलं चास्य स्वर्गलोकं च विन्दति ।
पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात्सरस्वती ॥
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् ।
उत्तमे सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम् ॥
पृथूदके जप्यपरो नैनं श्वोमरणं तपेत् ।

श्वोभाव्यपि मरणं न सन्तापयेदित्यर्थः ।

गीतं सनत्कुमारेण व्यासेन च महात्मना ॥
वेदे च नियतं राजन्नपि गच्छेत्पृथूदकम् ।
पृथूदकात्पुण्यतमं नान्यत्तीर्थं नराधिप ॥
एतन्मेध्यं पवित्रं च पावनं च न संशयः ।
तत्र स्नात्वा दिवं यान्ति येऽपि पापकृतो जनाः ॥
पृथूदके नरश्रेष्ठ प्राहुरेवं मनीषिणः ॥ इति ।

**अथारुणासरस्वतीसङ्गममाहात्म्यम् ।**

भारते पुलस्त्यतीर्थयात्रायाम्,

ततो गच्छेत राजेन्द्र तीर्थं देव्या यथाक्रमम् ।
सरस्वत्यारुणायाश्च सङ्गमं लोकविश्रुतम् ॥
त्रिरात्रोपोषितः स्नात्वा मुच्यते ब्रह्महत्यया ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः ॥
आसप्तमं कुलं चैव पुनाति भरतर्षभ । इति ।

गरुडपुराणे ब्रह्महत्याद्यपनोदकतीर्थप्रस्तावेऽरुणासङ्गमः कथितः ।

## अथ ऋणमोचनम् ।

**वामने,**

ऋणमोचनमासाद्य तीर्थं ब्राह्मणसेवितम् ।
प्रतिग्रहकृतैर्दोषैः स पापात् परिमुच्यते ॥

**वनपर्वणि,**

विमोचनमुपस्पृश्य जितमन्युर्जितेन्द्रियः ।
प्रतिग्रहकृतैर्दोषैः स पापात् परिमुच्यते ॥

**ब्राह्मेऽपि,**

सप्तसारस्वतं चैव तीर्थमौशनसं तथा ।
कपालमोचनं चैव अवकीर्णं च काम्यकम् ॥
चतुःसामुद्रिकं चैव शतकं च सहस्रिकम् ।
रेणुकं पञ्चवटकं विमोचनमथौजसम् ॥ इति ।

**वायुपुराणे,**

औजसे चाक्षयं श्राद्धं धर्मराजनिवेशने । इति ।

अन्यानि तीर्थानि पुराणेभ्योऽवगन्तव्यानि । गौरवभिया विरम्यते ।

## अथ सरस्वतीमाहात्म्यम् ।

**भारते पुलस्त्यतीर्थयात्रायाम्,**

सरस्वतीं समासाद्य तर्पयन् पितृदेवताः ।
सारस्वतेषु लोकेषु मोदते नात्र संशयः ॥

**प्रभासखण्डे,**

चान्द्रायणानि कृच्छ्राणि महासान्तपनानि च ।
प्रायश्चित्तानि दीयन्ते यत्र नास्ति सरस्वती ॥
यावदस्थि मनुष्यस्य तिष्ठेत्सारस्वते जले ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

तथा,

ते देशास्तानि तीर्थानि आश्रमास्ते च पर्वताः ।
येषां सरस्वती देवी मध्ये याति सरिद्वरा ॥

गदापर्वणि,

सरस्वतीवाससमा कुतो रतिः सरस्वतीवाससमा कुतो गुणाः ।
सरस्वतीं प्राप्य दिवं गता जनाः सदा स्मरिष्यन्ति नदीं सरस्वतीम् ।
सरस्वती सर्वनदीषु पुण्या सरस्वती लोकसुखावहा सदा ।
सरस्वतीं प्राप्य जनाः सुदुष्कृतं सदा न शोचन्ति परत्र चेह च ॥ इति ।

तीर्थहेमाद्रौ,

प्राची सरस्वती यत्र ततः किं मृग्यतेऽपरम् ।
तत्स्नानात्फलसम्भूतिस्तपोयज्ञादिलक्षणा ॥
ये पिबन्ति नराः पुण्यां प्राचीं देवीं सरस्वतीम् ।
ततो नराः सुरा ज्ञेया मार्कण्डऋषिरब्रवीत् ॥

तथा,

तत्तीर्थं सर्वतीर्थानां प्राचीनं प्रवरं स्मृतम् ।
पापघ्नं पुण्यजननं प्राणिनां परिकीर्त्तितम् ॥
ये पुनर्भावितात्मानस्तत्र स्नात्वा जनार्दनम् ।
पूजयन्ति तथा शक्त्या ते प्रयान्ति त्रिविष्टपम् ॥
देवानां प्रवरो विष्णुस्तेन यत्र सरस्वती ।
सेविता तत्परं तीर्थं क्षितौ ब्रह्मसुतोऽब्रवीत् ॥ इति ।

प्राचीनतीर्थम् आदितीर्थमिति चोच्यते ।

भारते गदापर्वणि,

जनमेजय उवाच ।

सप्तसारस्वतं कस्मात् कश्च मङ्कणको मुनिः ।
कथं सिद्धः स भगवान् कश्चास्य नियमोऽभवत् ॥

कस्य वंशे समुत्पन्नः किञ्चाधीत द्विजोत्तमः ।
एतदिच्छाम्यहं श्रोतुं विधिवद्द्विजसत्तम ॥

वैशम्पायन उवाच ।

राजन् सप्त सरस्वत्यो याभिर्व्याप्तमिदं जगत् ।
आहूता बलवद्भिर्हि तत्र तत्र सरस्वती ॥
सुप्रभा काञ्चनाक्षी च विशाला च मनोरमा ।
सरस्वती चौघवती सुरेणुर्विमलोदका ॥
पितामहस्य महतो वर्त्तमाने महामखे ।
वितते यज्ञवाटे वै संसिद्धेषु द्विजातिषु ॥
पुण्याहघोषैर्विमलैर्वेदानां निनदैस्तथा ।
देवेषु चैव व्यग्रेषु तस्मिन् यज्ञविधौ तदा ॥
तत्र चैव महाराज दीक्षिते प्रपितामहे ।
यजतस्तस्य सत्रेण सर्वकामसमृद्धिना ॥
मनसा चिन्तिता ह्यर्था धर्मार्थकुशलैस्तदा ।
उपतिष्ठन्ति राजेन्द्र द्विजातींस्तत्र तत्र हि ॥
जगुश्च तत्र गन्धर्वा ननृतुश्चाप्सरोगणाः ।
वादित्राणि च दिव्यानि वादयामासुरञ्जसा ॥
तस्य यज्ञस्य सम्पत्त्या तुष्टुवुर्देवता अपि ।
विस्मयं परमं जग्मुः किमु मानुषयोनयः ॥
वर्त्तमाने तथा यज्ञे पुष्करस्थे पितामहे ।
अब्रुवन् ऋषयो राजन्नायं यज्ञो महागुणः ॥
न दृश्यते सरिच्छ्रेष्ठा यस्मादिह सरस्वती ।
तच्छ्रुत्वा भगवान् प्रीतः सस्माराथ सरस्वतीम् ॥
पितामहेन यजता आहूता पुष्करेषु वै ।
सुप्रभा नाम राजेन्द्र नाम्ना तत्र सरस्वती ॥

तां दृष्ट्वा मुनयस्तुष्टास्स्वरायुक्तां सरस्वतीम् ।
पितामहमानमन्तीं क्रतुं ते बहु मेनिरे ॥
एवमेषा सरिच्छ्रेष्ठा पुष्करेषु सरस्वती ।
पितामहार्थं सम्भूता तुष्ट्यर्थं च मनीषिणाम् ॥
नैमिषे मुनयो राजन् समागम्य समासते ।
तत्र चित्राः कथा ह्यासन् वेदं प्रति जनेश्वर ॥
यत्र ते मुनयो ह्यासन् नानास्वाध्यायवेदिनः ।
ते समागम्य मुनयः सस्मरुर्वै सरस्वतीम् ॥
सा तु ध्याता महाराज ऋषिभिः सत्रयाजिभिः ।
समागतानां राजेन्द्र सहायार्थं महात्मनाम् ॥
आजगाम महाभागा तत्र पुण्या सरस्वती ।
नैमिषे काञ्चनाक्षी तु मुनीनां सत्रयाजिनाम् ॥
आगता सरितां श्रेष्ठा तत्र भारतपूजिता ।
गयस्य यजमानस्य गयस्यैव महाक्रतुम् ॥
आहूता सरितां श्रेष्ठा तत्र यज्ञे सरस्वती ।
विशालां तु गयेष्वाहुर्ऋषयः संशितव्रताः ॥
सरित्सा हिमवत्पार्श्वात् प्रस्तुता शीघ्रगामिनी ।
औद्दालके तथा यज्ञे यजतस्तस्य भारत ॥
स मेने सर्वतः स्फीते मुनीनां मण्डले तदा ।
उत्तरे कोशलाभागे पुण्ये राजन् महात्मनः ॥
उद्दालकेन यजता पूर्वं ध्याता सरस्वती ।
आजगाम सरिच्छ्रेष्ठा तं देशमृषिकारणात् ॥
पूज्यमाना मुनिगणैर्वल्कलाजिनसंवृतैः ।
मनोरमेतिविख्याता सा हि तैर्मनसा कृता ॥
सुरेणुर्ऋषभद्वीपे पुण्ये राजर्षिसेविते ।

कुरोश्च यजमानस्य कुरुक्षेत्रे महात्मनः ॥
आजगाम महाभागा सरिच्छ्रेष्ठा सरस्वती ।
ओघवत्यपि राजेन्द्र वसिष्ठेन महात्मना ॥
समाहूता कुरुक्षत्रे दिव्यतोया सरस्वती ।
दक्षेण यजता चापि गङ्गाद्वारे सरस्वती ॥
सुरेणुरितिविख्याता प्रस्तुता शीघ्रगामिनी ।
विमलोदा भगवती ब्रह्मणा यजता पुनः ॥
समाहूता ययौ तत्र प्रस्थे हिमवतो गिरेः ।
एकीभूतास्ततस्तास्तु तस्मिंस्तीर्थे समागताः ॥
सप्तसारस्वतं तीर्थं ततस्तत् प्रथितं भुवि ।
इति सप्त सरस्वत्यो नामतः परिकीर्त्तिताः ॥
सप्तसारस्वतं चैव तीर्थं पुण्यं तथा स्मृतम् । इति ।
महाभारते मङ्कणकोपाख्यानमुपक्रम्य शिववाक्यम्—
सप्तसारस्वते स्नात्वाऽभ्यर्चयिष्यन्ति ये तु माम् ।
न तेषां दुर्लभं किञ्चिदिह लोके परत्र च ॥ इति ।
तथा,
ततो विनशनं राजन् जगामाऽथ हलायुधः ।
शूद्राभीरान् प्रति द्वेषाद्यत्र नष्टा सरस्वती ॥
यस्मात्सा भरतश्रेष्ठ द्वेषान्नष्टा सरस्वती ।
तस्मात्तदृषयो नित्यं प्राहुर्विनशनेति हि ॥

अथ प्रभासमाहात्म्यम् ।

भारते,
प्रभासं च तथा तीर्थं तीर्थानां परमं ह्यभूत् ।
अमावास्यां महाराज नित्यशः शशलक्षणः ॥
स्नात्वा ह्याप्यायते श्रीमान् प्रभासे तीर्थ उत्तमे ।

अतश्चैनं प्रजानन्ति प्रभासमिति भूमिप ॥
प्रभां हि परमां लेभे तस्मिन्नुन्मज्य चन्द्रमाः । इति ।
प्रभासखण्डे,
जात्यन्धैरिह तुल्यास्ते मृतैः पङ्गुभिरेव वा ।
समर्था ये न पश्यन्ति प्रभासस्थां सरस्वतीम् ॥
तत्रैव,
तत्र स्नानं प्रकुर्वीत विगाह्य पतिमम्भसाम् ।
आदौ कृत्वा तु वपनं सोमेश्वरसमीपतः ॥
शङ्करं मनसा ध्यायन् केशांस्तत्र परित्यजेत् ।
तत्र त्यक्त्वाखिलान् केशान् भूयः स्नानं समाचरेत् ॥
यत्किञ्चित्कुरुते पापं पुरुषो वृत्तिकर्षितः ।
तद्यतः पर्वतसुते सर्वं केशेषु तिष्ठति ॥
तस्मात्सर्वप्रयत्नेन केशांस्तत्र परित्यजेत् ।
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ॥
नासौ तत्फलमाप्नोति वपनाद्यच्च लभ्यते । इति ।
भारते,
ततो गच्छेत धर्मज्ञ प्रभासं लोकविश्रुतम् ।
यत्र सन्निहितो नित्यं स्वयमेव हुताशनः ॥
देवतानां मुखं वीर अनलोऽनिलसारथिः ।
तस्मिंस्तीर्थवरे स्नात्वा शुचिः प्रयतमानसः ॥
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ।
ततो गत्वा सरस्वत्याः सागरस्य च सङ्गमम् ॥
गोसहस्रफलं प्राप्य स्वर्गलोके महीयते ।
दीप्यमानोऽग्निवन्नित्यं प्रभया भरतर्षभ ॥
तीर्थं सलिलराजस्य स्नात्वा प्रयतमानसः

त्रिरात्रमुषितस्तत्र तर्पयेत् पितृदेवताः ॥
विराजति यथा सोमो वाजिमेधं च विन्दति । इति ।

## अथ पुष्करमाहात्म्यम् ।

भारते,

त्रिलोके देवलोकस्य तीर्थं त्रैलोक्यविश्रुतम् ।
पुष्करं नाम विख्यातं महाभागः समाविशेत् ॥
दशकोटिसहस्राणां तीर्थानां वै महीपते ।
सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन ॥
आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः ।
गन्धर्वाप्सरसश्चैव नित्यं सन्निहिता विभो ॥
यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा ।
दिव्यभोगा महाराज पुण्येन महता वृताः ॥
मनसाप्यभिकामस्य पुष्कराणि मनस्विनः ।
पूयन्ते सर्वपापानि नाकपृष्ठे च पूज्यते ॥
तस्मिंस्तीर्थे महाराज नित्यमेव पितामहः ।
उवास परमप्रीतो देवदानवसम्मतः ॥
पुष्करेषु महाभाग देवाः सर्षिगणाः पुरा ।
सिद्धिं समभिसम्प्राप्ताः पुण्येन महतान्विताः ॥
तत्राभिषेकं यः कुर्य्यात् पितृदेवार्चने रतः ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥
अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः ।
तेनासौ कर्मणाभीक्ष्णं प्रेत्य चेह च मोदते ॥
शाकैर्मूलफलैर्वापि येन वर्त्तयते स्वयम् ।
तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः ॥
तेनैव चाप्नुयात्प्राज्ञो हयमेधफलं नरः ।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम ॥
न वियोनिं विशन्त्येते स्नातास्तीर्थे महात्मनः ।
कार्त्तिकीं तु विशेषेण योऽभिगच्छेत पुष्करम् ॥
प्राप्नुयात् स नरो लोकान् ब्रह्मणः सदनेऽक्षयान् ।
सायम्प्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः ॥
उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु भारत ।
जन्मप्रभृति यत्पापं स्त्रिया वा पुरुषस्य वा ॥
पुष्करे स्नातमात्रस्य सर्वमेव प्रणश्यति ।
यथा सुराणां सर्वेषामादिस्तु मधुसूदनः ॥
तथैव पुष्करं राजन् तीर्थानामादिरुच्यते ।
उषित्वा दश वर्षाणि पुष्करे नियतः शुचिः ॥
क्रतून् सर्वानवाप्नोति ब्रह्मलोकं च गच्छति ।
यस्तु वर्षशतं पूर्णमग्निहोत्रमुपाचरेत् ॥
कार्त्तिकीं वा वसेदेकां पुष्करे सममेव तत् ।
दुष्करं पुष्करे स्नानं दुष्करं पुष्करे तपः ॥
दुष्करं पुष्करे दानं वस्तुं चैव च दुष्करम् । इति ।
पद्मपुराणे,
ऋषिकोटिः समायाता दक्षिणापथवासिनाम् ।
स्नानार्थं पुष्करे राजन् पुष्करं भुवि यद्गतम् ॥
अथ ते मुनयः सर्वे प्राणायामपरायणाः ।
ध्यायन्तश्च परं ब्रह्म स्थिता द्वादशवत्सरान् ॥
ब्रह्मा महर्षयस्तत्र देवाश्चेन्द्रपुरोगमाः ।
ऋषींस्तान् वारयामासुर्नियमात्ते सुदुष्करात् ॥
कारणेन त्रियद्यानं मन्त्रेणाह्वयत द्विजाः ।
आपोहिष्ठेतितिसृभिर्ऋग्भिः सान्निध्यमेष्यति ।

अघमर्षणजप्येन जायते फलदायकम् ॥
विप्रैर्वाक्यावसाने तु सर्वैस्तैस्तु तथा कृतम् ।
कृते तु पुष्पतां प्राप्ता जातिदोषात्तु ते द्विजाः ॥
गर्हिता धर्मशास्त्रेषु ये विप्रा दाक्षिणोत्तराः ।
ये चान्ये पर्वतीयाश्च श्राद्धे नार्हन्ति केतनम् ॥
एतस्मात् कारणाद्यानं वियत्येव स्थिरं स्थितम् ।
कार्त्तिक्यां पुष्करे स्नातुं स्वयमेवाभिगच्छति ॥
ब्रह्मणा सहितं राजन् सर्वेषां पुण्यदायकम् ।
तत्रागच्छन्ति ये वर्णाः सर्वे ते पुण्यभाजनाः ॥
द्विजैस्तुल्या न सन्देहो विना मन्त्रेण ते नृप ।
अन्तरिक्षादवातीर्णं तीर्थं पैतामहं शुभम् ॥
स्नानं येऽत्र करिष्यन्ति तेषां लोका महोदयाः ।
निःस्पृहं तेऽन्यपुण्यस्य कृतस्याप्यकृतस्य च ॥
करिष्यन्ति महाराज सत्यमेतदुदाहृतम् ।
तीर्थानां परमं तीर्थं पृथिव्यामिह पठ्यते ॥
नास्मात् परतरं पुण्यं लोकेऽस्मिन् परिपठ्यते ॥ इति ।
यमः,
कार्त्तिकीं पुष्करे स्नातः सर्वपापैः प्रमुच्यते । इति ।
विष्णुः,
पुष्करेष्वक्षयं श्राद्धं जपहोमतपांसि च ।
पुष्करे स्नातमात्रस्तु सर्वपापैः प्रमुच्यते ॥ इति ।

अथ स्तुतस्वामिमाहात्म्यम् ।

वराहपुराणे,

वराह उवाच ।

स्तुतस्वामीतिविख्यातं मम क्षेत्रं भविष्यति ।

द्वापरं युगमासाद्य तत्र स्थास्यामि सुन्दरि ॥
पुत्रोऽहं वसुदेवस्य देवक्या गर्भनिःसृतः ।
वासुदेव इति ख्यातः सर्वदानवसूदनः ॥
कौमुदस्य तु मासस्य शुक्लपक्षे तु द्वादशीम् ।
त्रयाणां वाजपेयानां यज्ञानां स्नानमात्रतः ॥
फलं प्राप्नोति सुश्रोणि धृतिमान्मतिमान्नरः ।
अथात्र मुञ्चति प्राणान् मम कर्मानुसारतः ॥
वाजपेयफलं भुक्त्वा मम लोकं प्रपद्यते ।
आयसी प्रतिमा तत्र ममाभेद्या न संशयः ॥
ब्रुवन्ति केचित् काष्ठेति आयसीत्यपरेऽब्रुवन् ।
पाषाणी तु परे ब्रूयुः परे वज्रमयीति च ॥
ऊर्ध्वा वा यदि वाधस्ताद्व्रजन्ति मम पार्श्वतः ॥
तेषां तथेति स्पृशन्ति शिरो मध्ये न तु कचित् ।
ये च पश्यन्ति मां भूमि मणिपूरगिरौ स्थितम् ॥
त्रिसन्ध्यं मां च सन्तस्तु मत्प्रसादाच्च सुन्दरि ।
ते सर्वे किल्बिषान्मुक्ता यान्ति तां परमां गतिम् ॥

तथा,

सगुह्यं पूर्वपार्श्वे तु मम क्षेत्रस्य सुन्दरि ।
अदूरात्त्रीणि क्रोशानि परिमाणं विधीयते ॥
धूतपापेतिविख्यातं तत्र गुह्यं परं मम ।
अदूरात्पञ्च क्रोशानि मम क्षेत्रस्य पश्चिमे ॥
तत्र कुण्डे महाभागे मम यद्रोचते जलम् ।
तत्र स्नानं प्रकुर्वीत पञ्चरात्रोषितो नरः ॥
यद्वंशे दुष्कृतं किञ्चित् यच्च आत्मनि संस्थितम् ।
तत्र कृत्वोदकं भद्रे धूतपापे यशस्विनि ॥

इन्द्रलोकं समुत्सृज्य मम लोकं स गच्छति।
तत्राश्चर्यं महाभागे धूतपापे शृणुष्व मे॥
वर्त्तते च विशालाक्षि मणिपूरगिरौ स्थितम्।
तावन्न पतते धारा यावत् पापं न धूयते॥
धूतपापे च सुश्रोणि धारात्र पतते महीम्।
तत्तु क्षेत्रं वरारोहे समन्तात्पञ्चयोजनम्॥
तत्र तिष्ठाम्यहं देवि पश्चिमां दिशमास्थितः।
तत्र चामलकी भद्रे अदूरादर्द्धयोजनात्॥
तां न कश्चिद्विजानाति पापकर्मा नराधमः।
उपोष्य च त्रिरात्राणि श्रद्दधानो जितेन्द्रियः॥
तत्र गत्वा वरारोहे उदिते तु दिवाकरे।
अथ मध्याह्नवेलायां यदि वास्तङ्गते रवौ॥
एकचित्तेन गन्तव्यं धृतिं कृत्वा सुनिश्चलाम्।
यस्तत्र लभते भद्रे फलमामलके शुभम्।
पञ्चरात्रेण पश्येत्तु तस्मिन् भूतगिरौ स माम्॥ इति।

## अथ बदरिकाश्रममाहात्म्यम्।

वराहपुराणे,

वराह उवाच।

तस्मिन् हिमवतः पृष्ठे स्थानं गुह्यं परं मम।
तत्राहमग्निना भूमि तपसा परितोषितः॥
अग्निना सदृशो भूत्वा कृत्वा कर्म सुदुष्करम्।
प्राप्नुवन्ति च मद्भक्ता बदर्य्यां गुह्यमुत्तमम्॥
सुदुर्लभं च तत्क्षेत्रं हिमकूटशिलातलम्।
यस्तु तत्प्राप्नुते क्षेत्रं कृतकृत्यो भवेन्नरः॥
ब्रह्मकुण्डेतिविख्यातमस्ति तत्र शिलोच्चये।

स्नानं करोति यस्तत्र त्रिरात्रोपोषितो नरः ॥
अग्निष्टोमशतातुल्यं फलं प्राप्नोति मानवः ।
उषित्वा तत्र कृच्छ्राणि यदि प्राणान् परित्यजेत् ॥
ब्रह्मलोकमतिक्रम्य मम लोकं स गच्छति ।
अग्निकुण्डेतिविख्यातं तत्र कुण्डं परं मम ॥ इति ।
तथा तत्रैव,
अस्ति सत्यपदं नाम तस्मिन् क्षेत्रे परं मम ।
तिस्रः शृङ्गात् पतन्ते च धारा मुसलसन्निभाः ॥
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ।
सत्यवादी भवेद्दक्षो मम कर्मपरायणः ॥
यस्तत्र मुञ्चति प्राणान् यदि कृत्वा जलाशनम् ।
सत्यलोकमतिक्रम्य मम लोके स मोदते ॥
इन्द्रकुण्डेतिविख्यातं बदर्य्यां च श्रमाश्रमे ।
तत्राहं देवि शक्रेण निष्फलं परितोषितः ॥
स्थूले शिलातले तत्र मम धर्मे व्यवस्थितः ॥
स्नानं करोति यस्तत्र एकरात्रोषितो नरः ।
तत्र चैव तु शृङ्गेभ्यः स्थूलधारा पतेद्भुवि ।
सत्यवादी शुचिर्भूत्वा सत्यलोके महीयते ॥
अथात्र मुञ्चते प्राणान् कृत्वा तत्र अनाशकम् ।
सत्यलोकमतिक्रम्य मम लोके महीयते ॥
अस्ति पञ्चशिखं नाम बदर्य्यामाश्रमे मम ।
यत्र धाराः पतेत्पञ्च पञ्चशृङ्गसमाश्रिताः ॥
यस्तत्र कुरुते स्नानं पञ्चस्रोते परं मम ।
मोदते नाकपृष्ठे तु सोऽश्वमेधफलं लभेत् ॥
यद्यत्र मुञ्चते प्राणान् कृत्वा कर्म सुदुष्करम् ।

स्वर्गलोकमतिक्रम्य मम लोकं प्रपद्यते ॥
चतुःस्रोतमिति ख्यातं तस्मिन् क्षेत्रे परं मम ।
धाराः पतन्ति चत्वारि चतुरो दिशमाश्रिताः ॥
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः ।
मोदते नाकपृष्ठे तु मम भक्तश्च जायते ॥
तथा,
अस्ति चोर्वशीकुण्डेति गुह्यं क्षेत्र परं मम ।
यत्र चैवोर्वशी भित्त्वा दक्षिणादूरुनिःसृता ॥
इत्याद्यभिधाय—
तदेतदुर्वशीकुण्डे एकरात्रोषितो नरः ।
यः स्नाति सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
उर्वशीलोकमासाद्य क्रीडते कालमक्षयम् ॥
तथा,
बदरीमाश्रमं पुण्यं यत्र तत्र स्थितः स्मरेत् ।
स याति वैष्णवं स्थानं पुनरावृत्तिवर्जितः ॥ इति ।

अथ लोहार्गलमाहात्म्यम् ।

वराहपुराणे,

वराह उवाच ।

गुह्यमन्यत्प्रवक्ष्यामि कारणं सततं शुभे ।
अहं सिन्धोस्तटे भद्रे गत्वा वै त्रिंशयोजनम् ॥
म्लेच्छमध्ये वरारोहे हिमवन्तं समाश्रितः ।
तत्र लोहार्गलं नाम निवासो मे विधीयते ॥
गुह्यं च परमं स्थानं समन्तात्पञ्चयोजनम् ।
दुर्दर्शं दुःसहं चैव पावकैः परिवेष्टितम् ॥
तत्र तिष्ठाम्यहं भद्रे उदीचीं दिशमाश्रितः ।

केचिन्न जानते तत्र सुमूर्त्तिं मम संस्थिताम् ॥
ये तु यान्ति वरारोहे स्वकर्मपरिनिष्ठिताः ।
ते मां चैवात्र पश्यन्ति गुह्यानि च यथा तथा ॥
तत्र कुण्डे च सुश्रोणि स्नानं कुर्वीत निश्चितम् ।
उपोष्य च त्रिरात्रं तु विधिदृष्टेन कर्मणा ॥
ततः स्वर्गमहस्रेषु मोदते नात्र संशयः ।
अन्यच्च ते प्रवक्ष्यामि तत्र यत्परमाद्भुतम् ॥
चतुर्विंशतिद्वादश्यां न मांसेन विना मम ।
बलिर्हि दीयते तत्र सर्वकामविशोधनः ॥
अश्वो मे कल्पितस्तत्र सर्वरत्नविभूषितः ।
श्वेतकुमुदपुष्पाभः शङ्खचक्रसमन्वितः ॥
शार्ङ्गमेतद्धनुस्तत्र अक्षसूत्रं कमण्डलुः ।
आसनं भूषणं दिव्यं दीयते चात्र उत्तमम् ॥
अस्मिन् गुह्ये महाभागे क्षेत्रे लोहार्गले मम ।
सिद्धिकामेन मर्त्येन गन्तव्यं नात्र संशयः ॥
समन्तात्पञ्चविंशत्तु योजनानि वरानने ।
न तस्य कर्म विद्येत एष मे निश्चयः परः ॥ इति ।

अथ केदारमाहात्म्यम् ।

देवीपुराणे,

ईशानशिखरं नाम हिमकुन्देन्दुसन्निभम् ।
तत्र देवः स्वयं साक्षात् तिष्ठते परमेश्वरः ॥
ईशानो लोकविख्यातस्त्रैलोक्यविदितः स वै ।
तत्र रेतोदकं शक्र पूर्वं देवेन निर्मितम् ॥
गोपितं पिहितं तच्च न विज्ञातं सुरासुरैः ।
तथा,

केदारमुदकं पीत्वा न पुनर्जन्म विद्यते।
न योनिषु नियुज्येत स गच्छेच्छाश्वतं पदम्॥
कृतं प्रकाश्यं तत् कुण्डं यदासीद्गोपितं मम।
मनुष्याणां हितार्थाय मज्जतां च भवार्णवे॥
दर्शितं ज्ञानमुदकं पीत्वा न जन्मसम्भवः।
न पारं लभते ब्रह्मा न विष्णुर्न पुरन्दरः॥
पिबन्ति मानुषाः सर्वे यस्य वै तुष्यते शिवः।
न केदारात्परो मोक्ष एवं साक्षाच्छिवोऽब्रवीत्॥
पृथिव्यां यानि तीर्थानि आसमुद्रात्सरांसि च।
ज्ञानरेतोदकस्यैते कलां नार्हन्ति षोडशीम्॥
अश्वमेधसहस्रं च यो यजेत् पृथिवीपतिः।
ज्ञानरेतोदकस्यैतत् सहस्रांशेन पूर्यते॥
अग्निष्टोमसहस्रं तु पौण्डरीकशतं तथा।
यो यजेद्द्रव्यसम्पन्नो ब्राह्मणः क्षत्रियस्तथा॥
केदारस्य तु तत् सर्वं सहस्रांशं न पूरयेत्।
कामपत्नीसहस्राणि पिब खाद च मोद च॥
केदारमुदकं पीत्वा सर्वं तरति दुष्कृतम्।
तथा,
स्नानं दीक्षाथ वा शक्र धारणं भस्मनस्तथा।
रेतोदकस्य तत्सर्वं कलां नार्हति षोडशीम्॥
तथा,
यथा पिबन्ति तत्तोयं विधिं तस्य वदाम्यहम्।
गत्वा मन्दाकिनीं पुण्यां स्नात्वा तत्र स मानवः॥
देवानामुदकं दत्त्वा पिण्डं पितृषु दापयेत्।
नमस्कृत्वा तथेशानं भावयुक्तेन चेतसा॥

गत्वा कुण्डसमीपं तु विधिवत्समवस्थितः ।
नत्वा देवं शिवं तत्र उमां चापि महेश्वरीम् ॥
नन्दीं गणपतिं चैव सर्वांस्तांश्च गणेश्वरान् ।
शिवोऽहमिति सञ्चिन्त्य पिबेद्वामेन पाणिना ॥
त्रिः पीत्वा वामहस्तेन दक्षिणेन पुनः पिबेत् ।
त्रीन् वारांस्तेन पीत्वा तु भूयश्चाञ्जलिना पिबेत् ।
तेन पीत्वा तु वारांस्त्रीन् पिबेत्तु बलिवर्दवत् ॥
भूमिमाक्रम्य जानुभ्यां तथा हस्तद्वयेन तु ।
शिरः प्रसार्य्य वक्त्रेण त्रिः पिबेत् पुनरेव तु ॥
उत्थाय नर्दैत्रीन् वारान् स्फोटैस्त्रींश्च तथापरान् ।
नमस्कृत्य तथेशानं कृताञ्जलिपुटः स्थितः ॥
कृतार्थः कृतपुण्योऽसौ शिवसायुज्यमागतः ।
विधिना पीतमुदकं कुलानां तारयेच्छतम् ॥ इति ।

अथ शालग्राममाहात्म्यम् ।

वराहपुराणे,

वराह उवाच ।

अस्ति स्थानं परं गुह्यं तस्मिन् गुह्ये शिलोच्चये ।
गण्डक्याश्चोत्तरे पार्श्वे गिरिराजस्य दक्षिणे ॥
शालग्राम इति ख्यातं मम भक्तसुखावहम् ।
ममैतद्रोचते स्थानं गिरिकूटे शिलोच्चये ॥
शालग्राम इति ख्यातं भक्तसंसारमोक्षणम् ।
पञ्चदशात्र गुह्यानि शालग्रामे यशस्विनि ॥
अद्यापि तन्न जानन्ति मुक्त्वा वाराहमाश्रितान् ।

तथा,

तत्र देवह्रदं नाम मम क्षेत्रं यशस्विनि ।

तत्र क्रान्तं मया भूमि बलियज्ञविनाशने ॥
स ह्रदो वरदश्रेष्ठो मनोज्ञः शुभशीतलः ।
अगाधश्च सदा भूमि देवानामपि दुर्लभः ॥
तस्मिन् ह्रदे महाभागे सदा मम कृतोदके ।
चक्राङ्काः परितो मत्स्याः पर्यटन्ति इतस्ततः ॥
तस्मिन् देवह्रदे भूमि चतुर्विंशतिद्वादशीषु ।
सौवर्णानि च पद्मानि दृश्यन्ते उदिते रवौ ॥
दृश्यन्ते तावदेतानि यावन्मध्यन्दिने स्थितः ।
तत्र स्नानं प्रकुर्वीत दशनक्तोषितो नरः ॥
दशानामश्वमेधानां फलं प्राप्नोति मानवः ।
अथात्र मुञ्चति प्राणान् मम चित्तव्यवस्थितः ॥
अश्वमेधफलं भुक्त्वा मम लोकाय गच्छति ।
पूर्वामुखस्त्वहं तत्र शालग्रामे यशस्विनि ॥
भविष्यामि न सन्देहो भूमि भागवतप्रियः ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ॥
यत्र गुह्यं परं क्षेत्रं न जानन्ति विमोहिताः ।
शिवो मे दक्षिणे स्थाने तिष्ठते विगतज्वरः ॥
लोकानां प्रवरः श्रेष्ठः सर्वलोकवरो हरः ।
तमवन्द्य तु गोविन्दं वन्दमानस्य सुन्दरि ॥
वृथा गमनमित्याहुरेवमेतन्न संशयः ।
शिवं देवं तु वन्दित्वा भूमि मां यश्च वन्दते ॥
लभते पुष्कलां सिद्धिं या मयात्र प्रकीर्त्तिता ।
समस्तं च मम क्षेत्रं दशयोजनविस्तरम् ॥
मृताऽत्र पुनरायान्ति मां सत्कर्मानुसारिणः ।

सदा सन्निहितो यत्र हरिर्वसति भारत ।
शालग्राम इति ख्यातो विष्णोरद्भुतकर्मणः ॥
अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम् ।
अश्वमेधमवाप्नोति विष्णुलोकं स गच्छति ॥
तत्रोदपानं धर्मज्ञ सर्वपापप्रमोचनम् ।
समुद्रास्तत्र चत्वारः कूपे सन्निहिताः सदा ॥
तत्रोपस्पृश्य राजेन्द्र न दुर्गतिमवाप्नुयात् ।
जातिस्मरत्वमाप्नोति स्नात्वा तत्र न संशयः ॥ इति ।

अथ नैमिषमाहात्म्यम् ।

तत्र महाभारते,

ततस्तु नैमिषं गच्छेत् पुण्यं सिद्धनिषेवितम् ।
तत्र नित्यं निवसति ब्रह्मा देवगणैर्वृतः ॥
नैमिषं प्रार्थयानस्य पापस्यार्द्धं प्रणश्यति ।
प्रविष्टमात्रस्तु नरः सर्वपापैः प्रमुच्यते ॥
तत्र मासं वसेद्धीरो नैमिषे तीर्थतत्परः ।
पृथिव्यां यानि तीर्थानि नैमिषे तानि भारत ॥
अभिषेकान्नरस्तत्र नियतो नियताशनः ।
गवामयस्य यज्ञस्य फलं प्राप्नोति मानवः ॥
पुनात्यासप्तमं चैव कुलं भरतसत्तम ।
यस्त्यजेन्नैमिषे प्राणानुपवासपरायणः ॥
स मोदेत्स्वर्गलोकस्थ एवमाहुर्मनीषिणः ।
नित्यं मेध्यं च पुण्यं च नैमिषं नृपसत्तम ॥
गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः ।
वाजपेयमवाप्नोति ब्रह्मभूतश्च जायते ॥ इति ।

लोमशतीर्थयात्रायाम् ,

ते तथा सहिता वीरा वसन्तस्तत्र तत्र ह ।
क्रमेण पृथिवीपाल नैमिषारण्यमागताः ॥
ततस्तीर्थेषु पुण्येषु गोमत्याः पाण्डवा नृप ।
कृताभिषेकाः प्रददुर्गाश्च वित्तं च भारत ॥
तत्र देवान् पितॄन् विप्रांस्तर्पयित्वा यथाविधि ।
कन्यातीर्थे श्वतीर्थे च गवां तीर्थे च कौरव ॥
वाल्कोट्यां विषप्रस्थे गिरावुष्य च पाण्डवाः ।
बाहुदायां महीपाल चक्रुः सर्वेऽभिषेचनम् ॥ इति ।

कूर्मपुराणे,

इदं त्रैलोक्यविख्यातं तीर्थं नैमिषमद्भुतम् ।
महादेवप्रियतरं महापातकनाशनम् ॥

तथा तत्रैव ऋषीन् प्रति–

ब्रह्मोवाच ।

सत्यं महान्तमासन्नं वाङ्मनोदोषवर्जितम् ।
देशं तं वः प्रवक्ष्यामि यस्मिन् देशे चरिष्यथ ॥
उक्त्वा मनोमयं चक्रं संस्पृष्ट्वा तानुवाच ह ।
क्षिप्तमेतन्मया चक्रमनुव्रजत माचिरम् ॥
यत्रास्य नेमिः शीर्य्येत स देशः स च विश्रुतः ।
ततो मुमोच तच्चक्रं ते च तं समनुव्रजन् ॥
तस्य वै व्रजतः क्षिप्रं यत्र नेमिरशीर्य्यत ।
नैमिषं तत् स्मृतं नाम्ना पुण्यं सर्वत्र पूजितम् ॥
सिद्धचारणसङ्कीर्णं यक्षगन्धर्वसेवितम् ।
स्थानं भगवतः शम्भोरिति नैमिषमुत्तमम् ॥
अत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ।
तपस्तप्त्वा पुरा देवा लेभिरे प्रवरान् वरान् ॥

इमं देशं समाश्रित्य षट्कुलीयाः समाहिताः ।
शक्रेणाराध्य देवेशं दृष्टवन्तो महेश्वरम् ॥
अन्नदानं तपस्तप्तं श्राद्धजप्यादिकं तथा ।
एकैकं पावयेत् पापं सप्तजन्मकृतं तथा ॥ इति ।

अथेन्द्रप्रस्थमाहात्म्यम् ।

सौभरिसंहितायाम्,
इन्द्रप्रस्थाख्यमेतद्धि क्षेत्रमिन्द्रस्य पावनम् ।
तेनात्र पूजितो विष्णुः क्रतुभिर्बहुदक्षिणैः ॥
तुष्टेन विष्णुना तस्मै वरो दत्तो निशाम्यताम् ।
भोः शक्र तावके क्षेत्रे सर्वतीर्थमये जनाः ॥
तनुं त्यक्ष्यन्ति ये ते वै मत्तुल्या हिंसका अपि । इति ।

अथायोध्यामाहात्म्यम् ।

तत्र स्कन्दपुराणे अयोध्यामानम् ।
सहस्रधारामारभ्य योजनं पूर्वतो दिशि ।
प्रत्यग्दिशि तथैवात्र योजनं सर्वतोऽवधि ॥
दक्षिणोत्तरभागेषु सरयूतमसावधि ।
एतत् क्षेत्रस्य संस्थानं हरेरन्तर्गृहं स्मृतम् ॥
मत्स्याकृतिरियं ब्रह्मन् पुरी विष्णोरुदीरिता ।
पश्चिमे मत्स्यमूर्द्धा तु गोप्रतारे स्थितो द्विज ॥
पूर्वतः पुच्छभागो हि दक्षिणोत्तरमध्यतः ।
तस्यां पुर्यां महाभागो नाम्ना विष्णुर्हरिः स्वयम् ॥
देवो दृष्टप्रभावोऽसौ प्राधान्येन रमत्यहो ।

नरसिंहपुराणे,

मार्कण्डेय उवाच ।

शृणु राजन् प्रवक्ष्यामि तीर्थानि विविधानि च ।

अयोध्यायां सुपुण्यानि सद्यः पापहराणि वै ।
न विस्तरेण शक्तिर्मे वक्तुमस्ति महामते ॥
सङ्क्षेपात्कथयिष्यामि कानिचित् प्रथितानि वै ।
यत्र रामो नरव्याघ्रः पद्मपत्रायतेक्षणः ॥
कृमिकीटपतङ्गाद्यैर्जनैः स्नात्वा जनार्द्दनः ।
शङ्खदुन्दुभिनिर्घोषैः स्तूयमानोऽप्सरोगणैः ॥
दिव्यैः सेन्द्रैः सरुद्रैश्च गन्धर्वैः किन्नरैस्तथा ।
दिव्यं विमानमास्थाय स्वपदं प्राप्तवान् हरिः ॥
गोप्रतारमिति तं विद्धि तीर्थानामुत्तमं पदम् ।
तस्य पुण्यफलं यत्स्यात् तच्छृणुष्व महामते ॥
गवां सहस्रं यो दद्याद्ब्राह्मणेभ्यो महामते ।
कुरुक्षेत्रे महापुण्ये राहुग्रस्ते दिवाकरे ॥
तत्फलं समवाप्नोति गोप्रतारे स्नानकृन्नरः । इति ।
तथा गोप्रतारमधिकृत्य—
भारते,
तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप ।
सर्व्वपापविशुद्धात्मा सर्व्वपापैः प्रमुच्यते ॥
ततस्तिलोदकं नाम सदा ब्रह्मर्षिसेवितम् ।
तत्र स्नात्वार्च्चयित्वा च विष्णुलोकमवाप्नुयात् ॥
चक्रतीर्थे नरः स्नात्वा पीत्वा तज्जलमुत्तमम् ।
सर्व्वपापैर्व्विनिर्म्मुक्तः सर्व्वदेवैश्च पूजितः ॥
दिव्यं विमानमास्थाय पुरन्दरपुरं व्रजेत् ।
तत्र भुक्त्वा बहून् भोगान् पुनर्व्विष्णुपुरं व्रजेत् ॥
अग्नितीर्थे नरः स्नात्वा नरसिंहं च पूजयेत् ।
अग्निरूपान्वितो भूत्वा परां गतिमवाप्नुयात् ॥

ततो बृहस्पतेः कुण्डं तीर्थानां तीर्थमुत्तमम् ।
तस्य पुण्यफलं यत्स्यात् तद्वदामि समासतः ॥
यो नरः प्रातरुत्थाय स्नानं कृत्वा विधानतः ।
नारसिंहमथाराध्य तस्मिंस्तीर्थे महामते ॥
गन्धपुष्पादिभिर्नित्यं सत्यवादी जितेन्द्रियः ।
स वागीशो भवेत्तत्र ततः स्वर्गमवाप्नुयात् ॥
दिव्यरत्नविचित्राङ्गो दिव्याभरणभूषितः ।
विमानेनार्कवर्णेन नरसिंहपुरं व्रजेत् ॥
शतवर्षसहस्राणि दिव्यया सङ्घयानघ ।
भुक्त्वा विष्णुपुरे भोगान् पुनः सायुज्यमाप्नुयात् ॥
तस्मात्परतरं राजन् ब्रह्मकुण्डमिति श्रुतम् ।
तीर्थानामुत्तमं तीर्थं तत्फलं शृणुतादरात् ॥
न विस्तरान्मया शक्यं वक्तुं ते साम्प्रतं नृप ।
सङ्क्षेपात् कथयिष्यामि तस्य तीर्थस्य यत्फलम् ।
जितेन्द्रिया जितक्रोधा रागद्वेषविवर्जिताः ॥
ब्रह्मकुण्डं समासाद्य ये नराः पर्य्युपासते ।
ते मुक्तपापा विप्रेन्द्र परां सिद्धिमवाप्नुयुः ॥
तस्मिन् कुण्डे सकृत्स्नात्वा यो नृसिंहं च पूजयेत् ।
दिव्यं विमानमारुह्य अप्सरोगणसेवितः ॥
संस्तूयमानो देवैश्च सिद्धैश्च परमर्षिभिः ।
ब्रह्मलोकमवाप्नोति नात्र कार्य्या विचारणा ॥
ब्रह्मणा कृतसत्कारो बहुकालं नृपात्मज ।
ततो विष्णुपुरं गत्वा पुनः सायुज्यमाप्नुयात् ॥
कोटितीर्थे नरः स्नात्वा सर्वपापैः प्रमुच्यते ।
अग्निष्टोमसहस्राणि वाजपेयशतानि च ॥

कर्त्तुश्च यत्फलं प्रोक्तं कोटितीर्थजलाप्लुतः ।
तत्फलं समवाप्नोति सत्यमेतन्मयोदितम् ॥
सुवर्णदानगोदानधान्यदानेषु यत्फलम् ।
तत्फलं समवाप्नोति कोटितीर्थजलाप्लुतः ॥
ततः सप्तर्षितीर्थं च परममृषिसेवितम् ।
तस्मिंस्तीर्थे नरः स्नात्वा ब्रह्मलोके महीयते ॥
ततः परं प्रवक्ष्यामि स्वर्गद्वारं महापदम् ।
सर्वदुःखक्षयकरं सर्वशान्तिकरं परम् ॥
यत्तीर्थं मुनिभिर्देवैः पुरन्दरपुरोगमैः ।
अप्सरोगणसंयुक्तैर्गन्धर्वैः किन्नरैस्तथा ॥
यक्षैर्विद्याधरगणैः सेव्यमानं समन्ततः ।
तस्य तीर्थस्य यत्पुण्यं तत्फलं कथयामि ते ॥
न विस्तारान्मया वक्तुं शक्यं तस्य फलं नृप ।
तस्मात्सङ्क्षेपतो वक्ष्ये समाहितमनाः शृणु ॥
कपिलां लक्षणोपेतां सवत्सां गां पयस्विनीम् ।
ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये ॥
यो दद्याद्विदुषे विद्वान् यत्फलं नान्तमुच्यते ।
तत्फलं सर्वमाप्नोति स्वर्गद्वारजलाप्लुतः ॥
नरः प्रत्यूषसि स्नात्वा स्वर्गद्वारे महामते ।
तत्र विष्णुं प्रतिष्ठाप्य नारसिंहमनामयम् ॥
पूजयित्वा हरौ भक्तिमुद्वहन् संयतेन्द्रियः ।
त्यक्त्वा देहं नृपश्रेष्ठ प्राप्नुयाद्वैष्णवं पदम् ॥
यः स्मरेत्प्रातरुत्थाय स्वर्गद्वारं नराधिप ।
सर्वपापविशुद्धात्मा स गच्छेत्परमां गतिम् ॥
यस्मिन् वहति संयुक्ता सरयूर्घर्घरेण तु ।

तत्सङ्गमुत्तमं तीर्थं गङ्गायमुनयोर्यथा ॥
बालखिल्याश्रितं तीर्थं सर्वपातकनाशनम् ।
तत्र स्नात्वा नरो गच्छेद्ब्रह्मलोकं सनातनम् ॥
बिल्वतीर्थमितिख्यातं शङ्करायतनं महत् ।
तत्र शङ्करमभ्यर्च्य स्नानं कुर्यात्तु यो नरः ॥
रुद्रलोकमवाप्नोति विमानेन विराजता ।
ततो गालवतीर्थेन्द्रमुत्तमं भुवि विश्रुतम् ॥
तत्र स्नात्वा दिवं प्राप्य गच्छन्ति ब्रह्म निष्कलम् ।
गोमत्यां रामतीर्थे तु यो नरः स्नानमाचरेत् ॥
तत्र विष्णुं प्रतिष्ठाप्य गन्धपुष्पादिभिः क्रमात् ।
आराध्य सिद्धिमाप्नोति स नरो नात्र संशयः ॥
जटाकुण्डमिति ख्यातं सर्वपापहरं शुभम् ।
तत्र स्नात्वा च पीत्वा च ब्रह्मलोके महीयते ॥ इति ।

अथ सरयूमाहात्म्यम् ।

तत्र स्कान्दे अयोध्याखण्डे,
यस्यास्तीरे पुण्यजला कूजद्भृङ्गविहङ्गमा ।
सरयूर्नाम तटिनी मानसप्रभवोत्तमा ॥
घर्मद्रवपरीणामा घर्घरोत्तमसङ्गता ।
मुनीश्वराश्रिततटा जागर्त्ति जगदुत्तमा ॥
दक्षिणाच्चरणाङ्गुष्ठान्निःसृता जाह्नवी हरेः ।
वामाङ्गुष्ठान्मुनिवराः सरयूर्निर्गता विभोः ॥
तस्मादिमे पुण्यतमे नद्यौ देवविनिर्मिते ।
एतयोः स्नानमात्रेण ब्रह्महत्यां व्यपोहति ॥ इति ।
स्कन्दपुराणे,

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि- मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । (वेदान्तः) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १६

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं संपूर्णम् (वेदान्तः) २

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्तः) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम् - बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्तः) ... ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ३

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहितः प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ... ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ९

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ... ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... ... १

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । १

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... १

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित १

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद. शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । १

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपाद । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता । १०

(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वेश्वरसूरिविरचितः । ६

(४८) वीरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकया समलंकृतः । ६

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत । १

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् १

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेत २

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः । ५

(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द ( क्षेमेन्द्र ) विरचितम् । सांख्यतत्त्वयाथार्थ्यदीपनम् भावागणेशविरचितम् । समाससूत्रव्याख्या सर्वोपकारिणी च ।

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी

August 1918.

THE

# CHOWKHAMBÁ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 248.

# वीरमित्रोदयः ।

तीर्थप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः ।

VÎRAMITRODAYA,

TIRTH-PRAKÂSA.

BY

MAHÂMAHOPÂDHÂYA PANDITA MITRA MIŚRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. X.

FASCICULUS VI-६.

PUBLISHED & SOLD BY THE SECRETARY,
CHOWKHAMBÁ SANSKRIT SERIES OFFICE, BENARES.
AGENTS —
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
Printed by Jai Krishna Das Gupta,
at the Vidya Vilas Press,
BENARES.
Price Rupee one.

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥
स्तवकः—२४८

१ अस्यां चौखम्बा–संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्रा ७ आनकाः ८
अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ " ०

५ मार्गव्ययः पृथग् नास्ति। ... ... ... ... ... ... ...

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) सत्कारररत्नमाला। गोपीनाथभट्टकृता खण्डे ... ... ... ... २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः १२

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम्। सम्पूर्णम्। १०

(४) भाष्यार्थसंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः। महामहोपाध्यायश्रीगागाभट्टविरचिता। तर्कपादः (मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा (मीमांसा) ... २

(८) ब्रह्मसूत्रभाष्यम् बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम्। सम्पूर्णम्। (वेदान्तः) ६

(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्–विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री६श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् वेदान्तः १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः। आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः। सम्पूर्णः (न्यायः) ... ... ... ... ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सम्पूर्णम् (मीमांसा) ... २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) ११

सरयूसलिले स्नात्वा शुद्धस्तद्गतमानसः ।
देवं धर्महरिं पश्येत् सर्वपापैः प्रमुच्यते ॥
अन्नदानं तथा होमो जपो ब्राह्मणभोजनम् ।
सर्वमक्षयतां याति विष्णुलोकनिवासवत् ॥ इति ।

अथात्र यात्राक्रमः ।

स्कन्दपुराणे,

शृणु वक्ष्यामि तत्त्वेन यात्राप्रक्रममादितः ।
अयोध्यास्थिततीर्थानां यथावदनुपूर्वशः ॥
मनोवाक्कायशुद्धेन निर्दोषेणान्तरात्मना ।
यः करोति विधिं सम्यक् स तीर्थफलमश्नुते ॥
प्रातरुत्थाय मतिमान् सङ्गमे स्नानमाचरेत् ।
विष्णुं चक्रहरिं दृष्ट्वा स्नायाद्वै ब्रह्मकुण्डके ॥
चक्रतीर्थे नरः स्नात्वा दृष्ट्वा विष्णुहरिं विभुम् ॥
गोप्रतारे नरः स्नात्वा पश्येत् गुप्तहरिं ततः ।
स्वर्गद्वारे नरः स्नात्वा पश्येच्चन्द्रहरिं विभुम् ॥
ततो धर्महरिं दृष्ट्वा सर्वपापैः प्रमुच्यते ।
एकादश्यामेकादश्यामेषा यात्रा शुभावहा ॥
प्रातरुत्थाय मतिमान् स्वर्गद्वारजलाप्लुतः ।
विधाय नित्यकं कर्म अयोध्यायां विलोकयेत् ॥
सुरापां तु ततो दृष्ट्वा पश्येन्मत्तगजं ततः ।
वन्दीं च शीतलां चैव कुण्डवीं च विलोकयेत् ॥
तदग्रे सरसि स्नात्वा महाविद्यां विलोकयेत् ।
पिण्डारकं ततो दृष्ट्वा ततो भैरवमर्चयेत् ॥
अष्टम्यां च चतुर्दश्यामेषा यात्रा फलप्रदा ।
अङ्गारकचतुर्थ्यां तु पूर्वोक्ता देवता अपि ॥

विघ्नेशं च ततः पश्येत् सर्वकार्य्यार्थसिद्धये ।
प्रातरुत्थाय मतिमान् ब्रह्मकुण्डजले प्लुतः ॥
विभुं विष्णुहरिं दृष्ट्वा मनोवाक्कायशुद्धिमान् ।
मन्त्रेश्वरं ततो दृष्ट्वा महाविद्यां विलोकयेत् ॥
अयोध्यां च ततो दृष्ट्वा सर्वकामार्थसिद्धये ॥
स्वर्गद्वारे नरः स्नात्वा विजितेन्द्रिय आदरात् ।
एषा वैतरणीयात्रा सर्वपापहरा शुभा ॥
इमां यः कुरुते यात्रां नित्यं शुभफलप्रदाम् ।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥ इति ।
अत्र तानि तानि तीर्थानि लोकप्रसिद्धितोऽवसेयानि ।

अथ सरयूघर्घरसङ्गमः ।

अयोध्याखण्डे,

जात्यन्धैरिह ते तुल्या मृतैः पङ्गुभिरेव च ।
समर्था ये तु न स्नान्ति सरयूघर्घरसङ्गमे ॥

तथा,

यथा वह्निर्दहेत्सर्वं शुष्कमार्द्रमथापि वा ।
भस्मीभवन्ति पापानि तद्वत्सङ्गममज्जनात् ॥
निवासो हि भवेत्तस्य विष्णुलोके सुनिर्मले ।
एकतः सर्वतीर्थानि नानाविधफलानि च ॥
सरयूघर्घरात्यन्तसङ्गमस्त्वधिको भवेत् । इति ।

अथ मथुरामाहात्म्यम् ।

सुरम्या च प्रशस्ता च जन्मभूमिर्मम प्रिया ।
मूर्त्तिश्चतस्र आदाय उत्पश्यामि वरानने ॥
मूर्तीः कृष्णबलभद्रप्रद्युम्नानिरुद्धरूपाः ।
तत्र गुह्यानि मे भद्रे भविष्यन्ति प्रियाणि वै ।

पुण्यानि च प्रशस्तानि नृणां संसारमोक्षिणाम् ॥
गुह्यानि स्थानानि वक्ष्यमाणानि ।

तत्राहं घातयिष्यामि दानवांश्च वरानने ।
नदी तत्र वरारोहे शुभा पुण्यतरोदका ॥
विवस्वतः सुता रम्या यमुना वै भविष्यति ।
सा प्रयागे तु श्रोणि ब्रह्मक्षेत्रे यथा शुभा ॥
भविष्यति न सन्देहो गङ्गायास्तदनन्तरम् ।

सा प्रयागे त्विति । तदनन्तरं मथुराया अनन्तरम् । प्रयागं ब्रह्मक्षेत्रम् । गङ्गाया गङ्गातो यथा यमुना शुभा भविष्यति तथात्र प्रथममेव मथुरायां शुभा भविष्यतीत्यर्थः ।

लभन्ते मनुजाः सिद्धिमात्मकर्मसु भाविताः ।
मम क्षेत्रप्रभावो ऽसौ भूमि संसारमोक्षणम् ॥ इति ।

इतः परं कल्पतरुकाराधृतान्यपि शिष्टसङ्गृहीतानि वाक्यानि लिख्यन्ते ।

आदिवाराहे,

विंशतिर्योजनानां तु माथुरं मम मण्डलम् ।
यत्र तत्र नरः स्नातो मुच्यते सर्वपातकैः ॥
पदे पदे तीर्थफलं मथुरायां वसुन्धरे ।
यत्र तत्र नरः स्नातो मुच्यते घोरकिल्बिषैः ॥
सर्वधर्मविहीनानां पुरुषाणां दुरात्मनाम् ।
नरकार्त्तिहरा देवी मथुरा पापनाशिनी ॥
कृतघ्नश्च सुरापश्च चौरो भग्नव्रतस्तथा ।
मथुरां प्राप्य मनुजो मुच्यते सर्वकिल्बिषैः ॥

तथा,

श्रद्धया भक्तियुक्तस्तु गत्वा मधुपुरीं नरः ।

ब्रह्महापि विशुध्येत किंपुनस्त्वन्यपातकी ॥
तथा,
अनुपङ्गेण गच्छन्ति वाणिज्येनापि सेवया ।
मथुरास्नानमात्रेण पापं त्यक्त्वा दिवं व्रजेत् ॥
नामापि गृह्णतामस्याः सद्य एवैनसः क्षयः ।
तथा,
त्रिरात्रमपि ये तत्र वसन्ति मनुजा मुने ।
तेषां पुनन्ति नियतं स्पृष्टाश्चरणरेणवः ॥
तथा,
अन्यत्र हि कृतं पापं तीर्थमासाद्य नश्यति ।
तीर्थे तु यत्कृतं पापं वज्रलेपो भवेदिति ॥
मथुरायां कृतं पापं मथुरायां प्रणश्यति ।
तथा,
महामाघ्यां प्रयागे च यत्फलं लभते नरः ।
तत्फलं लभते देवि मथुरायां दिने दिने ॥
कार्त्तिक्यां चैव यत्पुण्यं पुष्करे तु वसुन्धरे ।
तत्फलं लभते देवि मथुरायां दिने दिने ॥
सन्निहत्यां तु यत्पुण्यं राहुग्रस्ते दिवाकरे ।
तत्फलं लभते देवि मथुरायां जितेन्द्रियः ॥
पूर्णे वर्षसहस्रे तु वाराणस्यां तु यत्फलम् ।
तत्फलं लभते देवि मथुरायां क्षणेन हि ॥ इति ।

अथ मथुरापदव्युत्पत्तिः ।

ऋषिर्माथुरनामात्र तपः कुर्वति शाश्वते ।
ततोऽस्य माथुरं नामाभवदाद्यं श्रिया युतम् ॥
पाद्मे पातालखण्डे,

मकारे च उकारे च अकारे चान्तसंस्थिते ।
माथुरशब्दो निष्पन्न ओङ्कारस्य ततः समः ॥
महारुद्रो मकारः स्यादुकारो विष्णुसंज्ञकः ।
अकारस्तु ब्रह्मा स्यात्त्रिशब्दं माथुरं भवेत ॥ इति ।

अथ मरणफलम् ।

तत्रैव,

या गतिर्योगयुक्तस्य ब्रह्मज्ञस्य मनीषिणः ।
सा गतिस्त्यजतः प्राणान् मथुरायां नरस्य च ॥
तीर्थे चैव गृहे चापि चत्वरे पथि चैव हि ।
यत्र तत्र मृता देवि मुक्तिं यान्ति न चान्यथा ॥
काश्यादिपुर्य्यो यदि सन्ति लोके तासां तु मध्ये मथुरैव धन्या ।
या जन्ममौञ्जीव्रतमृत्युदाहैर्नृणां चतुर्धा विदधाति मुक्तिम् ॥
न योगैर्या गतिर्लभ्या मन्वन्तरशतैरपि ।
अन्यत्र हेलया सात्र लभ्यते मत्प्रसादतः ॥
न पापेभ्यो भयं यत्र न भयं यत्र वै यमात् ।
न गर्भवासभीर्यत्र तत् क्षेत्रं को न संश्रयेत ॥
विना साङ्ख्येन योगेन विना स्वात्मावचिन्तनम् ।
विना व्रततपोदानैः श्रेयो वै प्राणिनामिह ॥
कलग्रामेण किं तस्य वाराणस्या च वा शुभे ।
मथुरायां च यत्पुण्यं तस्य पुण्यफलं शृणु ॥
मथुरां यां समासाद्य यः कश्चिन्म्रियते भुवि ।
अपि कीटः पतङ्गो वा जायते स चतुर्भुजः ॥
कृमिकीटपतङ्गाद्या मथुरायां मृता हि ये ।
कूलात्पतन्ति ये वृक्षास्तेऽपि यान्ति परां गतिम् ॥

पातालखण्डे,

प्रणालयामिष्टकाचिते श्मशाने व्योम्नि मञ्चके ।
अट्टाले वा मृता देवि माथुरे मुक्तिमाप्नुयुः ॥ इति ।

विंशतियोजनात्मकेऽपि द्वादशयोजने विशेषः ।

मथुराखण्डे,

माथुरं मण्डलं विद्धि योजनानां तु द्वादश ।
यत्र तीर्थसहस्राणि रामकृष्णकृतानि च ॥

ततोऽपि विशेषः ।

गव्यूतिद्वादशमयी द्वादशारण्यसंयुता ।
तत्रापि मथुरा देवी सर्वसिद्धिविधायिनी ॥

ततोऽपि पद्माकृतौ विशेषः ।

आदिवाराहे,

इदं पद्मं महाभागे सर्वेषां मुक्तिदायकम् ।
कर्णिकायां स्थितो देवि केशवः क्लेशनाशनः ॥
कर्णिकायां मृता ये तु ते नरा मुक्तिभागिनः ।
पत्रमध्ये मृता ये च तेषां मुक्तिर्वसुन्धरे ॥
पश्चिमेन हरिं देवं गोवर्द्धननिवासिनम् ।
दृष्ट्वा तं देवदेवेशं किं मनः परितप्यसे ॥
उत्तरेण तु गोविन्दं दृष्ट्वा देवं परं शुभम् ।
नासौ पतति संसारे यावदाभूतसम्प्लवम् ॥
विश्रान्तिसंज्ञकं देवं पूर्वपत्रे व्यवस्थितम् ।
यं दृष्ट्वा तु नरो याति मुक्तिं नास्त्यत्र संशयः ॥
दक्षिणेन तु मां विद्धि प्रतिमां दिव्यरूपिणीम् ।
महाकायां सुरूपां च केशवाकारसन्निभाम् ॥
तां दृष्ट्वा मनुजो देवि ब्रह्मणा सह मोदते । इति ।

## अथ कालविशेषे फलम् ।

विष्णुपुराणे,

यमुनासलिले स्नातः पुरुषो मुनिसत्तम ।
ज्येष्ठामूलामले पक्षे द्वादश्यामुपवासकृत् ॥
समभ्यर्च्याच्युतं सम्यक् मथुरायां समाहितः ।
अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम् ॥ इति ।

तत्रैव पितॄणां वाक्यम्

कश्चिदस्मत्कुले जातः कालिन्दीसलिलाप्लुतः ।
अर्चयिष्यति गोविन्दं मथुरायामुपोषितः ॥
ज्येष्ठामूलामले पक्षे येनैव वयमप्युत ।
परामृद्धिमवाप्स्यामस्तारिताः स्वकुलोद्भवैः ॥
ज्येष्ठस्य शुक्लद्वादश्यां समभ्यर्च्य जनार्दनम् ।
धन्योऽसौ पिण्डनिर्वापं यमुनायां प्रदास्यति ॥ इति ।

ज्येष्ठामूलो ज्येष्ठः हारावलीकोषात् ।

आदिवाराहे,

पृथिव्यां यानि तीर्थानि आसमुद्रं सरांसि च ।
मथुरायां गमिष्यन्ति मयि सुप्ते वसुन्धरे ॥
सप्तद्वीपेषु तीर्थानि पुण्यान्यायतनानि च ।
मथुरायां गमिष्यन्ति सुप्ते चैव जनार्दने ॥ इति ।

## अथ जन्माष्टम्याम् ।

वाराहे,

जन्माष्टमीदिने प्राप्ते तत्र यो मां प्रपश्यति ।
जन्मकोटिकृतं पापं तत्क्षणादेव नश्यति ॥

तथा,

भाद्रे मासि ममाष्टम्यां यः करोति ममार्चनम् ।
सर्वपापं परित्यज्य मम स्थानं स गच्छति ॥ इति ।
कार्त्तिके तु पाद्मे,
यत्र कुत्रापि देशोऽयं कार्त्तिकः स्नानदानतः ।
अग्निहोत्रसमफलः पूजायां तु विशेषतः ॥
कुरुक्षेत्रे कोटिगुणो गङ्गायामपि तत्समः ।
ततोऽधिकः पुष्करे स्यात् द्वारकायां तु भार्गव ॥
कृष्णसालोक्यदो वै मासः पूजास्नानैश्च कार्त्तिकः ।
अन्याः पुर्य्यस्तत्समाना मुनयो मथुरां विना ॥
दामोदरत्वं हि हरेस्तत्रैवाभीद्यतः किल ।
मथुरायां ततस्तूर्जो वैकुण्ठप्रीतिवर्द्धनः ॥
यथा माघे प्रयागः स्यात् वैशाखे जाह्नवी यथा ।
कार्त्तिके मथुरा सेव्या तदुत्कर्षः परो न हि ॥
मथुरायां नरैरूर्ज्जे स्नात्वा दामोदरोऽर्चितः ।
कृष्णरूपा हि ते ज्ञेया नात्र कार्य्या विचारणा ॥
तथा,
मथुरायां सकृदपि श्रीदामोदरपूजनात् ।
मन्त्रद्रव्यविहीनं च विधिहीनं च पूजनम् ॥
मन्यते कार्त्तिके देवो मथुरायां मदर्चनम् ।
यस्य पापस्य युज्येत मरणान्ता हि निष्कृतिः ॥
तच्छुद्ध्यर्थमिदं प्रोक्तं प्रायश्चित्तं सुनिश्चितम् ।
कार्त्तिके मथुरायां वै श्रीदामोदरपूजनम् ॥ इति ।
पाद्मे,
कार्त्तिके जन्मसदने केशवस्य च ये नराः ।
सकृत् प्रविष्टाः श्रीकृष्णं यान्ति ते परमव्ययम् ॥

तत्रैव प्रबोधिन्याम्,

एकैवैकादशी कृष्णजन्मगेहे कृता नरैः ।
ततोऽधिकं न कर्त्तव्यं लोके किंचन विद्यते ॥
रात्रौ जागरणं तत्र प्रीत्या कुर्वन्ति ये नराः ।
संसारमोहस्वप्नान्ते सदा जाग्रति जाग्रति ॥
अन्यत्रापि प्रिया विष्णोर्जागरे स्यात् प्रबोधिनी ।
किंपुनर्मथुरायां सा ततो वै जन्मसद्मनि ॥ इति ।

अथ श्रीकेशवमाहात्म्यम् ।

आदिवाराहे,

प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ।
प्रदक्षिणा कृता येन मथुरायां तु केशवे ॥
इहजन्मकृतं पापमन्यजन्मकृतं च यत् ।
तत्सर्वं नश्यते शीघ्रं कीर्त्तने केशवस्य च ॥

वाराहे

मथुरावासिनो लोकाः सर्वे ते सिद्धिभाजनाः ।
मथुरा समनुप्राप्य दृष्ट्वा देवं तु केशवम् ॥
स्नात्वा पुनस्तु कालिन्द्यां यो मां पश्यति सर्वदा ।
स तत्फलमवाप्नोति राजसूयाश्वमेधयोः ॥ इति ।

अथ भगवन्मूर्त्तीनां माहात्म्यम् ।

दीर्घविष्णुं समालोक्य पद्मनाभं स्वयम्भुवम् ।
मथुरायां सकृद्देवि सर्वाभीष्टमवाप्नुयात् ॥

तथा,

विश्रान्तिसंज्ञकं दृष्ट्वा दीर्घविष्णुं च केशवम् ।
सर्वेषां दर्शनं पुण्यमेभिर्दृष्टैः फलं भवेत् ॥ इति ।

अथ कृष्णपरीवारमाहात्म्यम् ।

एकानंशां ततो देवीं यशोदां देवकीं तथा ।
महाविद्येश्वरीं दृष्ट्वा मुच्यते ब्रह्महत्यया ॥ इति ।

अथ भूतेश्वरमहिमा ।

मथुरायां च देव त्वं क्षेत्रपालो भविष्यसि ।
त्वयि दृष्टे महादेव मम क्षेत्रफलं भवेत् ॥
दृष्ट्वा भूतपतिं देवं वरदं पापनाशनम् ।
तेन दृष्टेन वसुधे माथुरं फलमाप्नुयात् ॥ इति ।

अथ विश्रान्तिमाहात्म्यम् ।

स्कान्दे मथुराखण्डे,

तत्र तीर्थं महाराज विश्रान्तिर्लोकविश्रुतम् ।
भ्रमित्वा सर्वतीर्थानि विश्रान्तिं यान्ति सात्वताः ॥

तत्रैव बदरीमाहात्म्ये,

विश्रान्तितीर्थे विधिवत्स्नात्वा कृत्वा तिलोदकम् ।
पितॄनुद्धृत्य नरकाद्विष्णुलोकं प्रपद्यते ॥
यदि कुर्यात्प्रमादेन पातकं तत्र मानवः ।
विश्रान्तिस्नानमात्रेण भस्मीभवति तत्क्षणात् ॥ इति ।

अथ मथुरायां यमुनामाहात्म्यम् ।

पातालखण्डे,

पातकी पातकान्मुक्तः पुण्याढ्यः स्यादपातकी ।
फलाभिसन्धिरहितः कालिन्द्यामेव मुच्यते ॥
स्नानादिकर्म कालिन्द्यां येन केनापि यत्कृतम् ।
यथावदयथावद्वा तत्र साधुफलवद्भवेत् ॥
विशेष एष कालिन्द्यां मृतो याति हरेः पदम् ।

मथुरासङ्गतायां तु हरिरेव भवेन्नरः ॥ इति ।

पद्मपुराणे,

सङ्क्रान्तौ रविवारे च सप्तम्यां वैधृतौ तथा ।
व्यतीपाते च हस्तर्क्षे त्वाष्ट्रे पौष्णे पुनर्वसौ ॥
एकादश्यां चतुर्दश्यामष्टम्यां च विधुक्षये ।
पौर्णमास्यां च पूर्वोक्तं फलं शतगुणं भवेत् ॥
तदेव स्यात्कोटिगुणं ग्रहणे चन्द्रसूर्ययोः ।
द्वादश्यामर्च्चयेद्विष्णुमेकादश्यामुपोष्य यः ॥
कालिन्द्यां तस्य सुलभं तद्विष्णोः परमं पदम् । इति ।

## अथ चतुर्विंशतिर्यमुनातीर्थानि ।

आदिवाराहे,

अविमुक्ते नरः स्नातो मुक्तिं प्राप्नोत्यसंशयम् ।
तत्राऽथ मुञ्चति प्राणान् मम लोकं स गच्छति ॥ १ ॥
विश्रान्तिसंज्ञकं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
यस्मिन् स्नातो नरो देवि मम लोके महीयते ॥ २ ॥
अस्ति चान्यतरं गुह्यं सर्वसंसारमोक्षणम् ।
तस्मिन् स्नातो नरो देवि मम लोके महीयते ॥ ३ ॥
प्रयागं नाम तीर्थं तु देवानामपि दुर्ल्लभम् ।
तस्मिन् स्नातो नरो देवि अग्निष्टोमफलं लभेत् ॥ ४ ॥

सौरपुराणे,

ततस्तीर्थं प्रयागाख्यं पवित्रं पापनाशनम् ।
पितृभ्यस्तत्र यद्दत्तं तदक्षयतरं भवेत् ॥
तत्तीर्थं सेवमानस्य कृष्णं च जगतां गुरुम् ।
निःसंशयं मनुष्यस्य पुनर्जन्म न विद्यते ॥

आदिवाराहे,

तथा कनखलं तीर्थं गुह्यं तीर्थं परं मम ।
स्नानमात्रेण तत्रापि नाकपृष्ठे स मोदते ॥ ५ ॥
अस्ति क्षेत्रं परं गुह्यं तिन्दुकं नाम नामतः ।
तस्मिन्स्नातो नरो देवि मम लोके महीयते ॥ ६ ॥
ततः परं सूर्य्यतीर्थं सर्वपापप्रमोचनम् ।
वैरोचनेन बलिना सूर्य्यस्त्वाराधितः पुरा ॥ ७ ॥
आदित्येऽहनि सङ्क्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः ।
तस्मिन्स्नातो नरो देवि राजसूयफलं लभेत् ॥

सौरपुराणे,

ततः परं वटस्वामितीर्थाख्यं तीर्थमुत्तमम् ।
वटस्वामीतिविख्यातो यत्र देवो दिवाकरः ॥
तत्तीर्थं चैत्र यो भक्त्या रविवारे निषेवते ।
प्राप्नोत्यारोग्यमैश्वर्य्यमन्ते च गतिमुत्तमाम् ॥

आदिवाराहे,

यत्र ध्रुवेण सन्तप्तमिच्छया परमं तपः ।
तत्र वै स्नानमात्रेण ध्रुवलोके महीयते ॥
ध्रुवतीर्थे तु वसुधे यः श्राद्धं कुरुते नरः ।
पितॄन्सन्तारयेत्सर्वान् पितृपक्षे विशेषतः ॥ ८ ॥

सौरपुराणे,

ध्रुवतीर्थमिति ख्यातं तीर्थं मुख्यं ततः परम् ।
यत्र स्नातवतो मोक्षो ध्रुव एव न संशयः ॥

स्कान्दे मथुराखण्डे,

गयायां पिण्डदानेन यत्फलं हि नृणां भवेत् ।
तस्माच्छतगुणं तीर्थे पिण्डदानात् ध्रुवस्य च ॥
ध्रुवतीर्थे जपो होमस्तपो दानं समर्चनम् ।

सर्वतीर्थाच्छतगुणं नृणां तत्र फलं भवेत् ।

आदिवाराहे,

दक्षिणे ध्रुवतीर्थस्य ऋषितीर्थं प्रकीर्त्तितम् ।
तत्र स्नातो नरो देवि मम लोके महीयते ॥

स्कान्दे मथुराखण्डे,

तस्मिन् मधुवने पुण्यमृषितीर्थं हरेः प्रियम् ।
स्नानमात्रेण भूपाल हरौ भक्तिः परा भवेत् ॥ ॥ ९ ॥
दक्षिणे ऋषितीर्थस्य मोक्षतीर्थं वसुन्धरे ।
स्नानमात्रेण वसुधे मोक्षं प्राप्नोति मानवः ॥ १० ॥

आदिवाराहे,

तत्रैव कोटितीर्थं तु देवानामपि दुर्लभम् ।
तत्र स्नानेन दानेन मम लोके महीयते ॥ ११ ॥
तत्रैव बोधितीर्थं तु पितॄणामतिदुर्लभम् ।
पिण्डं दत्त्वा तु वसुधे पितृलोकं स गच्छति ॥१२ ॥
द्वादशैतानि देवानां दुर्लभानि च तानि वै ।
तेषां स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥
उत्तरे त्वसिकुण्डाच्च तीर्थं तु नवसंज्ञकम् ।
नवतीर्थात्परं तीर्थं न भूतं न भविष्यति ॥ १३ ॥
ततः संयमनं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
तत्र स्नातो नरो देवि यमलोकं न गच्छति ॥ १४ ॥
धारापतनके स्नात्वा नाकपृष्ठे स मोदते ।
अथात्र मुञ्चति प्राणान् मम लोकं स गच्छति ॥ १५ ॥
अतः परं नागतीर्थं तीर्थानामुत्तमोत्तमम् ।
तत्र स्नाता दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ १६ ॥
घण्टाभरणकं तीर्थं सर्वपापप्रमोचनम् ।

यस्मिन् स्नातो नरो देवि सूर्यलोके महीयते ॥ १७ ॥
तीर्थानामुत्तमं तीर्थं ब्रह्मलोकमितिश्रुतम् ।
तत्र स्नात्वा च नियतो मनुजो नियताशनः ॥
ब्रह्मणा समनुज्ञातो विष्णुलोकं स गच्छति ॥१८ ॥
सोमतीर्थं तु वसुधे पवित्रे यमुनाम्भसि ।
तत्राभिषेकं कुर्वीत स्वस्वकर्मप्रतिष्ठितः ॥
योगतः सोमलोके तु एवमेव न संशयः ॥ १९ ॥
सरस्वत्याश्च पतनं सर्वपापहरं शुभम् ।
तत्र स्नात्वा नरो देवि अवर्णोऽपि यतिर्भवेत् ॥२० ॥
चक्रतीर्थं च विख्यातं माथुरे मम मण्डले ।
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ॥
स्नानमात्रेण मनुजो मुच्यते ब्रह्महत्यया ॥ २१ ॥
दशाश्वमेधमृषिभिः पूजितं सर्वदा पुरा ।
तत्र ये स्नान्ति निरताः तेषां स्वर्गो न दुर्लभः ॥ २२ ॥
तीर्थं तु विघ्नराजस्य पुण्यं पापहरं शुभम् ।
तत्र स्नातं तु मनुजं विघ्नराजो न पीडयेत् ॥ २३ ॥
ततः परं कोटितीर्थं त्रैलोक्ये परमं शुभम् ॥
तत्र वै स्नानमात्रेण गवां कोटिफलं लभेत् ॥ २४ ॥
मथुराखण्डमण्डले तु विश्रान्तिं विना चतुर्विंशतितीर्थानि ।

तथाहि —

चतुर्विंशतितीर्थानि तत्तीर्थाद्दक्षिणोत्तरे ।
दशाश्वमेधपर्यन्तं मोक्षान्तं च युधिष्ठिर ॥ इति ।

अथान्यत्यामरप्रसिद्धतीर्थानां माहात्म्यम् ।

तत्र गोकर्णस्य ।

.मारपुराणे,

ततो गोकर्णतीर्थाख्यं तीर्थं त्रिभुवनश्रुतम् ।
विद्यते विश्वनाथस्य विष्णोरत्यन्तवल्लभम् ॥ इति ।

कृष्णगङ्गायाः ।

आदिवाराहे,

पञ्चतीर्थाभिषेकाच्च यत् फलं लभते नरः ।
कृष्णगङ्गा दशगुणं दिशते तु दिने दिने ॥ इति ।

वैकुण्ठस्य ।

वैकुण्ठतीर्थे यः स्नाति मुच्यते सर्वपातकैः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥ इति ।

अथ केशितीर्थस्य ।

आदिवाराहे,

गङ्गा शतगुणं पुण्यं यत्र केशी निपातितः ।
तत्रापिच विशेषोऽस्ति केशितीर्थे वसुन्धरे ॥
तस्मिन् पिण्डप्रदानेन गयापिण्डफलं लभेत् । इति ।

अथ कालियह्रदस्य ।

कालियस्य ह्रदं गत्वा क्रीडां कृत्वा वसुन्धरे ।
स्नानमात्रेण तत्रैव सर्वपापैः प्रमुच्यते ॥
अथात्र मुञ्चति प्राणान् मम लोकं स गच्छति ॥

श्रीभागवते,

योऽस्मिन् स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः ।
उपोष्य मां स्मरन्मर्त्यः सर्वपापैः प्रमुच्यते ॥ इति ।

द्वादशादित्यसंज्ञस्य ।

आदिवाराहे,

सूर्यतीर्थे नरः स्नातो दृष्ट्वादित्यान् वसुन्धरे ।
आदित्यभवनं प्राप्य कृतकृत्यः स मोदते ॥ इति ।

### अथ गोवर्द्धनस्य ।

तत्रैव,

अस्ति गोवर्द्धनं नाम क्षेत्रं परमदुर्लभम् ।
मथुरापश्चिमे भागे अदूराद्योजनद्वयम् ॥
अन्नकूटं ततः प्राप्य तस्य कुर्य्यात् प्रदक्षिणम् ।
न तस्य पुनरावृत्तिर्देवि सत्यं ब्रवीमि ते ॥
स्नात्वा मानसगङ्गायां दृष्ट्वा गोवर्द्धनं हरिम् ।
अन्नकूटं परिक्रम्य किं मनः परितप्यसे ॥

तथा,

मासि भाद्रपदे शुक्ला कृष्णा चैकादशी शुभा ।
गोवर्द्धने सोपवासः कुर्य्यात्तत्र प्रदक्षिणम् ॥ इति ।

हरिभवनप्राप्तिः फलम् ।

### अक्रूरतीर्थस्य ।

अनन्तरमतिश्रेष्ठं सर्वपापविनाशनम् ।
अक्रूरतीर्थमत्यर्थमस्ति प्रियतरं हरेः ॥
पूर्णिमायां तु यः स्नायात्तत्र तीर्थवरे नृप ।
स मुक्त एव संसारात् कार्त्तिक्यां तु विशेषतः ॥ इति ।

### राधाकुण्डस्य ।

अरिष्टराधाकुण्डाभ्यां स्नानात्फलमवाप्यते ।
राजसूयाश्वमेधाभ्यां नात्र कार्य्या विचारणा ॥ इति ।

### अथ मथुरावासमाहात्म्यम् ।

आदिवाराहे,

मथुरायां ये वसन्ति विष्णुरूपा हि ते खलु ।
अज्ञानास्तान्न पश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥

मथुरायां पुरे यस्तु प्रासादं पुरवासिनाम् ।
कारयित्वा तु मनुजो जायते स चतुर्भुजः ॥
स्कान्दे,
मथुरावासिनो लोकान्मनसापि द्विषन्ति ये ।
न जातु तेषां भविता विरहो निरयैः सह ॥
माथुरावासिनां कुर्वन्त्युपकारं मनागपि ।
ये लोका नास्ति तेषां हि पुण्यस्यान्तः कथञ्चन ॥ इति ।
अथ द्वादशवनानां माहात्म्यम् ।
तत्रादिवाराहमते मधुवनं पुराच्छिन्नपश्चास्ति । तथाहि,
तेन दृष्टा च सा रम्या वामनस्य पुरी यथा ।
तीर्थैर्द्वादशभिर्युक्ता पुण्या पापहरा शुभा ॥
तथा,
प्रथमं मधुवनं नाम द्वादशं वृन्दकावनम् ।
एतानि ये प्रपश्यन्ति न ते नरकभोगिनः ॥
अस्य माहात्म्यम् ।
एवं मधुवनं नाम विष्णुस्थानमनुत्तमम् ।
यद्दृष्ट्वा मनुजो देवि सर्वान् कामानवाप्नुयात् ॥ १ ॥
तालवनस्य ।
आदिवाराहे,
वनं तालवनं चैव द्वितीयं वनमुत्तमम् ।
यत्र स्नात्वा नरो देवि कृतकृत्योऽभिजायते ॥
तत्र कुण्डं स्वच्छजलं नीलोत्पलविभूषितम् ।
तत्र स्नानेन दानेन वाञ्छितं फलमाप्नुयात् ॥
स्कान्दे मथुराखण्डे,
अहो तालवनं पुण्यं यत्र तालैर्हतोऽसुरः ।

हिताय यादवानां च आत्मक्रीडनकाय च ॥
यस्तत्र कुरुते स्नानं यत्र कुत्र स्थिते जले ।
स देवत्वमवाप्नोति देहान्ते देवदर्शनः ॥ २ ॥ इति ।
कुमुदवनस्य ।
आदिवाराहे,
वनं कुमुदवनं चैव तृतीयं वनमुत्तमम् ।
तत्र गत्वा नरो देवि मम लोके महीयते ॥
विमलस्य च कुण्डे तु सर्वपापाद्विमोक्ष्यते ॥ ३ ॥ इति ।
काम्यवनस्य ।
स्कान्दे मथुराखण्डे,
ततः काम्यवनं राजन् यत्र बाल्ये स्थितो भवान् ।
स्नानमात्रेण सर्वेषां सर्वकामफलप्रदम् ॥
तत्र कामसरो राजन् गोपिकारमणं सरः ।
तत्र तीर्थसहस्राणि सरांसि च पृथक् पृथक् ॥ ४ ॥ इति ।
बहुलावनस्य ।
आदिवाराहे,
पञ्चमं बाहुलवनं वनानामुत्तमं वनम् ।
तत्र गत्वा नरो देवि अग्निस्थानं स गच्छति ॥
स्कान्दे मथुराखण्डे,
बहुला श्रीहरेः पत्नी तत्र तिष्ठति सर्वदा ।
तस्मिन् पद्मवने राजन् बहुपुण्यफलानि च ॥
तत्रैव रमते विष्णुर्लक्ष्म्या सार्धं सदैव हि ।
तत्र सङ्कर्षणं कुण्डं तत्र मानसरो नृप ॥
यस्तत्र कुरुते स्नानं मधुमासे नृपोत्तम ।
स पश्यति हरिं तत्र लक्ष्म्या सह विशांपते ॥ ५ ॥ इति ।

भद्रवनस्य ।

अस्ति भद्रवनं नाम षष्ठं वनमनुत्तमम् ।

तत्र गत्वा तु वसुधे मद्भक्तो मत्परायणः ॥

तद्वनस्य प्रभावेन नागलोकं स गच्छति ॥ ६ ॥ इति ।

खादिरवनस्य ।

आदिवाराहे,

सप्तमं तु वनं भूमे खादिरं लोकविश्रुतम् ।

तत्र गत्वा नरो भद्रे नागलोकं स गच्छति ॥ ७ ॥

महावनस्य ।

महावनं चाष्टमं तु सदैव तु मम प्रियम् ।

तस्मिन् गत्वा तु मनुज इन्द्रलोके महीयते ॥

यमलार्जुनतीर्थं च कुण्डं तत्र च वर्त्तते ।

पर्य्यस्तं यत्र शकटं भिन्नभाण्डकुटीरम् ॥

तत्र स्नानोपवासेन अनन्तं फलमाप्नुयात् ।

तत्र गोपीश्वरो नाम महापातकनाशनः ॥

सप्तसामुद्रिकं नाम कूपं तु विमलोदकम् ।

देवस्याग्रे तु वसुधे गोपीशस्य महात्मनः ॥

पितरश्चाभिनन्दन्ति पानीयं पिण्डमेव च ।

सोमवारे त्वमावास्यां पिण्डदानं करोति यः ॥

गयायां पिण्डदानं च कृतं नास्त्यत्र संशयः ॥ ८ ॥

लोहजङ्घवनस्य ।

लोहजङ्घवनं नाम लोहजङ्घेन रक्षितम् ।

नवमं तु वनं देवि सर्वपातकनाशनम् ॥ ९ ॥

बिल्ववनस्य ।

वनं बिल्ववनं नाम दशमं देवपूजितम् ।

तत्र गत्वा तु मनुजो ब्रह्मलोके महीयते ॥ १० ॥
भाण्डीरवनस्य ।
एकादशं तु भाण्डीरं योगिनां प्रियमुत्तमम् ।
तस्य दर्शनमात्रेण नरो गर्भं न गच्छति ॥
भाण्डीरं समनुप्राप्य वनानां वनमुत्तमम् ॥
वासुदेवं ततो दृष्ट्वा पुनर्जन्म न विद्यते ।
तस्मिन् भाण्डीरके स्नातो नियतो नियताशनः ॥
सर्वपापविनिर्मुक्त इन्द्रलोकं स गच्छति ॥ ११ ॥
वृन्दावनस्य ।
वृन्दावनं द्वादशमं वृन्दया परिरक्षितम् ।
मम चैव प्रियं भूमे सर्वपातकनाशनम् ॥
तथा,
तत्राहं क्रीडयिष्यामि गोपीगोपालकैः सह ।
सुरम्यं सुप्रतीतं च देवदानवदुर्लभम् ॥
स्कान्दे मथुराखण्डे,
ततो वृन्दावनं रम्यं वृन्दादेवीसमाश्रितम् ।
हरिणाधिष्ठितं तच्च ब्रह्मरुद्रादिसेवितम् ॥
वृन्दावनं सुगहनं विशालं विस्तृतं बहु ।
मुनीनामाश्रमैः पूर्णं वन्यवृन्दसमन्वितम् ॥
यथा लक्ष्मीः प्रियतमा यथा भक्तिपरा नराः ।
गोविन्दस्य प्रियतमं तथा वृन्दावनं भुवि ॥
वत्सैर्वत्सतरीभिश्च साकं क्रीडति माधवः ।
वृन्दावनान्तरगतः सरामो बालकैर्वृतः ॥
अहो वृन्दावनं रम्यं यत्र गोवर्धनो गिरिः ।
यत्र तीर्थान्यनेकानि विष्णुदेवकृतानि च ॥

श्रीरामकेशवौ यत्र क्रीडतो बालकैः सह । इति ।

अथ माथुरमहातीर्थदेवसङ्ग्रहश्लोकाः ।

विश्रान्तिरासिकुण्डं च वैकुण्ठो ध्रुव एव च ।
कृष्णगङ्गा चक्रतीर्थं सरस्वत्याश्च सङ्गमः ॥
चतुःसामुद्रिकः कूपो गोकर्णाख्यः शिवस्तथा ।
वनानि द्वादश तथा महातीर्थानि माथुरे ॥
नारायणान्यपर्य्यायः केशवो मध्यमांस्थनः ।
स्वयम्भूः पद्मनाभश्च दीर्घविष्णुर्गतश्रमः ।
गोविन्दो हरिवाराहाविति माथुरदेवताः ॥ इति ।

अथ प्रदक्षिणफलम् ।

तत्रैव,

कुमुदस्य तु मासस्य मथुरायां वसुन्धरे ।
नवम्यां प्रदक्षिणं कृत्वा सर्वपापैः प्रमुच्यते ॥
ब्रह्मघ्नश्च सुरापश्च गोघ्नो भग्नव्रतस्तथा ।
मथुराप्रदक्षिणां कृत्वा पूतो भवति मानवः ॥
अष्टम्यां प्राप्य मथुरां दन्तधावनपूर्वकम् ।
ब्रह्मचर्य्येण तां रात्रिं कृतसङ्कल्पमानसः ॥
धौतवस्त्रस्तु सुस्नातो मौनव्रतपरायणः ।
प्रदक्षिणं प्रकुर्वीत सर्वपातकशुद्धये ॥
प्रदक्षिणं वर्त्तमानोऽप्यन्योन्यं स्पृशते नरः ।
सर्वकामानवाप्नोति नात्र कार्य्या विचारणा ॥

तथा,

सप्तद्वीपे तु यत्तीर्थभ्रमणाच्च फलं लभेत् ।
प्राप्यते चाधिकं तस्मान्मथुराभ्रमणीयके ॥
मथुरां समनुप्राप्य यस्तु कुर्य्यात्प्रदक्षिणाम् ।

प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥
तस्मात्सर्वप्रयत्नेन सर्वान् कामानभीप्सुभिः ।
कर्त्तव्या मथुरां प्राप्य नरैः सम्यक् प्रदक्षिणा ॥
अथ प्रदक्षिणाविधिः ।
अष्टमीं मथुरां प्राप्य कार्त्तिकस्य सितां नरः ।
स्नात्वा विश्रान्तितीर्थे तु पितृदेवार्चने रतः ॥
विश्रान्तिदर्शनं कृत्वा दीर्घविष्णुं च केशवम् ।
दिनान्ते नियमः कार्य्यस्तीर्थे विश्रान्तिसंज्ञके ॥
मथुरां च परिक्रामन् दृष्ट्वा देवं स्वयम्भुवम् ।
स्थितं चाश्वत्थरूपेण केशवं क्लेशनाशनम् ॥
प्रदक्षिणायाः सम्यग्वै फलमाप्नोति मानवः ।
उपवासरतः सम्यगल्पमेध्याशनोऽथ वा ॥
दन्तकाष्ठं तु सायाह्ने कृत्वा शुद्ध्यर्थमात्मनः ।
ब्रह्मचर्य्येण तां रात्रिं कृत्वा सङ्कल्पमानसम् ॥
धौतवस्त्रधरः स्नातो मौनव्रतपरायणः ।
तिलाक्षतकुशान् गृह्य पितृदेवार्थमुद्यतः ॥
दीपहस्तोऽर्चनरतः श्रान्तो विश्रान्तिजागरे ।
यथानुक्रमणं तच्च ध्रुवाद्यैर्ऋषिभिः कृतम् ॥
एवं परम्परायातं क्रमणीयं नरोत्तमैः ।
प्रदक्षिणं वर्त्तमानो नरो भक्तिसमन्वितः ॥
सर्वान् कामानवाप्नोति हयमेधफलं लभेत् ।
एवं जागरणं कृत्वा नवम्यां नियतः शुचिः ॥
ब्राह्मे मुहूर्त्ते सम्प्राप्ते ततो यात्रामुपक्रमेत् ।
तथा आरभ्यते यात्रा यावन्नोदयते रविः ॥
प्रातःस्नानं तथा कुर्य्यात्तीर्थे दक्षिणकोटिके ।

प्रक्षाल्य पादावाचम्य हनूमन्तं प्रसादयेत् ॥
सर्वमङ्गलमाङ्गल्यं कुमारं ब्रह्मचारिणम् ।
विज्ञाप्य सिद्धिकर्तारं यात्रासिद्धिप्रदायकम् ॥
यस्य संस्मरणादेव सर्वे नश्यन्त्युपद्रवाः ।
यथा रामस्य यात्रायां सिद्धिस्त्वयि प्रतिष्ठिता ॥
तथा परिभ्रमणेऽस्य भवान् सिद्धिप्रदो भवेत् ।
इति विज्ञाप्य विधिवद्धनूमन्तं गणेश्वरम् ॥
दीपपुष्पोपहारैस्तु पूजयित्वा प्रसादयेत् ।
तथैव पद्मनाभं तु दीर्घविष्णुं महाप्रभम् ॥
विज्ञाप्य सिद्धिकर्त्तारौ देव्यश्च तदनन्तरम् ।
दृष्ट्वा दीप्तिमतीं देवीं तथैव ह्यपराजिताम् ॥
आयुधागारसंस्थां च नृणां सर्वभयापहाम् ।
कंसवासिनिकां तद्वद्दुर्गसेनीं च चर्चिकाम् ॥
बघूर्णीं च तथा देवीं दानवक्षयकारिणीम् ।
जयदां देवतानां च मातरो देवपूजिताः ॥
गृहदेव्यो वास्तुकांश्च दृष्ट्वानुज्ञाप्य निर्गमेत् ।
मौनव्रतधरो गच्छेद्यावद्दक्षिणकोटिकम् ॥
प्राप्य स्नात्वा पितॄंस्तर्प्य दृष्ट्वा देवं प्रणम्य च ।
नत्वा गच्छेत् उक्षवासां देवीं कृष्णसुपूजिताम् ॥
बालक्रीडनरूपाणि कृतानि सह गोपकैः ।
यानि तीर्थानि तान्येव स्थापितानि महर्षिभिः ॥
ख्यातिं गतानि दिव्यानि सर्वपापहराणि च ।
वत्सपुत्रं ततो गच्छेत् सर्वपापहरं शुभम् ॥
अर्कस्थलं वीरस्थलं कुशस्थलमनन्तरम् ।
पुष्पस्थलं महत्स्थलं महापातकनाशनम् ॥

एवं पञ्चस्थलाः ख्याता महापातकनाशनाः ।
येषु दृष्टेषु मनुजो ब्रह्मणा सह मोदते ॥
शिवं सिद्धमुखं दृष्ट्वा स्थलानां फलमाप्नुयात् ।
हयमुक्तिं ततो गच्छेत् सिन्दूरं समहायकम् ॥
श्रूयते चात्र ऋषिभिर्गीता गाथा पुरातनी ।
अश्वारूढेन तेनैव यात्रेयं समनुष्ठिता ॥
अश्वो मुक्तिं गतस्तत्र सहायसहितः सुखम् ।
राजपुत्रः स्थितस्तत्र यानयात्रा न मुक्तिदा ॥
तस्माद्यानैस्तु यात्रा च न कर्त्तव्या फलेच्छया ।
तस्मिन् तीर्थे तु तं दृष्ट्वा स्पृष्ट्वा पापैः प्रमुच्यते ॥
लवणस्य गुहां तत्र दृष्ट्वा भक्तिसमन्वितः ।
शत्रुघ्नमीश्वरं चैव सर्वपापैः प्रमुच्यते ॥
कुण्डं शिवस्य विख्यातं तत्र स्नात्वा महाफलम् ।
मल्लिकादर्शनं कृत्वा कृष्णस्य जयदां शुभाम् ॥
ततः कदम्बखण्डस्य गमनात् सिद्धिमाप्नुयात् ।
अपरं तत्र गुह्याख्यं तीर्थं तस्य समीपतः ॥
गमनात्तस्य तीर्थस्य महापातकनाशम् ।
उच्छीलां वरदां तत्र दृष्ट्वा गतिमवाप्नुयात् ॥
चर्चिका योगिनी तत्र योगिनीपरिवारिता ।
कृष्णस्य रक्षणार्थं हि स्थिता सा दक्षिणां दिशम् ॥
अपृशा च स्पृशा चैव मातरौ लोकपूजिते ।
बालानां दर्शनं द्वाभ्यां महारक्षां करिष्यति ॥
कर्षखानं ततो गत्वा कुण्डं पापहरं परम् ।
गत्वा स्नात्वा पितॄंस्तर्प्य सर्वपापैः प्रमुच्यते ॥
क्षेत्रपालं ततो गत्वा शिवं भूतेश्वरं हरम् ।

मथुराक्रमणं तस्य जायते सफलं तथा ॥
कृष्णक्रीडा सेतुबन्धं महापातकनाशनम् ।
वलभीं तत्र क्रीडार्थं कृत्वा देवो गदाधरः ॥
गोपकैः सहितस्तत्र क्षणमेकं दिने दिने ।
तत्रैव रमणार्थं हि नित्यकालं हि गच्छति ॥
बालिभिश्च हृदं तत्र जलक्रीडाकृतं शुभम् ।
यस्य संदर्शनादेव सर्वपापैः प्रमुच्यते ॥
अतः परं कुक्कुटेन कृष्णेन क्रीडनं कृतम् ।
यस्य दर्शनमात्रेण चण्डः सद्गतिमाप्नुयात् ॥
स्तम्भोच्छ्रयं सुशिखरं सौरभ्यैः ससुगन्धिभिः ।
भूषितं पूजितं तत्र कृष्णेनाक्लिष्टकर्मणा ॥
तस्य प्रदक्षिणं कृत्वा परिपूज्य प्रयत्नतः ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं व्रजेत्तु सः ॥
वसुदेवेन देवक्या गर्भसंरक्षणाय च ।
कृतमेकान्तशयनं महापातकनाशनम् ॥
ततो नारायणस्थानं प्रविशेन्मुक्तिहेतवे ।
परिक्रम्य ततो देवान् नारायणपुरोगमान् ॥
दृष्ट्वा ततोऽनुविज्ञाप्य गणसिद्धिविनायकम् ।
कुब्जिका वामना चैव ब्राह्मण्यौ कृष्णमानिते ॥
अनुज्ञाप्य ततः स्नानं द्रष्टुं शरीरगत्तं शिवम् ।
दृष्टमात्रेण तत्रैव यात्राफलमवाप्यते ॥
महाविद्येश्वरी देवी कृष्णरक्षार्थमुद्यता ।
नित्यं सन्निहिता तत्र सिद्धिदा पापनाशिनी ॥
कृष्णेन बलभद्रेण गोपैः कंसजिघांसुभिः ।
सङ्केतकं कृतं यत्र मन्त्रनिश्चयकारकम् ॥

तदा सङ्केतके सा च सिद्धा देवी प्रतिष्ठिता ।
सिद्धिप्रदा भोगदा च तेन सिद्धेश्वरी स्मृता ॥
सङ्केतकेश्वरीं चैव दृष्ट्वा सिद्धिमवाप्नुयात् ।
तत्र कुण्डं स्वच्छजलं महापातकनाशनम् ॥
ततो दृष्ट्वा महादेवं गोकर्णं नाम नामतः ।
यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥
सरस्वतीं नदीं दृष्ट्वा ततो भद्राणि पश्यति ।
विघ्नराजं ततो गच्छेद्गणेशं विघ्ननाशनम् ॥
सर्वसिद्धिप्रदं रम्यं दर्शनाच्च फलं लभेत् ।
गार्गं मार्गं च तत्रैव महापातकनाशनम् ॥
दृष्ट्वा स्पृष्ट्वा तथा ध्यात्वा सर्वान् कामान् समश्नुते ।
महादेवं मुखाकारं नाम्ना रुद्रमहालयम् ॥
क्षेत्रपतिं हरं दृष्ट्वा क्षेत्रवासफलं लभेत् ।
तस्मादुत्तरकोटिं च दृष्ट्वा देवं गणेश्वरम् ॥
द्यूतक्रीडा भगवता कृता गोपजनैः सह ।
पणात्महासरूपेण जिता गोप्यो धनानि च ॥
गोपैरानीय तत्रैव कृष्णाय च निवेदिता ।
गोपालकृष्णगमनं महापातकनाशनम् ॥
समस्तं बालचरितं भ्रमता च यथासुखम् ।
कृतं यत्र तथा रूपं तद्रूपं च तथा तथा ॥
ऋषिभिः सेवितं ध्यानं विष्णोर्माहात्म्यमुत्तमम् ।
ततो गच्छेन्महावीर्यं विमलं यमुनाम्भसि ॥
स्नात्वा पीत्वा पितॄंस्तर्प्य नाम्ना रुद्रमहालयम् ।
गार्गीतीर्थे विघ्नराजे चक्रतीर्थे तथाक्रमे ॥
भद्रेश्वरे महातीर्थे सोमतीर्थे तथैव च ।

स्नात्वा सोमेश्वरं देवं दृष्ट्वा यात्राफलं लभेत् ॥
सरस्वत्याः सङ्गमे स्नात्वा सन्तर्प्य पितृदेवताः ।
घण्टाभरणके तद्वत् तथा गरुडकेशवे ॥
धारापतनके तद्वद्वैकुण्ठे खण्डवेलके ।
संयमने च महातीर्थे असिकुण्डे तथैव च ॥
गोपानां तीर्थके चैव तथैवामुक्तिकेश्वरे ।
वैलक्ष्यगरुडे चैव महापातकनाशने ॥
एते तीर्था महापुण्या यथा विश्रान्तिसंज्ञकः ।
एषु तीर्थेषु क्रमितो भक्तियुक्तो जितेन्द्रियः ॥
देवान् पितॄन् समभ्यर्च्य ततो देवं प्रसादयेत् ।
अविमुक्तेश देवेश सप्तर्षिभिरनुष्ठिता ॥
मथुराक्रमणीयं मे सफलास्तु तवाज्ञया ।
इत्येवं देवदेवेशं विज्ञाप्य क्षेत्रपं शिवम् ॥
विश्रान्तिसंज्ञके स्नानं कृत्वा च पितृतर्पणम् ।
गतश्रमः परिक्रम्य स्तुत्वा दृष्ट्वा प्रणम्य च ॥
सुमङ्गलां ततो गच्छेद्यात्रासिद्धिं प्रसादयेत् ।
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥
यात्रेयं त्वत्प्रसादेन सफला मे भवत्विति ।
कर्कोटकं तथा नागं महादुष्टनिवारणम् ॥
दृष्ट्वा गच्छेत्ततो देवीं या कृष्णेन विनिर्मिता ।
कंसभेदं प्रथमतः श्रुतं यत्र समन्त्रितम् ॥
सुखवासा च वरदा कृष्णस्याक्लिष्टकर्मणः ।
खरवासा च तत्रैव स्थापिता शकुनाय वै ॥
सानुकूलपरा यत्र प्रवेशे दक्षिणस्वनः ।
ध्याता शुभाय कृष्णेन ध्यात्वा देवी च चण्डिका ॥

स्थापिता सिद्धिदा तत्र नाम्ना चार्त्तिहरा ततः ।
दृष्ट्वा सर्वार्त्तिहरणं यस्या देव्याः सुखी नरः ॥
वज्रानन्नं ततो ध्यात्वा कृष्णो मल्लजिघांसया ।
निहत्य मल्लं पश्चाद्धि वज्राननमकल्पयत् ॥
वाञ्छितार्थफलं चेदं कृष्णादशान्मनोरथान् ।
यस्यै यस्यै देवतायै तस्यै तस्यै ददौ स्वयम् ॥
उपयाचितं तु माङ्गल्यं सर्वपापहरं शुभम् ।
कृष्णस्य बालचरितं महापातकनाशनम् ॥
सूर्य्यं संवरदं देवं माथुराणां कुलेश्वरम् ।
दृष्ट्वा तत्रैव दानं च दत्त्वा यात्रां समापयेत् ॥
एवं प्रदक्षिणां कृत्वा नवम्यां शुक्लकौमुदीम् ।
सर्वान् कुलान् समादाय विष्णुलोके महीयते ॥
क्रमतः पादविन्यासा यावन्तः सर्वतो दिशः ।
तावन्तः कुलसम्भूताः सूर्य्ये तिष्ठन्ति शाश्वते ॥
ब्रह्मघ्नश्च सुरापश्च चौरा भग्नव्रताश्च ये ।
अगम्यागमने शीघ्राः क्षेत्रदारापहारकाः ॥
मथुराक्रमणं कृत्वा विपाप्मानो भवन्ति ते ।
अन्यदेशागतो दूरात् परिक्रामति यो नरः ॥
तस्य सन्दर्शनादन्ये पूताः स्युर्विगतामलाः ॥

विगतम् आमलं सम्यङ् मलं येषां ते ।

श्रुतं यैश्च विदूरस्थैः कृतयात्रं नवं नरम् ।
सर्वपापविनिर्मुक्तास्ते यान्ति परमां गतिम् ॥ इति ।

अथ चित्रकूटमाहात्म्यम्,

भारते पुलस्त्यतीर्थयात्रायाम्,

ततो गिरिवरश्रेष्ठ चित्रकूटे विशांपते ।

मन्दाकिनीं समासाद्य नदीं पापप्रमोचनीम् ॥
तत्राभिषेकं कुर्व्वाणः पितृदेवार्च्चने रतः ।
अश्वमेधमवाप्नोति गतिं च परमां व्रजेत् ॥ इति ।

## अथ कालञ्जरमाहात्म्यम् ।

भारते तत्रैव,

ततः कालञ्जरं गत्वा पर्व्वतं लोकविश्रुतम् ।
तत्र देवह्रदे स्नात्वा गोसहस्रफलं लभेत् ॥
आत्मानं साधयेत् तत्र गिरौ कालञ्जरे नृप ।
स्वर्गलोके महीयेत नरो नास्त्यत्र संशयः ॥ इति ।

## अथ शृङ्गवेरमाहात्म्यम् ।

ततो गच्छेत्कुरुश्रेष्ठ शृङ्गवेरपुरं प्रति ।
यत्र तीर्णो महाराज रामो दाशरथिः पुरा ॥
गङ्गायां तु नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः ।
विधूतपाप्मा भवति वाजपेयं च विन्दति ॥ इति ।

## अथ उज्जयिनीमाहात्म्यम् ।

तत्र ब्रह्मपुराणे,

दक्षिणस्यां दिशि महत् क्षेत्रमुज्जयिनीति च ।
तत्र लिङ्गं महाकालं दर्शनात् सर्व्वपापजित् ॥
तपस्वी परमां सिद्धिं यत्र प्राप्नोति कामिकीम् ।
अवन्त्यां तु यदा स्कन्दो मया पूर्व्वं तु भद्रितः ॥
चूडाकर्म्मणि वृत्ते तु कुमारस्य तदा शुभे ।
आगत्य मातरो भोज्यमपूर्व्वं तु ययाचिरे ॥
देवलोकाद्देवगणा मातॄणां भोक्तुमागताः ।
एवं युक्तस्तदा ताभिर्द्देवदेवो महेश्वरः ॥

धर्मार्थं तास्तदा प्रोक्ताः पार्वत्या देवसान्निधौ ।
मया वै साधितं चार्थं प्रकारैर्बहुभिः कृतम् ॥
तत्सर्वं च व्ययीभूतं न चान्यदिह दृश्यते ।
आगतासु भवन्तीषु किं देयं वै मया भवेत् ॥
अपूर्वं भवतीनां च मया देयं विशेषतः ।
आस्वादितं न चान्यैस्तु भक्षार्थे च ददाम्यहम् ॥
अधोभागे च यौ नाभेर्वर्त्तुलौ फलसन्निभौ ।
भक्षयध्वं हि सहिता लम्बौ मे वृषणावुभौ ॥
अनेन चापि भोज्येन परा तृप्तिर्भविष्यति ।
महाप्रसादं ताः कृत्वा देव्यः सर्वाश्च वै शुभे ।
प्रणिपत्य गताः सर्वा इदं वचनमब्रुवन् ॥
करिष्यन्ति शुभाचारा विना हास्येन येन तत् ।
तेषां नूनं पशुः पुत्रा दाराश्चैव गृहादिकम् ॥
भविष्यति मया दत्तं यच्चान्यन्मनसेप्सितम् ।
हास्येन दीर्घरोगित्वं दारिद्र्यं चापि विन्दते ॥
तस्मान्न निन्दा हास्यं च कर्त्तव्यं च विजानता ।
पौलाख्या मातरः ख्यातास्ततो लोके भविष्यथ ॥
उपयाचितं जना ये तु कारयिष्यन्ति कौमुदे ।
चणकाः पूरिकाश्चैव वृषणैः सह पूरिकाः ॥
बन्धुभिः स्वजनैश्चैव तेषां वंशो न छिद्यते ।
अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ॥
रूपवान् शुभगो भोगी सर्वशास्त्रविशारदः ।
हंसयुक्तेन यानेन ब्रह्मलोके महीयते ॥

मत्स्यपुराणे,

प्रयागे वा भवेन्मोक्षो महाकालेऽथ वा प्रिये ।

अमरकण्टके तद्वत्तथा कायावरोहणे ॥
कालञ्जरे महाकाले इह वा मत्परिग्रहात् ।
यद्वन्मुखस्थिते नेत्रे तद्वत्तीर्थे इमे भुवः ॥
महाकालोऽविमुक्तश्च गङ्गया सिप्रयान्वितौ ॥ इति ।

इति उज्जयिनीमाहात्म्यम् ।

अथ द्वारकामाहात्म्यम् ।

वाराहपुराणे,

वराह उवाच ।

अस्ति द्वारावती नाम निर्मिता विश्वकर्मणा ।
सुधर्मा नाम च सभा वायुरानीतवान्मयात् ॥
पञ्चयोजनविस्तीर्णा दशयोजनमायता ।
वसाम्यत्र वरारोहे पञ्चपञ्चशतं समाः ॥
भारावतरणं कृत्वा देवानां च महत्प्रियम् ।
पुनरेष्यामि सुश्रोणि मूर्त्तिमात्मनि शाश्वतीम् ॥
तत्र स्थानानि मे भूमि कथ्यमानि संशृणु ।
अस्ति पञ्चशरो नाम तस्मिन् गुह्यं परं मम ॥
समुद्रतीरमुत्सृज्य मम भक्तसुखावहम् ।
तत्र स्नानं तु कुर्वीत षष्ठनक्तोषितो नरः ॥
मोदते नाकपृष्ठे तु अप्सरोगणसङ्कुले ।
अथ वा मुञ्चति प्राणान् मामेव प्रतिपद्यते ॥
प्लक्षो वै तत्र सुश्रोणि शतशाखो महाद्रुमः ।
चतुर्विंशतिद्वादश्यां स भवेत्पुण्यभागसौ ॥
फलं न लभते कश्चिन्मुक्त्वा भागवतं शुचिम् ।
लभन्ते ये फलं तत्र गुह्ये पञ्चशरस्य च ॥

ते लभन्ते परां सिद्धिमेवमेतन्न संशयः ।
प्रभासमिति विख्यातं तस्मिन् गुह्यं परं मम ॥
तत्राभिषेकं कुर्वीत पञ्चरात्रोषितो नरः ।
मोदते सप्तद्वीपेषु गुह्यानि च स गच्छति ॥
अथ वा मुञ्चति प्राणान् वभाषे गतकिल्बिषः ।
सर्वलोकान् परित्यज्य मल्लोकं प्राप्यते नरः ॥
पञ्चकुण्डमिति ख्यातं तस्मिन् गुह्यं परं मम ।
तत्राभिषेकं कुर्वीत पञ्चरात्रोषितो नरः ॥
चतुर्विंशतिद्वादश्यां मध्याह्ने च दिवाकरे ।
रौप्यसौवर्णकं पद्मं दृश्यते नात्र संशयः ॥
तथा,
कादम्बकमिति ख्यातं कुण्डं क्षेत्रे परं मम ।
अत्र पीत्वा महाभागे दृष्ट्योर्युगपत्क्षयम् ॥
तत्राभिषेकं कुर्वीत चतुष्कालसमन्वितः ।
तथा,
सङ्गमं नगरं नाम अस्ति क्षेत्रे परं मम ।
मम चोत्तरपार्श्वे तु देवानामपि दुर्लभम् ॥
अस्ति नैवतकं नाम तस्मिन् क्षेत्रे परं मम ।
सर्वलोकेषु विख्यातं चन्द्रमाः क्रीडते यतः ॥
बहूदकाशिलापङ्क्ता गुहाश्चात्र दिशो दश ।
वापी च शोभना चैव देवानामपि दुर्लभा ॥
तत्राभिषेकं कुर्वीत पञ्चकालोषितो नरः ।
गच्छते सोमलोकाय कृतकृत्यो भवेन्नरः ॥
अथात्र मुञ्चति प्राणान् मम लोकं प्रपद्यते ।
विष्णुं चङ्क्रमणं नाम तस्मिन् क्षेत्रे परं मम ॥

विद्धोऽस्मि तत्र व्याधेन प्राप्तो मूर्तिं स्वकां पुनः ।
तत्र कुण्डं महाभागे मणिपूरगिरौ स्थितम् ॥
तत्राभिषेकं कुर्वीत नित्यकालमतन्द्रितः ।

तथा,

तस्मिन् क्षेत्रे महाभागे स्थितोऽहं चोत्तरामुखः ।
सर्वभागवतप्रीत्यै समुद्रतटमाश्रितः ॥
अहं रामेण सहितः सा च एका स्वमा शुभा ।
त्रयस्तत्रैव तिष्ठामो द्वारकायां यशस्विनि ॥

स्कन्दपुराणे,

गोमतीतीरपूतानां कृष्णचक्रावलोकिनाम् ।
दर्शनात् पातकं तेषां याति वर्षशताधिकम् ॥
धन्यास्ते मानुषे लोके गोमत्युदधिवारिणा ।
तर्पयन्ति पितॄन् देवान् गत्वा द्वारवतीं कलौ ॥

तथा,

यत्र चक्राङ्कितशिला गोमत्युदधिनिःसृता ।
यच्छन्ति पूजिता मोक्षं तां पुरीं को न सेवते ।
यत्र चक्राङ्किता मृत्स्ना तिष्ठते निर्मला नृप ॥
कलौ पापविनाशार्थं तां पुरीं को न सेवते ।

तथा,

यतीनां भोजनं यस्तु यच्छते कृष्णसन्निधौ ।
सिक्थे सिक्थे भवेत्तृप्तिः पितॄणां युगसङ्ख्यया ॥
कौपीनाच्छादनं छत्रं पादुके च कमण्डलुम् ।
दत्त्वा सन्न्यासिनां याति सप्तकल्पानि तत्फलम् ॥
धन्यास्ते मानवाः पुत्र वसन्ति श्वपचादयः ।

द्वारकायां गतिं यान्ति वसन्तस्तत्र योगिनः ॥

तथा,

मा काशीं मा कुरुक्षेत्रं प्रभासं मा सपुष्करम् ।
द्वारकां गच्छ राजर्षे पश्य कृष्णमुखं शुभम् ॥
अश्वमेधसहस्रं तु राजसूयशतं कलौ ।
पदे पदे च लभते द्वारकां गच्छतो नरः ॥

गच्छन्नित्यर्थः ।

तथा,

कृष्णालयं तु यो गत्वा गोमत्यां पिण्डपातनम् ।
करोति शक्त्या दानं च मुक्तास्तस्य पितामहाः ॥
प्रेतत्वं च पिशाचत्वं न भवेत्तस्य देहिनः ।
जन्मजन्मानि राजेन्द्र ये गता द्वारकां पुरीम् ॥
अनशनेन यत्पुण्यं प्रयागे त्यजतस्तनुम् ।
द्वादश्यां निमिषार्धेन तत्फलं कृष्णसन्निधौ ॥
सूर्यग्रहे गवां कोटिं दत्त्वा यत्फलमाप्नुयात् ।
तत्फलं कलिकाले तु द्वारवत्यां दिने दिने ॥
कोटिभारसुवर्णस्य ग्रहणे चन्द्रसूर्ययोः ।
दत्त्वा यत्फलमाप्नोति तत्फलं कृष्णदर्शने ॥
दोलासंस्थं च ये कृष्णं पश्यन्ति मधुमाधवे ।
तेषां पुत्राश्च पौत्राश्च मातामहपितामहाः ॥
श्वसुरादिसभृत्याश्च पशवश्च नरोत्तम ।
क्रीडन्ति विष्णुना सार्द्धं यावदाभूतसम्प्लवम् ॥

प्रल्हादसंहितायाम्,

अहो क्षेत्रस्य माहात्म्यं समन्ताद्दशयोजनम् ।

दिविष्ठा यत्र पश्यन्ति सर्वानेव चतुर्भुजान् ॥
अहो क्षेत्रस्य माहात्म्यं दृष्ट्वा नित्यं चतुर्भुजान् ।
द्वारकावासिनः सर्वान् नमस्यन्ति दिवौकसः ॥ इति ।

अथात्रैकादशीकृतोपवासस्य जागरफलम् ।

तत्रैव,

जागरं ये च कुर्वन्ति गायन्ति हरिवासरे ।
अग्निष्टोमफलं तेषां निमिषार्द्धेन षण्मुख ॥ इति ।

अथ गोपीचन्दनमाहात्म्यम् ।

तत्रैव,

गोपीचन्दनमुद्रां तु कृत्वा भ्रमति भूतले ।
सोऽपि देशो भवेत् पूतः किं पुनर्यत्र संस्थितम् ॥
द्वारकायां समुद्भूतां तुलसीं कृष्णसेविताम् ।
नित्यं बिभर्त्ति शिरसा स भवेत्त्रिदशाधिपः ।
गृहे यस्य सदा तिष्ठेद्गोपीचन्दनमृत्तिका ॥
द्वारका तिष्ठते तत्र कृष्णेन सहिता कलौ ।
कृतघ्नो वाथ गोघ्नोऽपि हैतुकः सर्वपापकृत् ॥
गोपीचन्दनसम्पर्कात्पूतो भवति तत्क्षणात् ।

अथ तत्रैव गोमतीमाहात्म्यम् ।

ये च रौरवसंस्थाने ये च कीटत्वमागताः ।
गोमतीतीरदानेन मुक्तिं यान्ति न संशयः ॥
विनाप्यक्षतदर्भैर्वा विना भावनया तथा ।
वारिमात्रेण गोमत्यां गयाश्राद्धफलं लभेत् ॥
ततश्च विप्रानाहूय वेदज्ञान् तीर्थसंश्रयान् ।
विश्वेदेवान् हि सम्पूज्य पितॄणां श्राद्धमाचरेत् ॥

श्रद्धया परया युक्तः श्राद्धं कुर्याद्विधानतः ।
दक्षिणां तु ततो दद्यात् गामेकां तु पयस्विनीम् ॥
सुवर्णशृङ्गसहितां रजतैः खुरभूषिताम् ।
भूषितखुरामित्यर्थः ।
रत्नपुच्छां वस्त्रयुतां ताम्रपृष्ठां सवत्सकाम् ॥
दद्याद्विप्रं समभ्यर्च्य वस्त्रालङ्कारभूषणैः ।
सप्तधान्ययुतां दद्याद्विष्णुर्मे प्रीयतामिति ॥
आसीमान्तं विसृज्यैतान् ब्राह्मणान् नियतान् शुचिः ।
दीनान्धकृपणानां च दानं देयं तु शक्तितः ॥
गोमती गोमयस्नानं गोदानं गोपीचन्दनम् ।
दर्शनं गोपीनाथस्य गकाराः पञ्च दुर्लभाः ॥
तस्मान्नरेश कर्त्तव्यं गोदानं गोमतीतटे ।
एवंकृते द्विजश्रेष्ठाः कृतकृत्यो भवेन्नरः ॥
ये गता नरके घोरे प्रेतत्वं ये गतास्तथा ।
पूर्वकर्मविपाकेन स्थावरत्वं गताश्च ये ॥
पितृपक्षे च ये केचित् मातृपक्षे तथैव च ।
ते सर्वे मुक्तिमायान्ति गोमतीदर्शनात्कलौ ॥
कृतं श्राद्धं नरैर्यैस्तु गोमत्यां द्विजसत्तमाः ।
हयमेधस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥ इति ।

अथ चक्रतीर्थमाहात्म्यम् ।

तत्रैव,

तत्तीर्थं सर्वपापघ्नं चक्राख्यं परमं हरेः ।
यस्य प्रसिद्धिः परमा त्रैलोक्ये सचराचरे ॥
प्रयागादधिकं यच्च मुक्तिदं ह्यस्ति पावनम् ।
सुरैरपि हि पूज्यन्ते यत्राङ्गानि मनीषिणाम् ॥

अङ्कितानां हि चक्रेण षण्मासैर्नात्र संशयः ।
यं दृष्ट्वा मुच्यते पापात् प्रसङ्गेनापि मानवः ॥
यत्तीर्थं सर्वतीर्थानां प्रवरं पावनं तथा ।
तत्र गत्वा द्विजश्रेष्ठाः प्रक्षाल्य चरणौ मृदा ॥
करौ चाचम्य च ततः प्रणमेद्दण्डवत्ततः ।
प्रणिपत्य गृहीत्वार्घं पञ्चरत्नसमन्वितम् ॥
सपुष्पाक्षतगन्धैश्च फलैहैमसचन्दनैः ।
सम्पन्नमर्घमादाय मन्त्रमेतमुदीरयेत् ॥
प्रत्यङ्मुखः सनियमः संमुखो वा महोदधौ ।
ओंनमो विश्वरूपाय विष्णुचक्राख्यविश्रुतः ॥
गृहाणार्घं मया दत्तं सर्वकामप्रदो भव ।
अग्निश्च तेजो मृडया च देहो रेतोऽथ विष्णोरमृतस्य नाभिः ।
एतद्ब्रुवन् पाण्डव सत्यवाक्यं ततोऽवगाहेत पत्नि नदीनाम् ॥
मृदमालभ्य च जलं विप्रा विप्रकरच्युतम् ।
धारयित्वा च शिरसा स्नात्वा प्रणवपूर्वकम् ॥
तर्पयेत् पितृदेवांश्च मनुष्यांश्च यथाक्रमम् ।
तर्पयित्वा हरिद्रव्यं प्रोक्षयित्वाथ भक्तितः ॥
अश्वमेधसहस्रेण सम्यगिष्टेन यत्फलम् ।
स्नानमात्रेण तत्प्रोक्तं चक्रतीर्थे न संशयः ॥
प्रयागे यत्फलं प्रोक्तं माघे माधवपूजने ।
स्नानमात्रेण तत्प्रोक्तं चक्रतीर्थे द्विजोत्तमाः ॥
कारयेच्च ततः श्राद्धं पितॄणां श्रद्धयान्वितः ।
विश्वेदेवान् सुवर्णेन रजतेन तथा पितॄन् ॥
सुतृप्तान् भोजनेनैव वस्त्रालङ्कारभूषणैः ।
दीनान्धकृपणेभ्यश्च दानं देयं स्वशक्तितः ॥ इति ।

अथ गोमतीसङ्गममाहात्म्यम् ।

प्रल्हादसंहितायाम्,

यत्पुण्यं भवते नृणां गङ्गायाः सागरस्य च ।
सङ्गमेन तदाप्नोति गोमत्युदधिसङ्गमे ॥

तथा,

वाचा च मनसा चैव कर्मणा यदुपार्जितम् ।
पापं प्रणश्यते सर्वं गोमत्युदधिसङ्गमे ॥
नमस्कृत्य च तोयेशं गोमतीं च सरिद्वराम् ।
अर्घं दद्याद्विधानेन कृत्वा च करयोः कुशान् ॥
मन्त्रेणानेन विप्रेन्द्रा दद्यादर्घं विधानतः ।
ब्राह्मणैः सह सङ्गत्य सदा तत्तीर्थवासिभिः ॥
भक्त्या चार्घं प्रदास्यामि देवाय परमात्मने ।
त्राहि मां नरकाद्घोरादम्बुरूपिन्नमोऽस्तु ते ॥
तीर्थराज नमस्तुभ्यं रत्नाकर महार्णव ।
गोमत्या सहितो देव गृहाणार्घं नमोऽस्तु ते ॥
दत्त्वा चार्घं शिखां बद्ध्वा संस्मृत्य जलशायिनम् ।
कुर्यात्स्नानं प्राङ्मुखस्तु पुनः प्रत्यङ्मुखस्तथा ॥
स्नात्वा च परया भक्त्या पितॄन् सन्तर्पयेत्ततः ।
विश्वेदेवादि सम्पूज्य पितॄणां श्राद्धमाचरेत् ॥
यथोक्तां दक्षिणां दद्याद्विष्णुर्मे प्रीयतामिति ।
विशेषतः प्रदातव्यं सुवर्णं द्विजसत्तमाः ॥
दम्पत्योर्वाससी चैव कञ्चुकोष्णीषमेव च ।
लक्ष्म्या सह जगन्नाथो विष्णुर्मे प्रीयतामिति ॥
महादानानि सर्वाणि गोमत्युदधिसङ्गमे ।
देयानि वै द्विजश्रेष्ठा यदीच्छेत् श्रेय आत्मनः ॥

यस्तुलापुरुषं दद्याद्गोमत्युदधिसङ्गमे ।
सप्तद्वीपपतिर्भूत्वा विष्णुलोके महीयते ॥
आत्मानं तोलयेद्यस्तु सुवर्णे रजतेन वा ।
वस्त्रैर्वा कुङ्कुमैर्वापि फलैर्वापि तथा रसैः ॥
भुक्त्वा भोगान् स विपुलांस्तथा कामान् मनोगतान् ।
सम्पूज्यमानस्त्रिदशैर्याति कृष्णालयं नरः ॥ इति ।
एतद्वचनाद्रजतेनापि तुलापुरुषः सिद्ध्यति ।

अथ द्वारकायां श्रीभगवतः पूजा ।

तत्रैव,

कृताभिषेकस्तीर्थेषु यथावद्दत्तदक्षिणः ।
पूजयेच्च ततो देवं कृष्णाख्यं पुरुषं परम् ॥
तत्रादावावरणपूजा ।
जयन्तः प्रथमं पूज्यः पुलोमस्य सुतासुतः ।
स्थापितो देवराजेन सेवार्थं केशवस्य च ॥
वज्रनाभः सुनाभश्च वज्रबाहुर्महाहनुः ।
वज्रदंष्ट्रो वज्रधारी वज्रहा वज्रलोचनः ॥
श्वेतमूर्धा श्वेतमाली जीमूतानुचराश्च ये ।
एते शस्त्रोद्यतकरा रक्षन्त्येवमहर्निशम् ॥
पूर्वद्वारं सुसन्नद्धा जयन्तादेशकारिणः ।
पूर्वद्वारे च रक्षार्थं नरनाथो विनायकः ॥
तरुणार्कश्च वै सूर्यो देव्यो वै सप्त मातरः ।
ईश्वरश्चापि दिग्वासा नागराजश्च तक्षकः ॥
सेनानीः कार्त्तिकेयश्च राक्षसश्च महामल्लः ।
तत्र दीर्घनखो नाम दानवः सुप्रतिष्ठितः ॥
विश्वावसुश्च गन्धर्वो मेनका च वराप्सराः ।

सनत्कुमारसहितो वसिष्ठो भगवानृषिः ॥
एते पूज्याः पूर्वतस्तु न्यग्रोधश्च महाद्रुमः ।
पूर्वद्वारस्थितानेतानाग्नेयानथ मे शृणु ॥
ज्वालामुखोऽथ रक्ताक्षः श्मशाननिलयः कृशः ।
मांसादो रुधिराहारः कृष्णः कृष्णजटाधरः ॥
त्रासनो भञ्जनश्चैव आग्नेय्यां दिशि संस्थिताः ॥
दिशं रक्षन्ति मन्त्रज्ञा दक्षिणामथ मे शृणु ।
दण्डपाणिर्महानादः पाशहस्तोग्रलोचनः ॥
विवर्त्तः कोलमारश्च तथा दुन्दुभिनिःस्वनः ।
खरस्वरो घर्घरकस्तथा मौनप्रियः सदा ॥
मल्लिकाक्षश्च एतेषां प्रथमो द्वारपालकः ।
दक्षिणद्वाररक्षार्थं दुर्द्धर्षश्च विनायकः ॥
माहिष्याख्याश्च वै सूर्यो भूषणश्च तथेश्वरः ।
चण्डिका च तथा देवी ऊर्ध्वबाहुश्च राक्षसः ॥
पद्माक्षः क्षेत्रपालश्च नागश्चाश्वतरस्तथा ।
चित्राङ्गदश्च गन्धर्व उर्वशी च वराप्सराः ॥
गोरजो दानवश्चैव शालश्चापि महाद्रुमः ।
सनातन ऋषिश्रेष्ठस्त्वगस्त्यश्च महातपाः ॥
एते याम्यदिशि द्वारं रक्षन्ति सुसमाहिताः ।
शीतकर्त्तनको नग्नः कम्बली रोदनप्रियः ॥
हसनो नेत्रभङ्गश्च भूरिकारो विजृम्भकः ।
मुसली मूर्यकस्तेषां नेताऽऽदेष्टा तथा प्रभुः ॥
रक्षन्ति नैर्ऋतीमाशां पश्चिमां शृणुतापरान् ।
स्वस्तिकः शङ्कमूर्द्धा च नीलवासाः शुभाननः ॥
पाशहस्तः शूलहस्त एकपादेकलोचनः ।

स्थूलजङ्घः स्थूलशिराः सुमुखस्य वशे स्थिताः ॥
एते शस्त्रोद्यतकरा वारुण्यां दिशि पालकाः ।
पश्चिमायां दिशि तथा पुष्पदन्तो विनायकः ॥
उद्धरार्कश्च वै सूर्यः शिवः सत्राजितेश्वरः ।
उपतुर्नाम गन्धर्वो घृताची तु वराप्सराः ॥
महोदरश्च नागेन्द्रो राक्षसश्च घटोत्कचः ।
दैत्यः पञ्चजनो नाम ऋषिः कश्यप एव च ॥
देवी कपालिनीनाम अश्वत्थश्च महाद्रुमः ।
कपिलः क्षेत्रपालश्च प्रतीचीं पालयन् दिशम् ॥
नमस्कार्यास्तथा पूज्या वायव्यां शृणु चापरान् ।
जृम्भणो भैरवश्चैव कालिकोऽथ घटोदरः ॥
दण्डको मर्दनः पिङ्गो रुरुः सर्वभुजो घृणी ।
सुपार्श्वः प्रभुरेतेषां सन्नद्धः पालयन् दिशम् ॥
उदीच्यां दिशि विप्रेन्द्रा श्यामलश्च गणाधिपः ।
मनुस्थको निरूपश्च गोलकः स्वेदसंप्लुतः ॥
मुक्तकच्छः कम्बुकश्च जम्बुकोऽथ पराजितः ।
उन्मत्तः प्रभुरेतेषामुदीचीं पालयन् दिशम् ॥
मूलस्थानश्च वै सूर्य इन्द्रेशश्च महेश्वरः ।
देवी कण्डेश्वरीनाम क्षेत्रपालश्च खञ्जनः ॥
वासुकिर्नागराजश्च कूर्मपृष्ठश्च दानवः ।
सनकश्च ऋषिश्रेष्ठो गोलको राक्षसस्तथा ॥
नारदोनाम गन्धर्वो रम्भा चैव वराप्सराः ।
एते पूज्याः प्रयत्नेन प्लक्षो नाम महाद्रुमः ॥
यक्षेशासादितामाशामेते पूज्याः प्रयत्नतः ।
ऐशान्यां दिशि विप्रेन्द्राः किङ्किणीको महाबलः ॥

दुर्द्धरो भैरवरवो दुर्मुखो मेघनिस्वनः ।
करालो विकचो मूको बलिमुक्तो बलिप्रियः ॥
मांसप्रियमुखाश्चैव ऐशानीं पालयन्दिशम् ।
एतेषां क्षेत्रपालानां सेश्वराणां द्विजोत्तमाः ॥
नेता प्रभुश्च स स्वामी जयन्तः पालकः सदा ।
शङ्खः कम्बलकश्चैव नागश्चाश्वतरस्तथा ॥
कर्कोटकमुखा नागास्ते च सन्ति सहस्रशः ।
ते पूज्या गन्धपुष्पैश्च बलिभिर्धूपसञ्चयैः ॥
पायसेन च मांसेन अन्नाद्यैः सुरया तथा ।
ततो गच्छेद्द्विजश्रेष्ठा कृष्णं देवकिनन्दनम् ॥
सम्पूज्यः प्रथमं तत्र गणेशो रुक्मसंज्ञकः ।
तथा,
सम्पूज्य गणनाथं तं रुक्मिणं रुक्मभूषितम् ।
दुर्वाससं च कृष्णं च बलदेवं च भक्तितः ॥
यजन्त्येके महायज्ञैः सम्पूर्णवरदक्षिणैः ।
एकः पश्यति देवेशं कृष्णं तुल्यफलौ हि तौ ॥
गोभूहिरण्यदानानि ददत्येकः दिने दिने ।
एकः पश्यति देवेशं कृष्णं तुल्यफलौ हि तौ ॥
प्राणायामादिसंयुक्तो ध्यानज्ञानपरायणः ।
एकः पश्यति देवेशं कृष्णं तुल्यफलौ हि तौ ॥
जाह्नव्यादिषु तीर्थेषु स्नायादेकः समाहितः ।
एकः पश्यति देवेशं कृष्णं तुल्यफलौ हि तौ ॥ इत्यादि ।
तथा,
त्रिभिः पदक्रमैर्येन विक्रान्तं भुवनत्रयम् ।
त्रिविक्रमं तु तं दृष्ट्वा मुच्यते पातकत्रयात् ॥ इति ।

अथ सप्त कुण्डानि।

तत्रैव,

ततो गच्छेत विप्रेन्द्राः सप्त कुण्डान् शुचिः शुभान्।
सर्वपापप्रशमनान्‌वृद्धिवृद्धिविवर्द्धनान्॥ इति।

अथ कृकलासतीर्थम्।

प्रह्लादसंहितायाम्,

ततो गच्छेद्द्विजश्रेष्ठास्तीर्थं पापप्रणाशनम्।
कृकलासमिति ख्यातं नृगतीर्थमनुत्तमम्॥ इति।

अथ शङ्खोद्धारतीर्थम्।

तत्रैव,

ब्रह्महत्यासहस्राणि अगम्यागमनानि च।
मुच्यते पातकैर्घोरैः शङ्खोद्धारस्य दर्शनात्॥
तत्र स्नात्वा शुचिर्भूत्वा पितृश्राद्धं च कारयेत्।
कुलकोटिसहस्राणि जायते तृप्तिरुत्तमा॥

तथा,

शङ्खोद्धारे नरः स्नात्वा दानं दद्यात्तु निर्मलम्।
सुवर्णं च तिलान् गाश्च गृहमन्नं च मेदिनीम्॥
यो ददाति च गामेकां कोटिकोट्ययुतं फलम्।
विप्रेभ्यो गृहमेकं तु यो दद्याद्धनसंयुतम्॥
लभेत्कृष्णपुरं रम्यं यत्सुरैरपि दुर्लभम्।

तथा,

अन्नदानं ददेद्यस्तु शङ्खोद्धारे व्यवस्थितः।
तेन लब्धा स्वयंमुक्तिः प्रसादाद्रुक्मिणीपतेः॥
अन्नदानसमं दानं न भूतं न भविष्यति। इति।

## अथ पिण्डारकमाहात्म्यम् ।

ततः पिण्डारकं गच्छेत्तीर्थं पापप्रमोचनम् ।
यत्र देवश्चतुर्बाहुः स्वयमेव व्यवस्थितः ॥
विधिना पूजयित्वा तु तं दृष्ट्वा च जगत्पतिम् ।
मुच्यते विविधैः पापैर्मानवो नात्र संशयः ॥
कपालमोचनं नाम देव लोकेषु विश्रुतम् ।
तं दृष्ट्वा देवदेवेशं मुच्यते ब्रह्महत्यया ॥ इति ।

## अथ महीमाहात्म्यम् ।

स्कन्दपुराणे,

महीनाम नदी पुण्या सर्वतीर्थमयी शुभा ।
दिव्या मनोरमा सौम्या महापापप्रणाशिनी ॥
नदीरूपेण तत्रैव पृथ्वी सा नात्र संशयः ।
सा समुद्रेण सम्प्राप्ता पुण्यतोया महानदी ॥
सञ्जातस्तत्र देवर्षे महीसागरसङ्गमः ।
स्तम्भाख्यं तत्र तीर्थं तु त्रिषु लोकेषु विश्रुतम् ॥
तत्र ये मनुजाः स्नानं प्रकुर्वन्ति विपश्चितः ।
सर्वपापविनिर्मुक्ता नोपसर्पन्ति वै यमम् ॥ इति ।

## अथ तापीमाहात्म्यम् ।

स्कान्दे,

पृथिव्यां विद्यते वत्स नहि तापीसमा नदी ।
यस्याः संस्मरणेनापि पापिनां परमं पदम् ॥

तथा,

ये मृतास्तपतीतीरे ये नीरेण प्रवर्त्तिताः ।
ये जुषन्ति प्रसङ्गेन ते यान्ति परमां गतिम् ॥
महापापरता नाथ दुराचाराश्च निर्दयाः ।

वसन्ति भानुजातीरे स्वभावाद्यान्ति सद्गतिम् ।
शरभङ्गाश्रमं तीर्थं सानन्दनमतः परम् ॥
उच्चैःश्रवेश्वरं लिङ्गं स्थलेश्वरमतः परम् ।
प्रकाशकं ततस्तीर्थं सर्वपातकनाशनम् ॥
अर्जुनेश्वरलिङ्गं तु सर्वतीव्रमलापहम् ।
वामनस्थापितं लिङ्गं वामनेश्वरमद्भुतम् ॥
धारेश्वरं लिङ्गवरं सर्वकामफलप्रदम् ।
ततोऽम्बिकेश्वरं तीर्थं बहुमोहमलापहम् ॥
महर्षेश्वरलिङ्गस्य ज्येष्ठे तु महिमा महान् ।
आमर्दकेश्वरं तीर्थमाषाढेऽतिफलप्रदम् ॥
दिव्यं नाम सरस्तीर्थं मकरार्के महाफलम् ।
यत्र रामेश्वरं लिङ्गं सेना यत्र सरिद्वरा ॥
दर्शनस्नानमात्रेण तयोः पापात्प्रमुच्यते ।
विप्रपादजलोद्भूता सेना यत्र सरिद्वरा ॥
अग्नितीर्थं च तत्रास्ति पितॄणां मुक्तिकारकम् ।
कपिलेश्वरतीर्थं तु भुक्तिमुक्तिकरं नृणाम् ॥
व्याघ्रेश्वरं ततस्तीर्थं महापातकनाशनम् ।
व्याघ्ररूपी सदा यत्र स्वयं तिष्ठति शङ्करः ॥
विरहासङ्गमस्तत्र महापातकनाशनः ।
यस्यास्तटे वियोगोऽभूत्पाण्डवानां महात्मनाम् ॥
अत्रेश्वरं महालिङ्गं भूतकोटीश्वरं तथा ।
भीमेश्वरं महालिङ्गं दृष्ट्वा याति परं पदम् ।
पिप्पलप्रस्थतीर्थं तु यत्राश्वितनया पुरा ॥
पतिं धन्वन्तरिं लेभे तपसारोग्यदा सती ।
बहुधान्यं ततः क्षेत्रं महापातकनाशनम् ॥

यत्र दत्तानि चान्नानि गौतमेन बहून्यपि ।
गौतमेश्वरलिङ्गं च तत्र स्थापितवान्मुनिः ॥
दर्शनात्तस्य देवस्य सर्वतीर्थफलं लभेत् ।
गलितेश्वरतीर्थं च महापातकनाशनम् ॥
नारदेन समानीता यत्र गङ्गा महानदी ।
वरुणेशं महालिङ्गं नारदेश्वरमेव च ॥
सोमेश्वरं तृतीयं तु मध्ये मतिफलप्रदम् ।
ततो रत्नेश्वरं तीर्थं सर्वसिद्धिकरं नृणाम् ॥
उल्केश्वरं महातीर्थं यत्र चोल्कास्वरूपधृक् ।
बालक्रीडनकः पूर्वं पतन् रुद्रमयोऽभवत् ॥
भीमेश्वरं ततस्तीर्थं सर्वकामफलप्रदम् ।
यस्य संसेवनाद्राजा भीमः सिद्धिमवाप्तवान् ॥
शङ्खतीर्थं महातीर्थं पापराशिभयापहम् ।
शाम्बार्कस्तीर्थराजोऽत्र शाम्बः शुद्धोऽभवत्पुरा ॥
मोक्षेश्वरं महातीर्थमत्र मुक्तिप्रदायकम् ।
भैरवी च ततो देवी प्रसिद्धा भुवनेश्वरी ॥
ऋणमोचनतीर्थं तु ऋणत्रयनिवारणम् ।
कापालिकं ततस्तीर्थं चन्द्रक्षेत्रं महाफलम् ॥
पार्वतीतीर्थमपरमभीष्टफलदायकम् ।
चन्द्रप्रभासकं तीर्थं सर्वतीर्थेषु सत्तमम् ॥
पुनः कोटीश्वरं तीर्थं मिथ्याज्ञानभयापहम् ।
भवमोचनतीर्थं तु संसारार्णवतारणम् ॥
अम्बरीषस्य नृपतेस्ततस्तीर्थमनुत्तमम् ।
अश्वतीर्थं ततस्तत्र भानुतीर्थमुदाहृतम् ॥
कान्तारेश्वरलिङ्गं तु सर्वपातकनाशनम् ।

भरतस्थापितं लिङ्गं भरतेश्वरमुच्यते ॥
गुप्तेश्वरं महातीर्थं महापातकनाशनम् ।
सोमेश्वरं पुनस्तीर्थं सर्वकामफलप्रदम् ॥
रामेण स्थापितं लिङ्गं रामेश्वरमुदाहृतम् ।
सिद्धेश्वरं पुनर्लिङ्गं सर्वसिद्धिप्रदायकम् ॥
स्तेनेश्वरं महालिङ्गं स्तेनपापापहारकम् ।
एतानि सिद्धलिङ्गानि तपत्यास्तीरयोर्द्वयोः ॥
उक्तान्यत्रातिमङ्क्ष्वादितिहासकथां विना । इति ।

## अथ तापीसमुद्रसङ्गममाहात्म्यम् ।

**स्कन्दपुराणे** शङ्करवाक्यम् ।

ततोऽतिसुन्दरो वत्स तपत्याः प्रियसङ्गमः ।
महापापहरः पुंसां पुण्यः सन्निधिरुत्तमः ॥
योऽत्र गण्डूषमात्रं च जलं पिबति मानवः ।
ध्रुवं तत्पुण्यमाप्नोति षण्मासं धूमपानतः ॥
अत्र च स्नानाद्याषाढे प्रशस्ततरम् ।

**तत्रैव,**

आषाढमासे सुत शुक्लपक्षे जातार्कजा पञ्चकपर्वणीति ।
एतद्विदुः पुण्यतरं हि लोके आषाढमासस्य तु पञ्चकं हि ॥

पञ्चकयोगश्च—

अमा वै सोमवारेण रविवारेण सप्तमी ।
चतुर्थी भौमवारेण पितॄणां दत्तमक्षयम् ॥
तत्पञ्चपर्वकं नाम सूर्यपर्वशताधिकम् ।
इति तत्रैवोक्तः ।

**तथा,**

आषाढे पञ्चुतं तप्तं सूर्यदेहासमीपगः ।

कृतं चैवान्नदानं च वत्स सर्वं तदक्षयम् ॥ इति ।

अथ पयोष्णीमाहात्म्यम् ।

**भारते पुलस्त्ययात्रायाम्,**

ततो वार्पीं समासाद्य पयोष्णीं सरितांवराम् ।
पितृदेवार्चनरतो गोसहस्रफलं लभेत् ॥
दण्डकारण्यमासाद्य महाराज उपस्पृशेत् ॥

गोसहस्रफलं तत्र स्नानमात्रस्य ।

**भारते लोमशयात्रायाम्,**

अल्पावशेषा पृथिवी चैत्यैरासीन्महात्मनः ।
गयस्य यजमानस्य तत्र तत्र विशां पते ॥
स लोकान् प्राप्तवानैन्द्रान् कर्मणा तेन भारत ।
सलोकतां तस्य गच्छेत्पयोष्ण्यां य उपस्पृशेत् ॥
तस्मात्त्वमत्र राजेन्द्र भ्रातृभिः सहितोऽच्युत ।
उपस्पृश्य महीपाल धुतपापो भविष्यसि ॥

**धौम्यतीर्थयात्रायाम्,**

उद्धृतं भूतलस्थं वा वायुना समुदीरितम् ।
पयोष्ण्या हरते तोयं पापमामरणान्तिकम् ॥
स्वर्गमुत्तुङ्गममलं विश्राणं यत्र शूलिनः ।
स्वमात्मविहितं दृष्ट्वा मर्त्यः शिवपुरं व्रजेत् ॥
एकतः सरितः सर्वा गङ्गाद्याः सलिलोच्चयाः ।
पयोष्णी चैकतः पुण्या तीर्थेभ्यो हि मता मम ॥

**तथा तत्रैव,**

ताम्रपर्णीं तु कौन्तेय कीर्त्तयिष्यामि तच्छृणु ॥
यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे ।
गोकर्णमिति विख्यातस्त्रिषु लोकेषु भारत ।

शीततोयो बहुजलः पुण्यस्तत्र शिवश्च सः ॥
ह्रदः परमदुष्पापो मानुषैरकृतात्मभिः । इति ।

अथ गोदावरीमाहात्म्यम् ।

ब्रह्मपुराणे,

नारद उवाच ।

महेश्वरजटाजूटाद्गङ्गामादाय गौतमः ।
आगत्य ब्रह्मणः पुण्यं ततः किमकरोद्भुवि ॥

ब्रह्मोवाच ।

आदाय गौतमो गङ्गां शुचिः प्रयतमानसः ।
पूजितो देवगन्धर्वैस्तथा गिरिनिवासिभिः ॥
गिरिमूर्ध्नि ततां स्थाप्य स्मृत्वा देवं च त्र्यम्बकम् ।
उवाच प्राञ्जलिर्भूत्वा गङ्गां तां तु द्विजोत्तमः ॥
त्र्यम्बकस्य जटोद्भूते गौतमस्याघनाशिनि ।
क्षमस्व मातः श्रान्तासि सुखं व्रज हितं कुरु ॥
एवमुक्ता गौतमेन गङ्गा प्रोवाच गौतमम् ।
दिव्यरूपधरा देवी दिव्यमाल्यानुलेपना ॥
गच्छेऽहं देवसदनमथवापि कमण्डलुम् ।

गौतम उवाच ।

त्रयाणामुपकारार्थं लोकानां पापिनां मया ।
शम्भुना च तथा दत्ता देवि तन्नान्यथा कुरु ॥
तद्गौतमवचः श्रुत्वा गङ्गा मेने द्विजेरितम् ।
त्रिधात्मानं विभज्यैषा स्वर्गे मर्त्ये रसातले ॥
स्वर्गे चतुर्द्धा व्यभजत् सप्तधा मर्त्यमण्डले ।
रसातले चतुर्द्धैव सेयं पञ्चदशाकृतिः ॥

सर्वप्रशमभूनैव सर्वपापप्रणाशिनी ।
सर्वकामप्रदा नित्यं सैव वेदे प्रगीयते ॥
यावत् सागरगा देवी तावद्देवमयी स्मृता ।
उत्सृष्टा गौतमेनैवं प्रायात्पूर्णाऽर्णवं प्रति ॥
ततो देवर्षिभिर्जुष्टां मातरं जगतः शुभाम् ।
गौतम ऋषिभिः सार्द्धं प्रदक्षिणमथाकरोत् ॥
मर्त्या मर्त्यगतामेव पश्यन्ति न तले गताम् ।
नैव स्वर्गगतां मर्त्याः पश्यन्त्यज्ञानबुद्धयः ॥
त्रियम्बकं सुरेशानं प्रथमं पूज्य गौतमः ।
उभयोस्तीरयोः स्नानं करोमीति मतिं दधे ॥
तच्च स्नानं कथं सिध्येदित्येवं शर्वमब्रवीत् ।
कृताञ्जलिपुटो भूत्वा भक्तिनम्रस्त्रिलोचनम् ॥
त्रियम्बकोऽपि तं प्राह गौतममृषिभिर्वृतम् ।
द्विहस्तमात्रे तीर्थानि सम्भविष्यन्ति गौतम ॥
सर्वत्राहं सन्निहितः सर्वकामप्रदो ध्रुवम् ।
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥
एतेषु पुण्यदा पुंसां मुक्तिदास्तु भगीरथी ।
नर्मदा च सरिच्छ्रेष्ठा पर्वतेऽमरकण्टके ॥
कावेरी सङ्गता यत्र प्रभासे च सरस्वती ।
कृष्णा भीमरथी चैव तुङ्गभद्रा च नारद ॥
तिसृणां सङ्गमो यत्र तत्तीर्थं मुक्तिदायकम् ।
पयोष्णी सङ्गता यत्र तपत्यां तच्च मुक्तिदम् ॥
इयं तु गोमती पुत्र यत्र क्वापि ममाज्ञया ।
सर्वेषां सर्वजातीनां स्नानान्मुक्तिं प्रदास्यति ॥
किञ्चित्काले पुण्यतमं किञ्चित्तीर्थं सुरागमे ।

सर्वेषां सर्वदा तीर्थं गोमतीयं न संशयः॥
तिस्रः कोट्योऽर्द्धकोटी च योजनानां शतद्वये।
तीर्थानि मुनिशार्दूल सम्भविष्यन्ति गौतम॥
इयं माहेश्वरी गङ्गा गौतमी वैष्णवीति च।
ब्राह्मी गोदावरी नन्दा सुनन्दा कामदायिनी॥
स्मरणादेव पापौघं हन्ति सत्यं मम प्रिया। इति।

अथ गोदावर्य्याश्रितनानातीर्थानि।

तत्र वराहतीर्थम्।

ब्रह्मपुराणे,

तस्मात्पुण्यतमं श्रेष्ठं वाराहं सर्वकामदम्।
तत्र स्नानं च दानं च सर्वक्रतुफलप्रदम्॥ इति।

अथ कुशावर्त्तमाहात्म्यम्।

तत्रैव,

कुशावर्त्तमिति ख्यातं नराणां सर्वकामदम्।
कुशेनावर्तिता यत्र गौतमेन द्विजन्मना॥
तत्तद्ब्रह्मसहस्रेण तत्तत्कल्पशतेन च।
माहात्म्यं न क्षमो वक्तुं तस्य तीर्थस्य नारद॥
तत्र स्नानं च दानं च पितॄणां प्रीतिदायकम्।
नीलगङ्गा सरिच्छ्रेष्ठा निःसृता नीलपर्वतात्॥
तत्र स्नानादि यत्किञ्चित्करोति प्रयतो नरः।
सर्वं तदक्षयं विद्यात् पितॄणां प्रीतिदायकम्॥ इति।

अथ कौमारतीर्थम्।

तत्रैव,

ततः प्रभृति तत्तीर्थं कार्त्तिकेयमिति श्रुतम्।
तत्र स्नानं च दानं च सर्वक्रतुफलप्रदम्॥ इति।

अथ पलतीर्थम् ।

पलतीर्थमिति ख्यातं सर्वसिद्धिकरं नृणाम् ।
ब्रह्महत्यादिपापानां पावनं सर्वकामदम् ॥ इति ।

अथ चक्रतीर्थम् ।

चक्रतीर्थमिति ख्यातं ब्रह्महत्याविनाशनम् । इति ।

अथाविघ्नतीर्थम् ।

अविघ्नतीर्थमाख्यातं सर्वविघ्नप्रणाशनम् । इति ।

अथ निम्नतीर्थम् ।

निम्नभेदमिति ख्यातं सर्वपापप्रणाशनम् । इति ।

अथ कपोतीतीर्थमाहात्म्यम् ।

विश्रुतं त्रिषु लोकेषु कपोतीतीर्थमुत्तमम् ।
तस्य स्वरूपं वक्ष्यामि पुनः शृणु महाफलम् ॥

तथा,

तत्र स्नानं च दानं च पितृपूजनमेव च ।
जपयज्ञादिकं कर्म तदानन्त्याय कल्पते ॥ इति ।

अथ दशाश्वमेधतीर्थम् ।

तत्रैव,

दशाश्वमेधं यत्तीर्थं तन्माहात्म्यं शृणुष्व मे ।
यस्य श्रवणमात्रेण हयमेधफलं लभेत् ॥

तथा,

ततः प्रभृति तत्तीर्थं हयमेधदशं विदुः ।
दशानामश्वमेधानां फलं स्नानादवाप्यते ॥ इति ।

अथ जनस्थानतीर्थम् ।

तत्रैव,

जनकानां यज्ञसदो जनस्थानं प्रकीर्तितम् ।

चतुर्योजनविस्तीर्णं स्मरणात्सर्वपापहम् ॥
तत्र स्नानेन दानेन पितॄणां तर्पणेन च ।
तीर्थस्य श्रवणाद्वापि पठनाद्भक्तिभावनात् ॥
सर्वान्कामानवाप्नोति मुक्तिमार्गमपेक्षते । इति ।

अथ किष्किन्धातीर्थम् ।

ब्रह्मपुराणे,

किष्किन्धातीर्थमाख्यातं सर्वकामप्रदं नृणाम् ।
सर्वपापप्रशमनं यत्र सन्निहितो हरः ॥ इति ।

अथ पापप्रणाशनतीर्थम् ।

पापप्रणाशनं नाम तीर्थं पापप्रणाशनम् ।

तथा,

महापातकमल्पं वा तथा यच्चोपपातकम् ।
तत् सर्वं नाशयेदेतद्धौतपापं तु पुण्यदम् ॥ इति ।

अथारुणावरुणासङ्गमतीर्थम् ।

अरुणावरुणानद्योर्गङ्गायां सङ्गमः शुभः ।
देवानां तत्र तीर्थानि चागतानां पृथक् पृथक् ॥
तत्र त्रीणि सहस्राणि तीर्थानि गुणवन्ति च ।
तत्र स्नानं च दानं च सर्वमक्षयपुण्यदम् ॥ इति ।

अथ कावेरीमाहात्म्यम् ।

पुलस्त्यतीर्थयात्रायाम्,

ततो गच्छेत कावेरीं वृतामप्सरसां गणैः ।
तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् ॥ इति ।

अथ श्रीशैलमाहात्म्यम् ।

भारते,

श्रीपर्वते महादेवो देव्या सह महाद्युतिः ।

न्यवसत परमप्रीतो ब्रह्मा च त्रिदशैर्वृतः ॥
तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः ।
अश्वमेधमवाप्नोति गाणपत्यं च विन्दति ॥ इति ।

अथ सह्यामलकतीर्थमाहात्म्यम् ।

नरसिंहपुराणे,

सूत उवाच ।

श्रीसह्यामलके ग्रामे देवदेवेशमव्ययम् ।
आराध्य सिद्धिः सम्प्राप्ता ह्यासन्नानिचतुर्मुखैः ॥
तस्य पादतलात्तीर्थं निःसृतं पश्चिमामुखम् ।
तच्चक्रतीर्थमभवत् पुण्यं पापहरं नृणाम् ॥
चक्रतीर्थे नरः स्नात्वा सर्वपापैः प्रमुच्यते ।
बहुवर्षसहस्राणि स्वर्गलोके महीयते ॥
शङ्खतीर्थे नरः स्नात्वा वाजपेयफलं लभेत् ।
पुष्यमासे तु पुष्यार्के उत्तमे दिवसे मुने ॥
ब्रह्मणः कुण्डिका पूर्वं गङ्गातोयेन पूरिता ।
सह्याद्रौ पतिता ब्रह्मन् तत्र तीर्थमभून्महत् ॥
नाम्ना तु कुण्डिकातीर्थं शिलावृक्षसमीपतः ।
तत्र ये मुनयः स्नातास्तेऽपि सिद्धिमवाप्नुयुः ॥
त्रिरात्रोपोषितो भूत्वा यस्तिष्ठेत्तत्र मानवः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥
कुण्डिकातीर्थोत्तरतः पिण्डस्थानात्तु दक्षिणात् ।
ऋणमोचननामानं तीर्थं तद्गुह्यमुत्तमम् ॥
त्रिरात्रोपोषितो यस्तु तत्र स्नानं समाचरेत् ।
ऋणैस्त्रिभिरसौ ब्रह्मन् मुच्यते नात्र संशयः ॥
ऋणैस्त्रिभिः, देवर्षिपितृऋणैः ।

श्राद्धं कृत्वा पितॄणां तु पिण्डस्थाने च यो नरः ।
पितॄनुद्दिश्य विधिवत् पिण्डं निर्वापयिष्यति ॥
सुतृप्ताः पितरो यान्ति पितृलोके न संशयः ।
पञ्चरात्रोपितः स्नायात्तीर्थे पापप्रणाशने ॥
सर्वपापक्षयं प्राप्य विष्णुलोके महीयते ।
तत्रैव महतीं धारां शिरसा यस्तु धारयेत् ॥
सर्वक्रतुफलं प्राप्य नाकपृष्ठे महीयते ।
धनुष्पात्रे महातीर्थे भक्तो यः स्नानमाचरेत् ॥
आयुर्योगफलं प्राप्य स्वर्गलोके महीयते ।
शतबिन्दौ नरः स्नात्वा शतक्रतुपुरं व्रजेत् ॥
सहस्रबिन्दौ महातीर्थे स्नात्वा विष्णुपुरं व्रजेत् ।
वराहतीर्थे विप्रेन्द्र मह्यं यः स्नानमाचरेत् ॥
अहोरात्रोपितो भूत्वा विष्णुलोके महीयते ।
आकाशगङ्गानाम्ना च सह्याग्रे तीर्थमुत्तमम् ॥
शिलातलात्ततो ब्रह्मन् निर्याता श्वेतमृत्तिका ।
तामालभ्य तु यः स्नाति नरो द्विजवरोत्तम ॥
सर्वक्रतुफलं प्राप्य विष्णुलोके महीयते ॥
वाग्मतीसङ्गमं नाम तीर्थं देवस्य दक्षिणे ।
एकरात्रोपितो यस्तु तत्र स्नातो विचक्षणः ।
अश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥
वृक्षादामलसह्याद्रेर्यत्तु तोयं विनिर्गतम् ।
तत्तु तीर्थं विजानीहि स्नात्वा पापात्प्रमुच्यते ॥
एतेषु तीर्थेषु नरोऽवगाह्य पुण्येषु सह्याद्रिसमुद्भवेषु ।
दत्त्वा सुपुष्पाणि हरिं च दृष्ट्वा विहाय पापं प्रविशेच्च विष्णुम् ॥
सकृत्तीर्थं निषेवेत गङ्गां चैव पुनः पुनः ।

सर्वतीर्थमयी गङ्गा सर्वदेवमयो हरिः ॥
अंहोमुचं तुरगमेधसहस्रतुल्यं
यच्चक्रतीर्थमिति वेदविदो वदन्ति ।
तत्राप्लुता विरजसो न पुनर्भवन्ति
पादौ प्रणम्य शिरसा मधुसूदनस्य ॥
गङ्गाप्रयागगयनैमिषपुष्कराणि
पुण्यानि यानि कुरुजाङ्गलयामुनानि ।
कालेन तीर्थसलिलानि पुनन्ति पापात्
पादोदकं भगवतस्तु पुनाति सद्यः ॥

पादोदकं, पादतलान्निर्गतं चक्रतीर्थं प्रकरणात् । परमेश्वरचरणोदकमात्रपरमिदमिति कश्चित् ।

अथ गोकर्णमाहात्म्यम् ।

भारते,

अथ गोकर्णमासाद्य त्रिषु लोकेषु विश्रुतम् ।
समुद्रमध्ये राजेन्द्र सर्वलोकनमस्कृतम् ॥
यत्र ब्रह्मादयो देवा मुनयश्च तपोधनाः ।
भूतयक्षपिशाचाश्च किन्नराः समहोरगाः ॥
सिद्धचारणगन्धर्वा मानुषाः पन्नगास्तथा ।
सरितः सागराः शैला उपासन्त उमापतिम् ॥
तत्रेशानं समभ्यर्च्य त्रिरात्रोपोषितो नरः ।
दशाश्वमेधमाप्नोति गाणपत्यं च विन्दति ॥
उपोष्य द्वादशं रात्रं कृतात्मा जायते नरः ।
तस्मिन्नेव तु गायत्र्याः स्थानं त्रैलोक्यविश्रुतम् ॥
त्रिरात्रमुषितस्तत्र गोसहस्रफलं लभेत् ।
निदर्शनं च प्रत्यक्षं ब्राह्मणानां नराधिप ॥

गायत्रीं पठते यस्तु योनिसङ्करजो द्विजः ।
गाथा वा गाथिका वापि तस्य सम्पद्यते नृप ॥
अब्राह्मणस्य पठतः सावित्री तु प्रणश्यति । इति ।

अथ सप्तकोटीश्वरमाहात्म्यम् ।

**स्कान्दे प्रभासखण्डे,**

समुद्रतीरे परमं तेजोलिङ्गं दुरासदम् ।
यत्र सिद्धाः पुरा तप्त मुनयः सप्तकोटयः ॥
सप्तकोटीश्वरं नाम ततः प्रभृति नारद ।
तस्य लिङ्गस्य माहात्म्यं मया वक्तुं न शक्यते ॥
स्मरणाद्यस्य लिङ्गस्य गोसहस्रफलं लभेत् ।
समुद्रे विधिवत् स्नात्वा सप्तकोटीश्वरं शिवम् ॥
ये द्रक्ष्यन्ति महात्मानो मुक्तिभाजो भवन्ति ते ।
राजसूयस्य यज्ञस्य सहस्रगुणितं फलम् ॥
यच्च गोमेधयज्ञस्य दर्शनात्तत्फलं त्विह ।
सप्तकोटीश्वरो देवो दृष्टश्चेद्भुवि मानवैः ॥
धन्यास्त एव लोकेऽस्मिंस्तेषां मुक्तिः करे स्थिता ।
तत्र स्नानं जपो होमो दानं च पितृतर्पणम् ॥
सर्वं तदक्षयं प्रोक्तं सप्तकोटीश्वरे शिवे । इति ।

अथ सेतुबन्धमाहात्म्यम् ।

महापातकपनुवृत्तौ—

**च्यवनः,** आसेतुदर्शनात्पूतो भवत्यश्वमेधावभृथस्नाना-
च्छुद्धो भवत्युभयशिरसं वा प्रदाय ब्राह्मणेभ्यः पूतो भवति ।

उभयशिरसम्, उभयतोमुखीम् ।

**पराशरः**

चतुर्विद्योपसम्पन्नो ब्रह्महा गुरुतल्पगः ।

सेतुं पश्येत्समुद्रस्य प्रायश्चित्तं विनिर्दिशेत् ॥
सेतुबन्धं तथा पश्येल्लङ्कामार्गं महोदधेः ।
दशयोजनविस्तीर्णं शतयोजनमायतम् ॥
रामभद्रसमादेशान्नलसञ्चयमाश्रितम् ।
प्रायश्चित्तमकृत्वा सेतुबन्धं पश्येदित्यर्थः ।

पद्मपुराणे,

एवं च स्तूयमानस्तु देवदेवो महेश्वरः ।
उवाच राघवं वाक्यं भक्तिनम्रं पुरःस्थितम् ॥
त्वया चेह कृते स्थाने मदीये रघुनन्दन ।
आराध्यमानं मां राम पश्येयुरिह सागरे ॥
महापातकयुक्ता वै तेषां पापं विनङ्क्ष्यति ।

कालिकापुराणे,

वृत्रं हत्वा ततः शक्रो महेन्द्रे स्थाप्य शाङ्करम् ।
लिङ्गं मुक्तस्तु पापौघैस्ततः स त्रिदिवं गतः ॥
रावणं सूदयित्वात्र रामो दाशरथिस्तथा ।
विमुक्तो ब्रह्महत्यायाः स्थाप्य लिङ्गं तु तैजसम् ॥
अद्यापीन्द्रेश्वरं दृष्ट्वा तथा रामेश्वरं विभुम् ।
मुच्यते ब्रह्महत्याया नरो वै नात्र संशयः ॥ इति ।

अत्र विशेष उक्तो—

भविष्ये,

यद्युत्तरे वसेत्पार्श्वे विन्ध्यस्य पुरुषोत्तमः ।
दक्षिणे वसतश्चेदं न भवेदिति तच्छृणु ॥

स्कन्दपुराणे रामवाक्यम्,

एष सेतुर्मया बद्धः सागरे लवणाम्भसि ।
तव हेतोर्विशालाक्षि नलसेतुः सुदुस्तरः ॥

सेतुबन्ध इति ख्यातस्त्रैलोक्येनैव पूजितः ।
एतत्पवित्रमतुलं महापातकनाशनम् ॥
तत्र गत्वा द्विजान् भोज्य याति विष्णोः परं पदम् ।
सेतुसंस्मरणं नित्यं महापातकनाशनम् ॥
विष्णोः संस्मृतितुल्यं तदित्याहुर्ब्रह्मवादिनः ।
ब्रह्माण्डपुराणे,
रामार्थं निर्मितं सेतुं मुक्तिमार्गमनुत्तमम् ।
गत्वा पापहरस्याशु विष्णोः सायुज्यमाप्नुयात् ॥
तत्र स्नानं महापुण्यं सामुद्रमपि दुर्लभम् ।
सर्वदा मुनिशार्दूल सुरैरिन्द्रादिकैरपि ॥
दशयोजनविस्तीर्णे शतयोजनमायते ।
सेतौ दृष्टे मनुष्याणां मुक्तिमार्गो न दुर्लभः ॥
गारुडे,
रामपादम्बुजन्यासपवित्रं नलनिर्मितम् ।
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ॥
मुच्यते सर्वपापेभ्यो कृतकृत्यो भवेदिति ।
सेतुमध्ये तु यत्तीर्थं पर्वते गन्धमादने ॥
गत्वा पिण्डप्रदानेन पूजयित्वा वृषध्वजम् ।
दर्शनात्स्पर्शनाच्चैव सर्वपापैः प्रमुच्यते ॥
यो नरः स्नाति तीर्थेऽस्मिन् सामुद्रे सेतुबन्धने ।
उपोष्य रजनीमेकां राहुग्रस्ते दिवाकरे ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥
पद्मपुराणे,
हतलङ्केश्वरं रामं निवृत्तं स्वां पुरीं प्रति ।
इदं विभीषणो वाक्यं प्रत्युवाच कृताञ्जलिः ॥

करिष्ये सर्वमेतद्धि यदाज्ञप्तं विभो त्वया ।
सेतुनानेन राजेन्द्र पृथिव्यां सर्वमानवाः ॥
आगम्य प्रतिबाधेयुराज्ञा तत्र कथं तव ।
केऽत्र मे नियमा देव किं नु कार्यं मया विभो ॥
श्रुत्वैतद्राघवो वाक्यं रक्षसा तेन वोदितम् ।
कार्मुकं गृह्य हस्तेन रामः सेतुं द्विधाच्छिनत् ॥
विमानस्यातिवेगेन मध्ये वै दशयोजनम् ।
तथान्तर्योजनं चैकमेवं खण्डत्रयं कृतम् ॥
वेलावनान्तमासाद्य रामः पूजामुपापतेः ।
कृत्वा रामेश्वरं नाम्ना देवदेवं त्रिलोचनम् ॥
प्रतिषिध्याथ पवनं वामेन रघुनन्दनः ।
दक्षिणेनोदधिं चैव मा गर्जीर्मा प्रवापय ॥
एवं च प्रतिषिद्धौ तौ तं च देवं व्यसर्जयत् ।
अन्तरिक्षाद्विभोर्वाणी मेघगम्भीरनिस्वना ॥

रुद्र उवाच ।

भो भो राघव भद्रं ते स्थितोऽहमिह साम्प्रतम् ।
यावज्जगदिदं वीर यावदेषा धरा स्थिता ॥
यावदेव च ते सेतुस्तावत्स्थास्यामि राघव ।

तथा,

त्वया कृतमिदं स्थानं मदीयं रघुनन्दन ।
आगत्य मानवा ये च पश्येयू रघुनन्दन ॥
महापातकयुक्तानां तेषां पापं विनश्यति ।
ब्रह्महत्यादिपापानि यानि कष्टानि कर्हिचित् ॥
दर्शनादेव नश्यन्ति नात्र कार्या विचारणा । इति ।

अथ पुरुषोत्तममाहात्म्यम् ।

कल्पतरौ वामनपुराणे,
उपोष्य रजनीमेकां विरजां स नदीं ययौ ।
स्नात्वा विरजसे तीर्थे दत्त्वा पिण्डं पितुस्तथा ॥
दर्शनार्थं ययौ श्रीमानजितं पुरुषोत्तमम् ।
विष्णुपुराणे,
स चापि भगवान् कण्डुः क्षीणे तपसि सत्तमाः ।
पुरुषोत्तमाख्यं मैत्रेय विष्णोरायतनं ययौ ॥
तत्रैकाग्रमतिर्भूत्वा चकाराराधनं हरेः । इति ।
स्कन्दपुराणे ब्रह्माणं प्रति भगवद्वाक्यम्,
सागरस्योत्तरे तीरे महानद्याश्च दक्षिणे ।
स प्रदेशः पृथिव्यां हि सर्वतीर्थफलप्रदः ॥
तत्र ये मनुजा ब्रह्मन्निवसन्ति सुबुद्धयः ।
जन्मान्तरकृतानां च पुण्यानां फलभागिनः ॥
सिन्धुतीरे तु यो ब्रह्मन् राजते नीलपर्वतः ।
पृथिव्यां गोपितं स्थानं तत्र चापि सुदुर्लभम् ॥
सुरासुराणां दुर्ज्ञेयं माययाच्छादितं मम ।
सर्वसङ्गपरित्यक्तस्तत्र तिष्ठामि देहभृत् ॥
क्षराक्षरावतिक्रम्य वर्त्तेऽहं पुरुषोत्तमे ।
सृष्ट्या लयेन नाक्रान्तं क्षेत्रं मे पुरुषोत्तमम् ॥
यथा मां पश्यसि ब्रह्मन् शङ्खचक्रादिचिन्हितम् ।
ईदृशं तत्र गत्वैव द्रक्ष्यसे मां पितामह ॥
नीलाद्रेरुत्तरभुवि कल्पन्यग्रोधमूलतः ।
वारुण्यां दिशि यत्कुण्डं रौहिणं नाम विश्रुतम् ॥
तत्तीरे निवसन्तं मां पश्यन्तश्चर्मचक्षुषा ।
तदम्भसा क्षीणपापा मम सायुज्यमाप्नुयुः ॥

ब्रह्मपुराणे,

समुद्रस्योत्तरे तीरे तस्मिन्देशे द्विजोत्तमाः ।
आस्ते गुह्यं परं क्षेत्रं मुक्तिदं पापनाशनम् ॥
सर्वत्र वालुकाकीर्णं पवित्रं सर्वकामदम् ।
दशयोजनविस्तीर्णं क्षेत्रं परमदुर्लभम् ॥

स्कन्दपुराणे,

पञ्चक्रोशमिदं क्षेत्रं समुद्रान्तर्व्यवस्थितम् ।
त्रिक्रोशं तीर्थराजस्य तटभूमौ सुनिर्मलम् ॥
सुवर्णवालुकाकीर्णं नीलपर्वतशोभितम् ।
इदं तु महाफलप्रदमतः क्षेत्रकथनम् ।

तथा,

सीमा प्रतीची क्षेत्रस्य शङ्खाकारस्य मूर्द्धनि ।
शङ्खाग्रे नीलकण्ठः स्यादेतत् क्रोशं सुदुर्लभम् ॥

तथा,

शङ्खस्योदरभागं तु समुद्रोदकसम्प्लुतम् ।

ब्रह्मपुराणे,

नक्षत्राणां यथा सोमः सरसां सागरो यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
वसूनां पावको यद्वद्रुद्राणां शङ्करो यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
वर्णानां ब्राह्मणो यद्वद्वैनतेयश्च पक्षिणाम् ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
प्रमदानां यथा लक्ष्मीः सरितां सागरो यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
शिखरिणां यथा मेरुः पर्वतानां हिमालयः ।

तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
ऐरावतो गजेन्द्राणां महर्षीणां भृगुस्तथा ।
सेनानीनां यथा स्कन्दः सिद्धानां कपिलो यथा ॥
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
अरुन्धती यथा स्त्रीणामस्त्राणां कुलिशं यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
यथा समस्तविद्यानां मोक्षविद्या परा स्मृता ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
मनुष्याणां यथा राजा धेनूनामपि कामधुक् ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
भूषणानां च सर्वेषां यथा चूडामणिर्वरः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
सुवर्णं सर्वरत्नानां सर्पाणां वासुकिर्यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
प्रह्लादः सर्वदैत्यानां रामः शस्त्रभृतां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
झषाणां मकरो यद्वन्मृगाणां मृगराड्यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
वरुणो यादसां यद्वद्यमः संयमतां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
समुद्राणां यथा श्रेष्ठः क्षीरोदः सरितां पतिः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
देवर्षीणां यथा श्रेष्ठो नारदो द्विजसत्तमाः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
अश्वमेधस्तु यज्ञानां यथा श्रेष्ठः प्रकीर्त्तितः ।

तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ इति ।

स्कन्दपुराणे पुरुषोत्तमक्षेत्रमधिकृत्य-

कपालमोचनं नाम क्षेत्रपालं यमेश्वरम् ।
मार्कण्डेयं तथेशानं विघ्नेशं नीलकण्ठकम् ॥
वटमूले वटेशं च लिङ्गान्यष्टौ महेशितुः ।
यानि दृष्ट्वा तथा स्पृष्ट्वा पूजयित्वा विमुच्यते ॥ इति ।

ब्रह्मपुराणे,

ब्रह्मोवाच ।

शृणुध्वं पूर्वमवृत्तां कथां पापप्रणाशिनीम् ।
प्रवक्ष्यामि समासेन श्रिया पृष्टः पुरा हरिः ॥
सुमेरोः काञ्चने शृङ्गे सर्वाश्चर्यसमन्विते ।
तत्र स्थितं जगन्नाथं जगत्स्रष्टारमव्ययम् ॥
प्रणम्य शिरसा देवी लोकानां हितकाम्यया ।
पप्रच्छेमं महाप्रश्नं भूमौ स्थानमनुत्तमम् ॥
ब्रूहि त्वं सर्वलोकेश संशयं मे हृदि स्थितम् ।
मर्त्यलोके महाश्चर्ये कर्मभूमौ सुदुर्लभे ॥
लोभमोहमहाग्राहे कामक्रोधमहार्णवे ।
येन मुच्येत देवेश संसारासारसागरात् ॥
आचक्ष्व सर्वदेवेश प्रणतां यदि मन्यसे ।
त्वदृते नास्ति लोकेऽस्मिन् वक्ता संशयनिर्णये ॥
श्रुत्वैवं वचनं तस्या देवदेवो जनार्दनः ।
प्रोवाच परमप्रीत्या परं सारामृतोपमम् ॥
स्वर्गोपायः सुसाध्यश्च निरायासो महाफलः ।
आस्ते तीर्थवरो देवि विख्यातः पुरुषोत्तमः ॥
न तेन सदृशः कश्चित् त्रिषु लोकेषु विद्यते ।

कीर्त्तनाद्यस्य देवेशि मुच्यते सर्वपातकैः ॥
न विज्ञातोऽपरैः सर्वैर्न दैत्यैर्न च दानवैः ॥
मरीच्याद्यैर्मुनिवरैर्गोपितो मे वरानने ।
दक्षिणस्योदधेस्तीरे न्यग्रोधो यत्र तिष्ठति ॥
यस्तु कल्पे समुत्पन्ने महदुल्कानिवर्हणे ।
विनाशं नैव चाप्नोति स्वयं तत्रैव संस्थितः ॥
दृष्टमात्रे वटे तस्मिन् छायामाक्रम्य चासकृत् ।
ब्रह्महत्या प्रमुच्येत पापेष्वन्येषु का कथा ॥
प्रदक्षिणा कृता यैस्तु नमस्कारश्च जन्तुभिः ।
सर्वे निर्धूतपाप्मानस्ते गताः केशवालयम् ॥
न्यग्रोधस्योत्तरे किञ्चिद्दक्षिणे केशवस्य तु ।
प्रासादस्तत्र तिष्ठेत पदं धर्ममयं हि तत् ॥
प्रतिमां तत्र तां दृष्ट्वा स्वयं देवेन निर्मिताम् ।
अनायासेन वै यान्ति भवनं मे ततो नराः ॥
गच्छमानांस्तु तान् दृष्ट्वा एकदा धर्मराट् प्रिये ।
मदन्तिकमनुप्राप्य प्रणम्य शिरसाऽब्रवीत् ॥
नमस्ते भगवन्देव लोकनाथ जगत्पते ।
क्षीरोदवासिनं देवं शेषभोगैकशायिनम् ॥
वरं वरेण्यं वरदं कर्त्तारमक्षयं प्रभुम् ।
विश्वेश्वरमजं विष्णुं सर्वज्ञमपराजितम् ॥
नीलोत्पलदलश्यामं पुण्डरीकनिभेक्षणम् ।
सर्वज्ञं त्रिगुणं श्यामं जगद्धातारमव्ययम् ॥
सर्वलोकविधातारं लोकनाथं सुखावहम् ।
पुराणं पुरुषं वेद्यं व्यक्ताव्यक्तं सनातनम् ॥
परापराणां स्रष्टारं लोकनाथं जगद्गुरुम् ।

श्रीवत्सोरस्कसंयुक्तं वनमालाविभूषितम् ॥
पीतवस्त्रं चतुर्बाहुं शङ्खचक्रगदाधरम् ।
हारकेयूरसंयुक्तं मुकुटाङ्गदधारिणम् ॥
सर्वलक्षणसम्पूर्णं सर्वेन्द्रियविवर्जितम् ।
कूटस्थमचलं सूक्ष्मं ज्योतीरूपं सनातनम् ॥
भावाभावविनिर्मुक्तं व्यापिनं प्रकृतेः परम् ।
तं नमस्ये जगन्नाथमीश्वरं सुखदं प्रभुम् ॥
इत्येवं धर्मराजस्तु पुरा न्यग्रोधसन्निधौ ।
स्तुत्वा नानाविधैः स्तोत्रैः प्रणाममकरोत्तदा ॥
तं दृष्ट्वा तु महाभागे प्रणतं प्राञ्जलिं स्थितम् ।
स्तोत्रस्य कारणं देवि पृष्टवानहमन्तकम् ॥
वैवस्वत महाबाहो सर्वदेवमयो ह्यसि ।
किमर्थं स्तुतवानित्थं मद्भक्त्या तद्ब्रवीहि मे ॥

यम उवाच ।

अस्मिन्नायतने पुण्ये विख्याते पुरुषोत्तमे ।
इन्द्रनीलमयी सृष्टा प्रतिमा सार्वकामिकी ॥
तां दृष्ट्वा पुण्डरीकाक्ष भावेनैकेन श्रद्धया ।
श्वेताख्यं भुवनं यान्ति निष्कामाश्चैव मानवाः ॥
अतः कर्तुं न शक्नोमि व्यापारमतिदूषणम् ।
प्रसीद सुमहादेव संहर प्रतिमां प्रभो ॥
श्रुत्वा वैवस्वतस्यैतद्वाक्यमेतदुवाच ह ।
यम तां गोपयिष्यामि सिकताभिः समन्ततः ॥
ततः सा प्रतिमा देवि वल्लीभिर्गोपिता मया ।

वल्लीभिर्वालुकाभिः ।

यथा तत्र न पश्यन्ति मनुजाः स्वर्गकाङ्क्षिणः ॥
प्रच्छाद्य वल्लिकैर्देवि जातरूपपरिच्छदैः ।
यमं प्रस्थापयामास स्वां पुरीं दक्षिणां दिशम् ॥
लुप्तायां प्रतिमायां तु इन्द्रनीलस्य वै तदा ।
तस्मिन् क्षेत्रवरे पुण्ये विख्याते पुरुषोत्तमे ।
यो भूतस्तत्र वृत्तान्तो देवदेवो जनार्द्दनः ॥
तं सर्व्वं कथयामास तस्यै स भगवान् पुरा ।
इन्द्रद्युम्नस्य गमनं क्षेत्रसन्दर्शनं तथा ॥
क्षेत्रस्य वर्णनं चैव प्रासादकरणं तथा ।
दर्शनं बलदेवस्य कृष्णस्य च विशेषतः ॥
सुभद्रायाश्च तत्रैव माहात्म्यं चैव सर्व्वशः ।
दर्शनं नरसिंहस्य व्युष्टिसङ्कीर्त्तनं तथा ॥
अनन्तवासुदेवस्य दर्शनं गुणकीर्त्तनम् ।
श्वेतमाधवमाहात्म्यं स्वर्गद्वारस्य दर्शनम् ॥
उदधेर्दर्शनं चैव स्नानं तर्पणमेव च ।
समुद्रस्नानमाहात्म्यमिन्द्रद्युम्नस्य च द्विजाः ॥
पञ्चतीर्थफलं चैव महाज्यैष्ठ्यां तथैव च ।
स्थानं कृष्णस्य हलिनः सर्व्वयात्राफलं तथा ॥
वर्णनं विष्णुलोकस्य क्षेत्रस्य च पुनः स्वयम् ।
सर्व्वं कथितवांस्तथ्यं तस्यै स पुरुषोत्तमः ॥

ऋषय ऊचुः ।

ब्रूहि नो देव देवेश यत्पृच्छामः पुरातनम् ।
यथा ताः प्रतिमाः पूर्व्वमिन्द्रद्युम्नेन निर्म्मिताः ॥
केन चैव प्रकारेण तुष्टस्तस्मै स माधवः ।
तत्सर्व्वं वद चास्माकं परं कौतूहलं हि नः ॥

ब्रह्मोवाच ।

शृणुध्वं मुनिशार्दूलाः पुराणं वेदसम्मितम् ।
कथयामि पुरावृत्तं प्रतिमानां च सम्भवम् ॥
प्रवृत्ते च महायज्ञे प्रासादे चैव निर्मिते ।
चिन्ता तस्य बभूवाथ प्रतिमार्थमहर्निशम् ॥
न वेद्मि केन देवेशं सर्वेषां लोकभावनम् ।
सर्गस्थित्यन्तकर्त्तारं पश्यामि पुरुषोत्तमम् ॥
चिन्ताविष्टस्स भूपाला शेते रात्रौ दिवापि न ।
न भुङ्क्ते विविधान् भोगान् न च स्नानं प्रसाधनम् ॥
शैलमृद्दारुजा वापि प्रशस्ता या महीतले ।
विष्णोश्च प्रतिमा योग्या सर्वलक्षणलक्षिता ॥
एतैरेव त्रयाणां तु दयितं यत्सुरार्चितम् ।
स्थापिते प्रीतिमभ्येति इति चिन्तापरोऽभवत् ॥
पञ्चरात्रविधानेन सम्पूज्य पुरुषोत्तमम् ।
चिन्ताविष्टो महीपालः स स्तोतुमुपचक्रमे ॥

इन्द्रद्युम्न उवाच ।

वासुदेव नमस्तेऽस्तु नमस्ते मोक्षकारण ।
त्राहि मां सर्वलोकेश जन्मसंसारसागरात् ॥
निर्मलाम्बरसङ्काश नमस्ते पुरुषोत्तम ।
सङ्कर्षण नमस्तेऽस्तु त्राहि मां धरणीधर ॥
नमस्ते हेमगर्भाय नमस्ते मकरध्वज ।
रतिकान्त नमस्तेऽस्तु त्राहि मां वरदो भव ॥
नमस्ते विबुधागार नमस्ते विबुधप्रिय ।
नारायण नमस्तेऽस्तु त्राहि मां शरणागतम् ॥
नमस्ते बलिनां श्रेष्ठ नमस्ते लाङ्गलायुध ।

नमस्ते विबुधश्रेष्ठ नमस्ते कमलोद्भव ॥
चतुर्मुख जगद्धामन् त्राहि मां प्रपितामह ।
नमस्ते नीलमेघाभ नमस्ते त्रिदशार्चित ॥
त्राहि विष्णो जगन्नाथ मग्नं मां भवसागरे ।
प्रलयानलसङ्काश नमस्ते दितिजान्तक ॥
नरसिंह महावीर्य्य त्राहि मां दीप्तलोचन ।
यथा रसातलादुर्वी त्वया दंष्ट्रोद्धृता पुरा ॥
तथा महावराह त्वं त्राहि मां भवसागरात् ।
तुभ्यैता मूर्त्तयः कृष्ण वरदाः संस्तुता मया ॥
त्वं चेमे बलदेवाद्याः पृथग्रूपेण संस्थिताः ।
अङ्गानि तव देवेश गरुडाद्यास्तथा प्रभो ॥
दिक्पालाः सायुधाश्चैव वासवाद्यास्तथाऽच्युत ।
ये चान्ये तव देवेश भेदाः प्रोक्ता मनीषिभिः ॥
तेऽपि सर्व्वे जगन्नाथं प्रसन्नायतलोचन ।
मयार्चिताः स्तुताः सर्व्वे तथा यूयं नमस्कृताः ॥
प्रयच्छध्वं वरं मह्यं धर्मकामार्थमोक्षदम् ।
भेदास्ते कीर्त्तिता ये तु हरे सङ्कर्षणादयः ॥
तव पूजार्थसम्भूतास्ततस्त्वयि समाश्रिताः ।
न भेदस्तव देवेश विद्यते परमार्थतः ॥
विविधं तव यद्रूपं युक्तं तदुपचारतः ।
अद्वैतं त्वां कथं द्वैतं वक्तुं शक्नोति मानवः ॥
एकस्त्वं हि हरे व्यापी चित्स्वभावो निरञ्जनः ।
परमं तव यद्रूपं भावाभावविवर्जितम् ॥
निर्लेपं निर्गुणं सूक्ष्मं कूटस्थमचलं ध्रुवम् ।
सर्वोपाधिविनिर्मुक्तं सत्तामात्रव्यवस्थितम् ॥

तद्देवाश्च न जानन्ति कथं जानाम्यहं प्रभो ।
अपरं तव यद्रूपं पीतवस्त्रं चतुर्भुजम् ॥
शङ्खचक्रगदापाणिमुकुटाङ्गदधारिणम् ।
श्रीवत्सोरस्कसंयुक्तं वनमालाविभूषितम् ॥
तदर्चयन्ति विबुधा ये चान्ये तव संश्रयाः ।
देव सर्वसुरश्रेष्ठ भक्तानामभयप्रद ॥
त्राहि मां पद्मपत्राक्ष मग्नं विषयसागरे ।
नान्यं पश्यामि लोकेश यस्याहं शरणं व्रजे ॥
त्वामृते कमलाकान्त प्रसीद मधुसूदन ।
जराव्याधिशतैर्युक्तो नानादुःखैर्निपीडितः ॥
हर्षशोकान्वितो मूढः कर्मपाशैः सुयन्त्रितः ।
पतितोऽहं महारौद्रे घोरे संसारसागरे ॥
विषयोदकदुष्पारे रागद्वेषझषाकुले ।
इन्द्रियावर्त्तगम्भीरे तृष्णाशोकोर्मिसङ्कुले ॥
निराश्रये निरालम्बे निःसारेऽत्यन्तचञ्चले ।
मायया मोहितस्तत्र भ्रमामि सुचिरं प्रभो ॥
नानाजातिसहस्रेषु जायमानः पुनः पुनः ।
मया जन्मान्यनेकानि सहस्राणि शतानि च ॥
विविधान्यनुभूतानि संसारेऽस्मिन् जनार्दन ।
वेदाः साङ्गा मयाऽधीताः शास्त्राणि विविधानि च ॥
इतिहासपुराणानि तथा शिल्पान्यनेकशः ।
असन्तोषाश्च सन्तोषाः सञ्चयापचया व्ययाः ॥
मया प्राप्ता जगन्नाथ जयवृद्ध्युदयेतराः ।
भार्यामित्रस्वबन्धूनां वियोगाः सङ्गमास्तथा ॥
पितरो विविधा दृष्टा मातरश्च तथा मया ।

दुःखानि चानुभूतानि मया सौख्यान्यनेकशः ॥
प्राप्ताश्च बान्धवाः पुत्रा भ्रातरो ज्ञातयस्तथा ।
मयोषितं तथा स्त्रीणां कोष्ठे विण्मूत्रपिच्छिले ॥
गर्भवासे महादुःखमनुभूतं तथा प्रभो ।
दुःखानि यान्यनेकानि बाल्ययौवनगोचरे ॥
वार्द्धके च हृषीकेश तानि प्राप्तानि वै मया ।
मरणे यानि दुःखानि यममार्गे यमालये ॥
मया तान्यनुभूतानि नरके यातनाकुले ।
कृमिकीटद्रुमाणां च हस्त्यश्वमृगपक्षिणाम् ॥
महिषाणां गवां चैव तथान्येषां वनौकसाम् ।
द्विजातीनां च सर्वेषां शूद्राणां चैव योनिषु ॥
धनिनां क्षत्रियाणां च दरिद्राणां तपस्विनाम् ।
नृपाणां नृपभृत्यानां तथान्येषां च देहिनाम् ॥
गृहेषु तेषामुत्पन्नो देव चाहं पुनः पुनः ।
गतोऽस्मि दासतां नाथ श्रीमतां बहुशो नृणाम् ॥
दरिद्रत्वं चेश्वरत्वं स्वामित्वं च तथा गतः ।
हता मया हतश्चान्यैर्घातितो घातितास्तथा ॥
दत्तं ममान्यैरन्येभ्यो मया दत्तमनेकशः ।
पितृमातृसुहृद्वर्गकलत्राणां कृतेन च ॥
धनिनां श्रोत्रियाणां च दरिद्राणां तपस्विनाम् ।
मया स्पृष्टाऽसकृद्दैन्यमश्रुधौताननो गतः ॥
देवतिर्यङ्मनुष्येषु चरेषु स्थावरेषु च ।
न विद्यते च तत्स्थानं यत्राहं न गतः प्रभो ॥

१ अत्र–'उक्तं दैन्यं बहुविधं त्यक्त्वा लज्जां जनार्दन' । इति ब्रह्मपुराणे पाठः ।

कदा मे नरके वासः कदा स्वर्गे जगत्पते ।
कदा मनुष्यलोकेषु कदा तिर्य्यग्गतेषु च ॥
जलयन्त्रे यथा चक्रे घटी रज्जुविलम्बिनी ।
याति चोर्ध्वमधश्चैव कदा मध्ये च तिष्ठति ॥
तथा चाहं सुरश्रेष्ठ कर्मरज्जुसमाश्रितः ।
अधश्चोर्ध्वं तथा मध्ये गच्छामि कर्मयोगतः ॥
एवं संसारचक्रेऽस्मिन् भैरवे रोमहर्षणे ।
भ्रमामि सुचिरं कालं नान्तं पश्यामि कर्हिचित् ॥
न जाने किं करोम्यद्य हरे व्याकुलितेन्द्रियः ।
शोकतृष्णाभिभूतश्च कान्दिशीको विचेतनः ॥
इदानीं त्वामहं देव विह्वलः शरणं गतः ।
त्राहि मां दुःखितं कृष्ण मग्नं संसारसागरे ॥
कृपां कुरु जगन्नाथ भक्तं मां यदि मन्यसे ।
त्वदृते नास्ति मे बन्धुर्योऽसौ चिन्तां करिष्यति ॥
देव त्वां नाथमासाद्य न भयं मेऽस्ति कुत्रचित् ।
जीविते मरणे चैव योगक्षेमे तथा प्रभो ॥
ये तु त्वां विधिवद्देव नार्चयन्ति नराधमाः ।
सुगतिस्तु कथं तेषां भवेत् संसारबन्धनात् ॥
किं तेषां कुलशीलेन विद्यया जीवितेन च ।
येषां न जायते भक्तिर्जगद्धातरि केशवे ॥
प्रकृतिं त्वासुरीं प्राप्य ये त्वां निन्दन्ति मोहिताः ।
पतन्ति नरके घोरे जायमानाः पुनः पुनः ॥
न तेषां निष्कृतिस्तस्माद्विद्यते नरकार्णवात् ।
ये दूषयन्ति दुर्वृत्तास्त्वां देव पुरुषाधमाः ॥
यत्र यत्र भवेज्जन्म मम कर्मनिबन्धनात् ।

तत्र तत्र हरे भक्तिस्त्वयि तात दृढा सदा ॥
आराध्य त्वां सर्वदैत्या नराश्चान्येऽपि संयताः ।
अवापुः परमां सिद्धिं कस्त्वां देव न पूजयेत् ॥
न शक्नुवन्ति ब्रह्माद्याः स्तोतुं त्वां प्रकृतेः परम् ।
तथा चाज्ञानभावेन संस्तुतोऽसि मया प्रभो ॥
तत् क्षमस्वापराधं मे यदि तेऽस्ति दया मयि ।
कृतापराधेऽपि हरे क्षमां कुर्वन्ति साधवः ॥
तस्मात्प्रसीद देवेश भक्तस्तेऽहं समाश्रितः ।
स्तुतोऽसि यन्मया देव भक्तिभावेन चेतसा ॥
साङ्गं भवतु तत्सर्वं वासुदेव नमोऽस्तु ते ।

ब्रह्मोवाच ।

इत्थं स्तुतस्तदा तेन प्रसन्नो गरुडध्वजः ।
ददौ तस्मै मुनिश्रेष्ठाः सकलं मनसेप्सितम् ॥
यः सम्पूज्य जगन्नाथं प्रत्यहं स्तौति मानवः ।
स्तोत्रेणानेन मतिमान् स मोक्षं लभते ध्रुवम् ॥
त्रिसन्ध्यं यो जपेद्विद्वानिमं स्तोत्रवरं शुचिः ।
धर्मं चार्थं च कामं च मोक्षं च लभते नरः ॥
यः पठेच्छृणुयाद्वापि श्रावयेद्वा समाहितः ।
स लोकं शाश्वतं विष्णोर्याति निर्धौतकल्मषः ॥
धन्यं पापहरं चेदं भुक्तिमुक्तिप्रदं शिवम् ।
गुह्यं सुदुर्लभं पुण्यं न देयं यस्य कस्य चित् ॥
न नास्तिकाय मूर्खाय न कृतघ्नाय मानिने ।
न दुष्टमतये दद्यान्नाभक्ताय कदाचन ॥
दातव्यं भक्तियुक्ताय गुणशीलान्विताय च ।
विष्णुभक्ताय शान्ताय श्रद्धानुष्ठानशालिने ॥

गतायामद्य शर्वर्यां निर्मले भास्करोदये ॥
सागरस्य जलस्यान्ते नानाद्रुमविभूषिते ।
जलं तथैव वेलायां दृश्यते यत्र वै महत् ॥
लवणस्योदधे राजंस्तरङ्गैरभिपूजितम् ।
कूलालम्बी महावृक्षः स्थितः स्थलजलेषु च ॥
वेलाभिर्हन्यमानश्च न चासौ कम्पते ध्रुवम् ।
परशुमादाय हस्तेन ऊर्मेरन्तस्ततो व्रज ॥
एकाकी विहरन्राजन् यत्त्वं पश्यसि पादपम् ।
इदं चिह्नं समालोक्य छेदय त्वमशङ्कितम् ॥
शात्यमानं तु तं वृक्षं मांशुमद्भुतदर्शनम् ।
दृष्ट्वा तेनैव सञ्छिन्न तदा भूपाल दर्शनात् ॥
कुरु मे प्रतिमां दिव्यां जहि चिन्तां विमोहिनीम् ।

ब्रह्मोवाच ।

एवमुक्त्वा महाभागो जगामादर्शनं हरिः ।
स चापि स्वप्नमालोक्य परं विस्मयमागतः ॥
तां निशां समुदीक्षन् स स्थितस्तद्गतमानसः ।
व्याहरन् वैष्णवान् मन्त्रान् सूक्तं चैव तदात्मकम् ॥
प्रभातायां रजन्यां तु तद्गतो नान्यमानसः ।
स स्नात्वा सागरे सम्यक् यथावद्विधिना ततः ॥
दत्त्वा दानं च विप्रेभ्यो ग्रामांश्च नगराणि च ।
कृत्वा पौर्वाह्णिकं कर्म जगाम स नृपोत्तमः ॥
न रथो न पदातिश्च न गजो न च सारथिः ।
एकाकी स महावेलां प्रविवेश महीपतिः ॥
तं ददर्श महावृक्षं तेजस्वन्तं महाद्रुमम् ।
महान्तिकं महारोहं पुण्यं विपुलमेव च ॥

महोत्सेधं महाकायं प्रगुप्तं च जलान्तिके ।
सान्द्रमाञ्जिष्ठवर्णाभं नामजातिविवर्जितम् ॥
नरनाथस्तदा विष्णोर्द्रुमं दृष्ट्वा मुदान्वितः ।
परशुना शातयामास शितेन च दृढेन च ॥
द्वैधीभूता मतिस्तत्र बभूवेन्द्रमखस्य च ।
निरीक्ष्यमाणे काष्ठे तु बभूवाद्भुतदर्शनम् ॥
विश्वकर्मा च विष्णुश्च विप्ररूपधरावुभौ ।
आजग्मतुर्महात्मानौ तदा तुल्याग्रजन्मनौ ॥
ज्वलमानौ स्वतेजोभिर्दिव्यस्रगन्धलेपनौ ।
अथ तौ तं समागम्य नृपमिन्द्रमखं तदा ॥
तावब्रूतां महाराज किमत्र त्वं करिष्यसि ।
किमर्थं च महाबाहो शातितश्च वनस्पतिः ॥
असहायो महादुर्गे निर्जने गहने वने ।
महासिन्धुतटे चैव कथं वै शातितो द्रुमः ॥
तयोः श्रुत्वा वचो विप्राः स तु राजा मुदान्वितः ।
बभाषे वचनं ताभ्यां मृदु वै मधुरं तथा ॥
दृष्ट्वा तौ ब्राह्मणौ तत्र चन्द्रसूर्याविवागतौ ।
नमस्कृत्य जगन्नाथाववाङ्मुखमवस्थितः ॥

राजोवाच ।

देवदेवमनाद्यन्तमनन्तं जगतः पतिम् ।
आराधनाय प्रतिमां करोमीति मतिर्मम ॥
अहं स देवदेवेन परमेण महात्मना ।
स्वप्नान्ते च समुद्दिष्टो भवद्भ्यां श्राविता मया ॥
राज्ञस्तु वचनं श्रुत्वा देवेन्द्रप्रतिमस्य च ।

प्रहस्य तस्मै देवेशस्तुष्टो वचनमब्रवीत् ॥
साधु साधु महीपाल यदेतन्मतमुत्तमम् ।
संसारसागरे घोरे कदलीदलसन्निभे ॥
यतस्ते मतिरुत्पन्ना विष्णोराराधनाय वै ।
धन्यस्त्वं नृपशार्दूल गुणैः सर्वैरलङ्कृतः ॥
सप्रजा पृथिवी धन्या सशैलवनकानना ।
सपुरग्रामनगरा चतुर्वर्णैरलङ्कृता ॥
यत्र त्वं नृपशार्दूल प्रजापालयिता प्रभुः ।
एह्येहि सुमहाभाग द्रुमेऽस्मिन् सुखशीतले ॥
आवाभ्यां सह विप्र त्वं कथाभिर्धर्मसंस्थितः ।
अयं मम सहायस्तु स्वागतः शिल्पिनां वरः ॥
विश्वकर्मसमः साक्षान्निपुणः सर्वकर्मसु ।
मयोद्दिष्टां तु प्रतिमां करोत्येष तटं त्यज ॥
श्रुत्वैवं वचनं तस्य तदा राजा द्विजन्मनः ।
सागरस्य तटं त्यक्त्वा गत्वा तस्य समीपतः ॥
तस्थौ स नृपतिश्रेष्ठो वृक्षच्छायां सुशीतलाम् ।
ततस्तस्मै स विश्वात्मा तदाकारां तदाकृतिम् ॥
शिल्पमुख्याय विप्रेन्द्राः कुरुष्व प्रतिमा इति ।
कृष्णरूपं परं शान्तं पद्मपत्रायतेक्षणम् ॥
श्रीवत्सकौस्तुभधरं शङ्खचक्रगदाधरम् ।
गौरं गोक्षीरवर्णाभं द्वितीयं स्वस्तिकाङ्कितम् ॥
लाङ्गलास्त्रधरं देवमनन्ताख्यं महाबलम् ।
देवदानवगन्धर्वयक्षविद्याधरोरगैः ॥
न विज्ञातं हि तस्यान्तं तेनानन्त इति स्मृतः ।
भगिनीं वासुदेवस्य रुक्मवर्णां सुशोभनाम् ॥

तृतीयां वै सुभद्रां च सर्वलक्षणलक्षिताम् ।
श्रुत्वैवं वचनं तस्य विश्वकर्मा सुकर्मकृत् ॥
तत्क्षणं कारयामास प्रतिमाः शुभलक्षणाः ।
कुण्डलाभ्यां विचित्राभ्यां कर्णाभ्यां सुविराजिताः ॥
चक्रलाङ्गलविन्यस्तहस्ताभ्यां साधुसम्मताः ।
प्रथमं शुभ्रवर्णाभं शारदेन्दुसमप्रभम् ॥
सुरक्ताक्षमहाकायं जटाविकटमस्तकम् ।
नीलाम्बरधरं चोग्रं बलं बलमदोद्धतम् ॥
कुण्डलैकधरं दिव्यं महामुशलधारिणम् ।
द्वितीयं पुण्डरीकाक्षं नीलजीमूतसन्निभम् ॥
अतसीपुष्पसङ्काशं पद्मपत्रायतेक्षणम् ।
पीतवाससमत्युग्रं शुभं श्रीवत्सलक्षणम् ॥
चक्रपूर्णकरं दिव्यं सर्वपापहरं हरिम् ।
तृतीयां स्वर्णवर्णाभां पद्मपत्रायतेक्षणाम् ॥
विचित्रवस्त्रसंछन्नां हारकेयूरभूषिताम् ।
विचित्राभरणोपेतां रत्नहारावलम्बिताम् ॥
पीनोन्नतकुचां रम्यां विश्वकर्मा विनिर्ममे ।
महाराजाद्भुतं दृष्ट्वा क्षणेनैकेन निर्मिताः ॥
दिव्यवस्त्रयुगच्छन्ना नानारत्नैरलङ्कृताः ।
सर्वलक्षणसंपूर्णाः प्रतिमाः सुमनोहराः ॥
विस्मयं परमं कृत्वा इदं वचनमब्रवीत् ।
किं देवौ समनुप्राप्तौ द्विजरूपधरावुभौ ॥
उभौ चाद्भुतकर्माणौ देववृत्तान्तमानुषौ ।
देवौ वा मानुषौ वापि यक्षविद्याधरावुभौ ॥
किन्नु ब्रह्महृषीकेशौ वसू वा किमुताश्विनौ ।

न वेद्मि सत्यवद्भावौ मायारूपेण संस्थितौ ॥
युवां गतोऽस्मि शरणमात्मानं मे प्रकाशताम् ।

द्विज उवाच ।

नाहं देवो न यक्षो वा न दैत्यो न च देवराट् ।
न ब्रह्मा न च रुद्रोऽहं विद्धि मां पुरुषोत्तमम् ॥
आर्त्तिहा सर्वलोकानामनन्तबलपौरुषः ।
अर्चनीयो हि भूतानामन्तं यस्य न विद्यते ॥
पठ्यते सर्वशास्त्रेषु वेदेषु च निगद्यते ।
यदुक्तं ध्यानगम्येति वासुदेवेति योगिभिः ॥
अहमेव स्वयं ब्रह्मा अहं विष्णुः शिवोऽस्म्यहम् ।
इन्द्रोऽहं देवराजश्च जगत्संयमनो यमः ॥
पृथिव्यादीनि भूतानि त्रेताग्निर्हुतभुक् नृप ।
वरुणोऽपांपतिश्चाहं धरित्री च महीधराः ॥
यत्किञ्चिद्वाङ्मयं लोके जगत्स्थावरजङ्गमम् ।
चराचरं जगद्विश्वं ममान्यन्नास्ति किञ्चन ॥
प्रीतोऽहं ते नृपश्रेष्ठ वरं वरय सुव्रत ।
यदिष्टं तत् प्रयच्छामि हृदि यत्ते व्यवस्थितम् ॥
मद्दर्शनमपुण्यानां स्वप्नान्तेऽपि न जायते ।
त्वं पुनर्दृढभक्तित्वात् प्रत्यक्षं दृष्टवानसि ॥
श्रुत्वैवं वासुदेवस्य वचनं तस्य भो द्विजाः ।
रोमाञ्चिततनुर्भूत्वा इदं स्तोत्रं जगौ नृपः ॥

राजोवाच ।

श्रियः कान्त नमस्तेऽस्तु श्रीपते पीतवाससे ।
श्रीद श्रीश श्रीनिवास नमस्ते श्रीनिकेतन ॥
आद्यं पुरुषमीशानं सर्वेशं सर्वतोमुखम् ।

निष्कलं परमं देवं प्रणतोऽस्मि सनातनम् ॥
शब्दातीतं गुणातीतं भावाभावविवर्जितम् ।
निर्लेपं निष्कलं सूक्ष्मं सर्वज्ञं सर्वभावनम् ॥
प्रावृण्मेघप्रतीकाशं गोब्राह्मणहिते रतम् ।
सर्वेषामेव गोप्तारं व्यापिनं सर्वभावनम् ॥
शङ्खचक्रधरं देवं गदामुशलधारिणम् ।
नमस्ये वरदं देवं नीलोत्पलदलच्छविम् ॥
नागपर्यङ्कशयनं क्षीरार्णवनिवासिनम् ।
नमस्येऽहं हृषीकेशं सर्वपापहरं हरिम् ॥
पुनस्त्वां देवदेवेशं नमस्ये वरदं विभुम् ।
सर्वलोकेश्वरं विष्णुं मोक्षकारणमव्ययम् ॥
एवं स्तुत्वा तु तं देवं प्रणिपत्य कृताञ्जलिः ।
उवाच प्रणतो भूत्वा निपत्य वसुधातले ॥
प्रीतोऽसि यदि मे नाथ वृणोमि वरमुत्तमम् ।
देवासुराः सगन्धर्वा यक्षरक्षोमहोरगाः ॥
सिद्धविद्याधराः साध्याः किन्नरा गुह्यकास्तथा ।
ऋषयो ये महाभागा नानाशास्त्रविशारदाः ॥
परिव्राड्योगयुक्ताश्च वेदतत्त्वार्थचिन्तकाः ।
मोक्षमार्गविदो येऽन्ये ध्यायन्ति परमं पदम् ॥
निर्गुणं निर्मलं शान्तं यं पश्यन्ति मनीषिणः ।
तत्पदं गन्तुमिच्छामि त्वत्प्रसादात्सुदुर्लभम् ॥

भगवानुवाच ।

सर्वं भवतु भद्रं ते यथेष्टं सर्वमाप्नुहि ।
भविष्यति यथाकामं मत्प्रसादान्न संशयः ॥
दशवर्षसहस्राणि तथा नवशतानि च ।

अविच्छिन्नं महाराज्यं कुरु त्वं नृपसत्तम ॥
प्रपश्यसि परं दिव्यं दुर्लभं यत्सुरासुरैः ।
पूर्णं मनोरथं शान्तं गुह्यमव्यक्तमव्ययम् ॥
परात्परतरं सूक्ष्मं निर्लेपं निर्मलं ध्रुवम् ।
चिन्ताशोकविनिर्मुक्तं क्रियाकारणवर्जितम् ॥
तदहं दर्शयिष्यामि ज्ञेयाख्यं परमं पदम् ।
यं प्राप्य परमानन्दं प्राप्स्यसे परमां गतिम् ॥
कीर्त्तिश्च तव राजेन्द्र भवत्यत्र महीतले ।
यावद्धरा नभो यावत् यावच्चन्द्रार्कतारकाः ॥
यावत्सप्तसमुद्राः सप्तैव यावन्मेर्वादिपर्वताः ।
तिष्ठन्ति दिवि देवाश्च यावत् सर्वत्र चाव्ययाः ॥
इन्द्रद्युम्नसरो नाम तीर्थं यज्ञाङ्गसम्भवम् ।
यत्र स्नात्वा सकृत् लोकः शक्रलोकमवाप्स्यते ॥
दापयिष्यति यः पिण्डान् तटेऽस्मिन् सरसः शुभे ।
कुलैकविंशमुद्धृत्य शक्रलोकं गमिष्यति ॥
पूज्यमानोऽप्सरोभिश्च गन्धर्वैर्गीतनिःस्वनैः ।
विमानेन वसेत्तत्र यावदिन्द्राश्चतुर्दश ॥
सरसो दक्षिणे भागे नैर्ऋत्यां तु समाश्रिते ।
न्यग्रोधस्तिष्ठते तत्र तत्समीपे तु मण्डपः ॥
केतकीवनसञ्छन्नो नानापादपसङ्कुलः ।
आषाढस्य सिते पक्षे पञ्चम्यां पितृदैवते ॥
ऋक्षे नेष्यन्ति नस्तत्र नीत्वा सप्त दिनानि वै ।
मण्डपे स्थापयिष्यन्ति सुवेश्याभिः सुशोभनैः ॥
क्रीडाविशेषबहुलैर्नृत्यगीतमनोहरैः ।
चामरैः स्वर्णदण्डैश्च व्यजनै रत्नभूषणैः ॥

बीजयन्त्यस्तदास्मभ्यं स्थापयन्ति परमाङ्गनाः ।
ब्रह्मचारी यती चैव स्नातकाश्च द्विजोत्तमाः ॥
वानप्रस्था गृहस्थाश्च सिद्धाश्चान्ये च ब्राह्मणाः ।
नानावर्णपदैः स्तोत्रैर्ऋग्यजुः सामभिःस्वनैः ।
करिष्यन्ति स्तुतिं राजन् रामकेशवयोः पुनः ॥
ततः स्तुत्वा च दृष्ट्वा च सम्प्रणम्य च भक्तितः ।
नरो वर्षायुतं दिव्यं श्रीमद्धरिपुरे वसेत् ॥
पूज्यमानोऽप्सरोभिश्च गन्धर्वैर्गीतनिःस्वनैः ।
हरेरनुचरस्तत्र क्रीडते केशवेन वै ॥
विमानेनार्कवर्णेन रत्नहारेण शोभितः ।
सर्वकामसहाभोगस्तिष्ठते भुवनोत्तमे ॥
तपःक्षयादिहागत्य मनुष्यो ब्राह्मणो भवेत ।
कोटीधनपतिः श्रीमान् चतुर्वेदी भवेद्ध्रुवम् ॥
एवं तस्मै वरं दत्त्वा कृत्वा च समयं हरिः ।
जगामादर्शनं विप्राः सहितो विश्वकर्मणा ॥
स तु राजा तदा हृष्टो रोमाञ्चिततनूरुहः ।
कृतकृत्यमिवात्मानं मेने सन्दर्शनं हरेः ॥
ततः कृष्णं च रामं च सुभद्रां च वरप्रदाम् ।
रथैर्विमानसङ्काशैर्मणिकाञ्चनचित्रितैः ॥
सम्वाह्य तांस्ततो राजा राजमङ्गलनिःस्वनैः ।
आनयामास मतिमान् सामात्यः सपुरोहितः ॥
नानावादित्रनिर्घोषैर्नानावेदस्वनैः शुभैः ।
संस्थाप्य च शुभे देशे पवित्रे सुमनोहरे ॥
ततः शुभे तिथौ स्वर्क्षे काले च शुभलक्षणे ।
प्रतिष्ठां कारयामास सुमुहूर्त्ते द्विजैः सह ॥

यथोक्तेन विधानेन विधिदृष्टेन कर्मणा ।
आचार्यानुमते चैव सर्वं दत्त्वा महीपतिः ॥
आचार्याय ततो दत्त्वा दक्षिणां विधिवत्प्रभुः ।
ऋत्विग्भ्यश्च विधानेन तथान्येभ्यो धनं ददौ ॥
कृत्वा प्रतिष्ठां विधिवत् प्रासादे भवनोत्तमे ।
स्थापयामास तान् सर्वान् विधिदृष्टेन कर्मणा ॥
ततः सम्पूज्य विधिना नानापुष्पैः सुगन्धिभिः ।
सुवर्णमणिमुक्ताद्यैर्नानावस्त्रैः सुशोभनैः ॥
रत्नैश्च विविधैर्दिव्यैः शासनैर्ग्रामपत्तनैः ।
ददौ चार्थान् सविषयान् पुराणि नगराणि च ॥ इति ।

अथ पञ्चतीर्थविधानम् ।

ब्रह्मपुराणे,

मार्कण्डेयह्रदं गत्वा स्नात्वा चोदङ्मुखः शुचिः ।
निमज्जेत्त्रींस्तथा वारानिमं मन्त्रमुदीरयेत् ॥
संसारसागरे मग्नं पापग्रस्तमचेतनम् ।
त्राहि मां भगनेत्रघ्न त्रिपुरारे नमोऽस्तु ते ॥
नमः शिवाय शान्ताय सर्वपापहराय च ।
स्नानं करोमि देवेश मम नश्यतु पातकम् ॥
नाभिमात्रे जले स्थित्वा विधिवद्देवता ऋषीन् ।
तिलोदकेन मतिमान् पितॄनन्यांश्च तर्पयेत् ॥
स्नात्वैवं च तथाचम्य ततो गच्छेच्छिवालयम् ।
प्रविश्य देवतागारं कृत्वा तं त्रिः प्रदक्षिणम् ॥
मूलमन्त्रेण सम्पूज्य मार्कण्डेयस्य चेश्वरम् ।
अघोरेण च भो विप्राः प्रणिपत्य प्रसादयेत् ॥
ओंनमः शिवायेति मूलमन्त्रः । ओं अघोरेभ्योऽथ घोरेभ्यो

घोरतरेभ्यः । सर्वेभ्यः शर्वशर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः ॥
इत्यघोरमन्त्रः ।

त्रिलोचन नमस्तेऽस्तु नमस्ते शशिभूषण ।
त्राहि मां विश्वरूपाख्य महादेव नमोऽस्तु ते ॥
मार्कण्डेयह्रदे त्वेवं स्नात्वा दृष्ट्वा च शङ्करम् ।
दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥
पापैः सर्वैर्विनिर्मुक्तः शिवलोकं स गच्छति ।
तत्र भुक्त्वा वरान् भोगान् यावदाभूतसम्प्लवम् ॥
इह लोकं समासाद्य भवेद्विप्रो बहुश्रुतः ।
शाङ्करं योगमासाद्य ततो मोक्षमवाप्नुयात् ॥
कल्पवृक्षं ततो गत्वा तं त्रिः कृत्वा प्रदक्षिणम् ।
पूजयेत् परया भक्त्या मन्त्रेणानेन तं वटम् ॥
नमोऽव्यक्तस्वरूपाय महाप्रलयसाक्षिणे ।
महद्रूपोपविष्टाय न्यग्रोधाय नमोऽस्तु ते ॥
अमरस्त्वं सदा कल्प हरेश्चायतनं वट ।
न्यग्रोध हर मे पापं कल्पवृक्ष नमोऽस्तु ते ॥
सहसा मुच्यते पापाज्जीर्णा त्वचमिवोरगः ।
छायां तस्य समाक्रम्य कल्पवृक्षस्य भो द्विजाः ॥
ब्रह्महत्यां नरो जह्यात् पापेष्वन्येषु का कथा ।
दृष्ट्वा कृष्णाङ्गसम्भूतं ब्रह्मतेजोमयं परम् ॥
न्यग्रोधाकृतिकं विष्णुं प्रणिपत्य च भो द्विजाः ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति चाधिकम् ॥
तथा स्ववंशमुद्धृत्य विष्णुलोकं स गच्छति ।
वैनतेयं नमस्कृत्वा कृष्णस्य पुरतः स्थितम् ॥
सर्वपापविनिर्मुक्तस्ततो विष्णुपुरं व्रजेत् ।

वैनतेयनमस्कारमन्त्रः—

स्कन्दपुराणे,

छन्दोमय जगद्धामममानरूप त्रिवृद्वपुः ।
यज्ञरूप जगद्व्यापिन् प्रीयमाणाय ते नमः ॥

ततश्च ब्रह्मपुराणे,

दृष्ट्वा वटं वैनतेयं यः पश्येत्पुरुषोत्तमम् ।
सङ्कर्षणं सुभद्रां च भक्त्या पूज्य प्रसादयेत् ॥
नमस्ते हलधृग्राम नमस्ते मुशलायुध ।
नमस्ते रेवतीकान्त नमस्ते भक्तवत्सल ॥
नमस्ते बलिनां श्रेष्ठ नमस्ते धरणीधर ।
प्रलम्बारे नमस्तेऽस्तु त्राहि मां कृष्णपूर्वज ॥
एवं प्रसाद्य चानन्तमजेयं त्रिदशार्चितम् ।
कैलाशशिखराकारं चन्द्रात् कान्ततराननम् ॥
नीलवस्त्रधरं देवं फणाविकटमस्तकम् ।
महाबलं हलधरं कुण्डलैकविभूषितम् ॥
रौहिणेयं नरो भक्त्या लभेदभिमतं फलम् ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥
आभूतसम्प्लवं यावद्भुक्त्वा तत्र सुखं बुधः ।
पुण्यक्षयादिहागत्य प्रवरे योगिनां कुले ॥
ब्राह्मणप्रवरो भूत्वा सर्वशास्त्रार्थपारगः ।
ज्ञानं तत्र समासाद्य मुक्तिं प्राप्नोति दुर्लभाम् ॥
एवमभ्यर्च्य हलिनं ततः कृष्णं विचक्षणः ।
द्वादशाक्षरमन्त्रेण पूजयेत्सुसमाहितः ॥
द्विषट्कवर्णमन्त्रेण भक्त्या कृष्णं जगद्गुरुम् ।
सम्पूज्य गन्धपुष्पाद्यैः प्रणिपत्य प्रसादयेत् ॥

पूजाधिकारिणः-

**स्कन्दपुराणे,**

पूजाधिकारिणः सर्वे ब्रह्मक्षत्रविशस्तथा ।
अन्येषां दर्शनं भक्त्या तथा नामानुकीर्त्तनम् ॥ इति ।

पूजा च द्वादशाक्षरमन्त्रेणमन्त्रान्तरेणापि । तथाच-

**स्कन्दपुराणे,**

पूजयेन्मन्त्रराजेन सूक्तेन पुरुषस्य च ।
द्वादशाक्षरमन्त्रेण यत्र वा जायते रुचिः ॥

द्वादशाक्षरेति फलविशेषबलेन । तथा च-

**तत्रैव,**

गत्वा गत्वा निवर्त्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्त्तन्ते द्वादशाक्षरचिन्तकाः ॥
यत्सर्वं वैष्णवं कर्म प्रतिष्ठादिप्रकल्पितम् ।
तदनेनैव कर्त्तव्यं विष्णुप्रीतिकराणि वै ।
सर्वेषां महिमावाप्तिरस्य संसेवनाद्भवेत् ॥
स्वायम्भुवो मनुरिमं जजाप मन्त्रमुत्तमम् ।
प्रजापतिस्तं सम्प्राप्य ससर्ज सचराचरम् ॥ इति ।

ओंनमो भगवते वासुदेवायेति द्वादशाक्षरो मन्त्रः । पूजानन्तरं प्रसादनम्-

**ब्रह्मपुराणे,**

जय कृष्ण जगन्नाथ जय सर्वाघनाशन ।
जय चाणूरकेशिघ्न जय कंसनिषूदन ॥
जय पद्मपलाशाक्ष जय चक्रगदाधर ।
जय नीलाम्बुदश्याम जय सर्वसुखप्रद ॥
जय देव जगत्पूज्य जय संसारनाशन ।

जय लोकपते नाथ जय वाञ्छाफलप्रद ॥
संसारसागरे घोरे निस्सारे दुःखफेनिले।
क्रोधग्राहाकुले रौद्रे विषयोदकसम्प्लुते ॥
नानारोगोर्मिकलिले मोहावर्त्तसुदुस्तरे।
निमग्नोऽहं सुरश्रेष्ठ त्राहि मां पुरुषोत्तम ॥
एवं प्रसाद्य देवेशं वरदं भक्तवत्सलम्।
सर्वपापहरं देवं सर्वकामफलप्रदम् ॥
पीनांसं द्विभुजं कृष्णं पद्मपत्रायतेक्षणम्।
महोरस्कं महाबाहुं पीतवस्त्रं शुभाननम् ॥
शङ्खचक्रगदापाणिं मुकुटाङ्गदभूषणम्।
सर्वलक्षणसंयुक्तं वनमालाविभूषितम् ॥
दृष्ट्वा नरोऽञ्जलिं कृत्वा दण्डवत्प्रणिपत्य च।
अश्वमेधसहस्राणां फलं प्राप्नोति भो द्विजाः ॥
यत्फलं सर्वतीर्थेषु स्नानदाने प्रकीर्तितम्।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥
यत्फलं सर्ववेदेषु सर्वयज्ञेषु यत्फलम्।
तत्फलं समवाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥
यत्फलं सर्वदानेन व्रतेन नियमेन च।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥
तपोभिर्विविधैरुग्रैस्तपोभिर्यदुपार्जितम्।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥
यत्फलं ब्रह्मचर्येण सम्यक्चीर्णेन कीर्त्तितम्।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥
गार्हस्थ्येन यथोक्तेन यत्फलं समुदाहृतम्।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥

किञ्चात्र बहुनोक्तेन माहात्म्यं तस्य भो द्विजाः ।
दृष्ट्वा कृष्णं नरो भक्त्या मोक्षं प्राप्नोति दुर्लभम् ॥
पापैर्विमुक्तः शुद्धात्मा कल्पकोटिसमुद्भवैः ।
श्रिया परमया युक्तः सर्वैः समुदितो गुणैः ॥
सर्वकामसमृद्धेन विमानेन सुवर्चसा ।
त्रिसप्तकुलमुद्धृत्य नरो विष्णुपुरं व्रजेत् ॥
ततः कल्पशतं यावत् भुक्त्वा भोगान् मनोरमान् ।
गन्धर्वाप्सरसैः सार्द्धं यथा विष्णुश्चतुर्भुजः ॥
च्युतस्तस्मादिहायातो विप्राणां प्रवरे कुले ।
सर्वज्ञः सर्ववेदी च जायते गतमत्सरः ॥
स्वधर्मनिरतः शान्तो दाता भूतहिते रतः ।
आसाद्य वैष्णवं ज्ञानं ततो मुक्तिमवाप्नुयात् ॥

अत्र यद्यपि 'दृष्ट्वा प्रणम्य च'इति श्रवणान्मिलितयोरेव दर्शनप्रणामयोरुक्तफलान्वयः प्रत्येकमन्वये वाक्यभेदापत्तेः । तथापि शेषे दर्शनमात्र एव मोक्षादिफलोपसंहारात् प्रत्येकमेव फलान्वय इत्याहुः । वस्तुतस्तु यत्र 'दृष्ट्वा प्रणम्य च'इत्यादि तत्र समुच्चयेन तत्फलमेकवाक्यत्वे लाघवात् । यत्र तु दर्शनमात्रस्यैव मोक्षादिफलमुक्तं तत्र तावन्मात्रस्यैव तत्फलं तद्वचनबलादेवेति परमार्थः ।

तथा,

ततः सम्पूज्य मन्त्रेण सुभद्रां भक्तवत्सलाम् ।
प्रसादयेच्च भो विप्राः प्रणिपत्य कृताञ्जलिः ॥
नमस्ते सर्वगे देवि नमस्ते शुभसौख्यदे ।
त्राहि मां पद्मपत्राक्षि कात्यायनि नमोऽस्तु ते ॥

एवं प्रसाद्य तां देवीं जगद्धात्रीं जगद्धिताम् ।
बलदेवस्य भगिनीं सुभद्रां वरदां शिवाम् ॥
कामगेन विमानेन नरो विष्णुपुरं व्रजेत् ।
आभूतसम्प्लवं यावत् क्रीडित्वा तत्र देववत् ॥
इह मानुषतां प्राप्तो ब्राह्मणो वेदविद्भवेत् ।
प्राप्य योगं हरेस्तत्र मोक्षं च लभते ध्रुवम् ॥
एवं दृष्ट्वा बलं कृष्णं सुभद्रां प्रणिपत्य च ।
धर्मं चार्थं च मोक्षं च कामं च लभते ध्रुवम् ॥
निष्क्रम्य देवतागारात् कृतकृत्यो भवेन्नरः ।
प्रणम्यायतनं पश्चात् व्रजेत्तत्र समाहितः ॥
इन्द्रनीलमयो विष्णुर्यत्रास्ते वालुकावृतः ।
अन्तर्द्धानेऽपि तं नत्वा ततो विष्णुपुरं व्रजेत् ॥
सर्वदेवमयो योऽसौ हतवानसुरोत्तमम् ।
आस्ते स तत्र भो विप्राः सिंहार्द्धकृतविग्रहः ॥
भक्त्या दृष्ट्वा तु तं देवं प्रणम्य नरकेसरिम् ।
मुच्यते पातकैर्मर्त्यः समस्तैर्नात्र संशयः ।
नरसिंहस्य ये भक्ता भवन्ति भुवि मानवाः ॥
न तेषां दुष्कृतं किञ्चित् फलं च स्याद्यदीप्सितम् ।
तस्मात्सर्वप्रयत्नेन नरसिंहं समाश्रयेत् ॥
धर्मार्थकाममोक्षाणां फलं यस्मात्प्रयच्छति ।
तस्मात्तु मुनिशार्दूला भक्त्या सम्पूजयेत्सदा ॥
मृगराजं महावीर्यं सर्वकामफलप्रदम् ।
ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजातयः ॥
सम्पूज्य तं सुरश्रेष्ठं नरसिंहवपुर्धरम् ।
मुच्यन्ते चाशुभैर्दुःखैर्जन्मकोटिसमुद्भवैः ॥

द्रोपलक्षकम्। ब्रह्मपुराणे प्राक् त्रयाणामेव तत्र पूजाप्रतिपादनात्। अत एव पञ्चतीर्थीकरणे द्वौ देवौ त्रीणि तीर्थानीति पठन्ति

अयमत्र क्रमः। आदौ मार्कण्डेयह्रदस्नानादि। ततो मार्कण्डेयेश्वरदर्शनं तत्पूजनं च। ततोऽक्षयवटे गत्वा तत्प्रदक्षिणप्रणामपूजादि। ततः कृष्णपुरस्थवैनतेयनमस्कारः। ततो विष्णोरायतनद्वारि पुरुषोत्तमसङ्कर्षणसुभद्राणां दर्शनं कुर्यात्। ततः सङ्कर्षणपूजा। ततः पुरुषोत्तमपूजा। ततः पुरुषोत्तमदर्शनम्। ततः सुभद्रापूजा। ततः प्रत्येकं प्रसादनम्। ततः पुरुषोत्तमदक्षिणेऽक्षयवटच्छायाया वालुकाच्छन्ननीलमाधवप्रतिमाप्रणामः। ततो नरसिंहपूजा। ततोऽनन्ताख्यवासुदेवदर्शनादि। ततः श्वेतमाधवप्रणामादि। ततः श्वेतगङ्गास्नानपूर्वकमत्स्यमाधवदर्शनादि। ततः पूर्वोक्तरीत्या सागरस्नानादि। तत इन्द्रद्युम्नसरःस्नानादि। तत्तद्वाक्यानुसारात् सङ्कल्पो विधेय इति[1]।

ब्रह्मपुराणे,

एवं कृत्वा पञ्चतीर्थीमेकादश्यामुपोषितः।
ज्येष्ठशुक्लस्य द्वादश्यां यः पश्येत्पुरुषोत्तमम्॥
स पूर्वोक्तं फलं प्राप्य क्रीडित्वा चाच्युतान्वये।
प्रयाति परमं स्थानं यस्मान्नावर्त्तते पुनः॥

तत्रैव,

शृणुध्वं मुनिशार्दूलाः प्रवक्ष्यामि समासतः।
ज्येष्ठमासं यथा तेभ्यः प्रशंसामि पुनः पुनः॥
पृथिव्यां यानि तीर्थानि सरितश्च सरांसि च।
पुष्करिण्यस्तडागानि वाप्यः कूपास्तथा ह्रदाः॥
नानानद्यः समुद्राश्च सप्ताहं पुरुषोत्तमे।

१. अत्र किञ्चित् त्रुटितमस्ति।

ज्येष्ठशुक्लदशम्यादि प्रत्यक्षं यान्ति सर्वदा ॥
स्नानदानादिकं तस्माद्देवताप्रेक्षणं द्विजाः ।
यत्किञ्चित्क्रियते तत्र तस्मिन् कालेऽक्षयं भवेत् ॥
शुक्लपक्षस्य दशमी ज्येष्ठे मासि द्विजोत्तमाः ।
हरते दश पापानि तस्माद्दशहरा स्मृता ॥
यस्तस्यां हलिनं कृष्णं पश्येद्भद्रां सुसंयतः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥
उत्तरे दक्षिणे विप्रास्त्वयने पुरुषोत्तमम् ।
दृष्ट्वा रामं सुभद्रां च विष्णुलोकं व्रजेन्नरः ॥
नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् ।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥
विष्णोस्तु दिवसे प्राप्ते पञ्चतीर्थीं विधानतः ।
कृत्वा सङ्कर्षणं कृष्णं दृष्ट्वा भद्रां च भो द्विजाः ॥
नरः समस्तयज्ञानां फलं चाप्नोति दुर्लभम् ।
विमुक्तः सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥
यः पश्यति तृतीयायां कृष्णं चन्दनभूषितम् ।
वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् ॥
ज्येष्ठ्यां ज्येष्ठर्क्षयुक्तायां यः पश्येत्पुरुषोत्तमम् ।
कुलैकविंशमुद्धृत्य विष्णुलोकं स गच्छति ।
यदा भवेन्महाज्येष्ठी राशिनक्षत्रयोगतः ॥
प्रयत्नेन तदा मर्त्यैर्गन्तव्यं पुरुषोत्तमम् ।
कृष्णं दृष्ट्वा महाज्येष्ठ्यां रामं भद्रां च भो द्विजाः ॥
नरो द्वादशयात्रायाः फलं प्राप्नोति चाधिकम् ।
तथा,
पृथिव्यां सर्वतीर्थेषु हरेश्चायतनेषु च ॥

सागरेषु च शैलेषु नदीषु च सरःसु च ॥
यत्फलं स्नानदानेन राहुग्रस्ते दिवाकरे ।
तत्फलं कृष्णमालोक्य महाज्यैष्ठ्यां लभेन्नरः ॥

अथ ज्यैष्ठ्यां कृष्णस्नानविधिः ।

ब्रह्मपुराणे,

तस्माज्ज्यैष्ठ्यां समुद्धृत्य हेमाद्यैः कलशैर्जलम् ।
कृष्णरामाभिषेकार्थं सुभद्रायाश्च भो द्विजाः ॥
कृत्वा सुशोभितं मञ्चं पताकाभिरलङ्कृतम् ।
सुदृढं सुखसञ्चारं वस्त्रैः पुष्पैरलङ्कृतम् ॥
विस्तीर्णं धूपितं धूपैः स्नानार्थं रामकृष्णयोः ।
सितवस्त्रपरिच्छन्नं मुक्ताहारावलम्बितम् ॥
तत्र नानाविधैर्वाद्यैः कृष्णं नीलाम्बरं द्विजाः ।
स्थाप्य मञ्चे सुभद्रां च जयमङ्गलनिःस्वनैः ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च जातिभिः ।
अनेकशतसाहस्रैर्वृतं स्त्रीपुरुषैर्द्विजाः ॥
गृहस्थाः स्नातकाश्चैव यतयो ब्रह्मचारिणः ।
स्नापयन्ति तदा कृष्णं मञ्चस्थं सहलायुधम् ॥
तथा समस्ततीर्थानि पूर्वोक्तानि द्विजोत्तमाः ।
स्वोदकैः पुष्पमिश्रैश्च स्नापयन्ति पृथक्पृथक् ॥
पश्चात्पटहसङ्घाद्यैर्भेरीमुरजनिस्वनैः ।
काहलैस्तालशब्दैश्च मृदङ्गैर्विविधैस्तथा ॥

तथा,

तस्मिन्काले तु ये मर्त्याः पश्यन्ति पुरुषोत्तमम् ।
बलभद्रं सुभद्रां च ते यान्ति पदमव्ययम् ॥

तथा,

स्नातं पश्यन्ति ये कृष्णं व्रजन्तं दक्षिणामुखम्।
ब्रह्महत्यादिभिः पापैर्मुच्यन्ते नात्र संशयः॥
स्कन्दपुराणे,
अधिवासादिकं तत्र यैः कृतं स्नानकर्मणि।
तेषां श्रद्धामुदा युक्तः प्रदद्याद्दक्षिणाः पृथक्॥
ब्राह्मणेभ्यश्च मिष्टान्नं वस्त्रालङ्करणादिकम्।
प्रदद्याच्छ्रद्धया युक्तो दीनानाथांश्च तर्पयेत्।
ये द्रष्टुमागताः स्नानं जीवन्मुक्तास्तु ते ध्रुवम्॥
तान्यथाशक्ति वै राजा मानयेत्प्रीतये हरेः।
स्नातावशिष्टतोयेन स्नानाद्भद्रासनस्थिता॥
नारी वा पुरुषो वापि तस्य पुण्यं वदामि वः।
कल्पः स्याच्चिररोगार्त्तो ह्यपमृत्युं जयेदसौ॥
अपुत्रा मृतवत्सा वा वन्ध्या वापि लभेत् सुतम्।
सुभगः सर्वलोकानां निर्द्धनो धनवान् भवेत्॥
गर्भिणी लभते पुत्रं दीर्घायुर्गुणवत्तरम्।
गङ्गादिसर्वतीर्थानां स्नानजं फलमश्नुते॥
कुष्ठव्याधियुतो यो वै सर्वाङ्गं परिलेपयेत।
नश्यते नात्र सन्देहो वाग्मी स्याच्छास्त्रकोविदः॥
नातः पवित्रं भोविप्राः स्वर्धुन्यम्भः प्रकीर्त्तितम्॥
यद्यत्कामयते चित्ते ऐहिकामुष्मिकं तथा।
विष्णोः स्नानावशेषेण तोयेन लभते ध्रुवम्॥ इति।

## अथात्र प्राणत्यागफलम्।

ब्रह्मपुराणे,
पुरमध्ये पुनर्भाति मन्दिरं रत्नभूषितम्।
इत्याद्युपक्रम्य—

ते तत्र पुरुषा यान्ति ये मृताः पुरुषोत्तमे ॥
क्षेत्रं च दुर्लभं लोके कीर्तितं पुरुषोत्तमम् ।
त्यक्त्वा यत्र नरो देहं याति सालोक्यतां हरेः ॥
कृमिकीटपतङ्गाश्च तिर्य्यग्योनिगताश्च ये ।
तत्र देहं परित्यज्य तेऽपि यान्ति परां गतिम् ॥

तथा,

पथि श्मशाने गृहमण्डपे वा रथ्याप्रदेशेष्वपि यत्र तत्र ।
इच्छन्ननिच्छन्नपि तत्र देहं सन्त्यज्य मोक्षं लभते मनुष्यः ॥
देहं त्यजन्ति पुरुषा ये तत्र पुरुषोत्तमे ।
कल्पवृक्षं समासाद्य मुक्तास्ते नात्र संशयः ॥
वटसागरयोर्मध्ये ये त्यजन्ति कलेवरम् ।
ते दुर्लभं परं मोक्षं प्राप्नुवन्ति न संशयः ॥ इति

अथ कृत्तिवासः क्षेत्रम् ।

ब्रह्मपुराणे,

तथा चैवोत्कले देशे कृत्तिवासा महेश्वरः ।
सर्वपापहरं तस्य क्षेत्रं परमदुर्लभम् ॥
लिङ्गकोटिसमायुक्तं वाराणस्या समं शुभम् ।
एकाम्रकेतिविख्यातं तीर्थाष्टकसमन्वितम् ॥
तीर्थं बिन्दुसरो नाम तस्मिन् क्षेत्रे द्विजोत्तमाः ।
देवानृषीन्मनुष्यांश्च पितॄन् सन्तर्पयेत्ततः ॥
तिलोदकेन विधिना नामगोत्रविधानतः ।
स्नात्वैवं विधिवत्तत्र सोऽश्वमेधफलं लभेत् ॥
ग्रहोपरागे सङ्क्रान्त्यां विषुवे अयने तथा ।
युगादौ षडशीत्यां च तथान्यत्र शुभे तिथौ ॥

ये तत्र दानं विप्रेभ्यः प्रयच्छन्ति धनाधिकम् ।
अन्यतीर्थाच्छतगुणं फलं ते प्राप्नुवन्ति वै ॥
पिण्डं ये सम्प्रयच्छन्ति पितृभ्यस्तत्सरस्तटे ।
पितॄणामक्षयां तृप्तिं ते कुर्वन्ति न संशयः ॥
ततः शम्भोर्गृहं गच्छेद्वाग्यतः संयतेन्द्रियः ।
प्रविश्य पूजयेत् पूर्वं कृत्वा तत्र प्रदक्षिणम् ॥
घृतक्षीरादिभिः स्नानं कारयित्वा भवं शुचिः ।
चन्दनेन सुगन्धेन विलिप्य कुङ्कुमेन च ॥
तत्र सम्पूजयेद्देवं चन्द्रमौलिमुमापतिम् ।
पुष्पैर्नानाविधैर्मेध्यैर्विल्वार्ककमलादिभिः ॥
आगमोक्तेन मन्त्रेण वेदोक्तेन च शङ्करम् ।
अदीक्षितश्च नाम्नैव मूलमन्त्रेण चार्चयेत् ॥
एवं सम्पूज्य विधिवद्देवदेवमुमापतिम् ।
सर्वपापविनिर्मुक्तो रूपयौवनगर्वितः ॥
कुलैकविंशमुद्धृत्य दिव्याभरणभूषितः ।
सौवर्णेन विमानेन किङ्किणीजालमालिना ॥
उपगीयमानो गन्धर्वैरप्सरोभिरलङ्कृतः ।
उद्योतयन् दिशः सर्वाः शिवलोकं स गच्छति ॥
भुक्त्वा तत्र सुखं भोगं मनसः प्रीतिदायकम् ।
तल्लोकवासिभिः सार्द्धं यावदाभूतसम्प्लवम् ॥
ततस्तस्मादिहायातः पृथिव्यां पुण्यसङ्कुले ।
जायते योगिनां गेहे चतुर्वेदी द्विजोत्तमः ॥
योगं पाशुपतं प्राप्य ततो मोक्षमवाप्नुयात् ।
शयनोत्थापने चैव सङ्क्रान्त्यामयने तथा ॥
अशोकाख्यां तथाष्टम्यां पवित्रारोपणे तथा ।

ये च पश्यन्ति देवेशं कृत्तिवाससमुत्तमम् ॥
विमानेनार्कवर्णेन शिवलोकं व्रजन्ति ते ।
सर्वकालेऽपि तं देवं ये पश्यन्ति सुमेधसः ॥
तेऽपि पापविनिर्मुक्ताः शिवलोकं व्रजन्ति वै ।
देवस्य पश्चिमे पूर्वे दक्षिणे चोत्तरे तथा ॥
योजनद्वितयं सार्द्धं क्षेत्रं तद्भुक्तिमुक्तिदम् ।
देवाच्चतुर्दिक्षु सार्द्धयोजनद्वितयं क्षेत्रप्रमाणमित्यर्थः ।
तस्मिन् क्षेत्रवरे रम्ये भास्करेश्वरसंज्ञितम् ।
पश्यन्ति तं तु ये देवं स्नात्वा कुण्डे महेश्वरम् ॥
आदित्येनार्चितं पूर्वं देवदेवं त्रिलोचनम् ।
सर्वपापविनिर्मुक्ता विमानवरमास्थिताः ॥
उपगीयमाना गन्धर्वैः शिवलोकं व्रजन्ति वै ।
भुक्त्वा तत्र वरान् भोगान् यावदाभूतसम्प्लवम् ॥
पुण्यक्षयादिहागत्य धार्मिकाश्च भवन्ति वै ।
यज्वानो दानशीलाश्च पृथिव्याः पतयस्तथा ॥
मुक्तीश्वरं च सिद्धेशं स्वर्णजालेश्वरं तथा ।
परमेश्वरं च विख्यातं शुभं चाम्रातिकेश्वरम् ॥
ये पश्यन्ति स्वर्चयित्वा स्नात्वा बिन्दुसरोऽम्भसि ।
सर्वपापविनिर्मुक्ता विमानवरमास्थिताः ॥
उपगीयमाना गन्धर्वैः शिवलोकं व्रजन्ति वै ।
तथा,
एकाम्रके शिवक्षेत्रे वाराणसीसमे शुभे ।
स्नानं करोति यस्तत्र स लोकं लभते शुभम् ॥
यस्मिंस्तस्मिंस्तिथौ विप्राः स्नात्वा बिन्दुसरोऽम्भसि ।
पश्येद्देवं त्रिरूपाक्षं देवीं च वरदां शिवाम् ॥

गणं चण्डं कार्त्तिकेयं गणेशं वृषभं तथा।
कल्पद्रुमं च सावित्रीं शिवलोकं स गच्छति॥ इति।

अथ कोणार्कविधिः।

ब्रह्मपुराणे,

एवं मया मुनिश्रेष्ठाः क्षेत्रं प्रोक्तं सुदुर्लभम्।
कोणार्कस्योदधेस्तीरे भुक्तिमुक्तिफलप्रदम्॥
स्नात्वैवं सागरे दत्त्वा सूर्य्यायार्घं प्रणम्य च।
नरो वा यदि वा नारी सर्व्वकामफलं लभेत्॥
ततः सूर्य्यालयं गच्छेत् पुष्पमादाय वाग्यतः।
प्रविश्य पूजयेद्भानुं कुर्य्यात्तं त्रिः प्रदक्षिणम्॥
तान्त्रिकैर्वैदिकैर्मन्त्रैर्भक्त्या कोणार्कमर्च्चयेत्।
गन्धैः पुष्पैस्तथा धूपैर्दीपैर्नैवेद्यकैस्तथा॥
दण्डवत्प्रणिपातैश्च जयशब्दैस्तथापरैः।
एवं सम्पूज्य कोणार्कं सहस्रांशुं जगत्प्रभुम्॥
दशानामश्वमेधानां फलं प्राप्नोति मानवः।
सर्व्वपापविनिर्मुक्तो युवा दिव्यवपुर्धरः॥
सप्तावरान् सप्त परान् वंशानुद्धृत्य भोद्विजाः।
विमानेनार्कवर्णेन कामगेन सुवर्च्चसा॥
उपगीयमानो गन्धर्व्वैः सूर्य्यलोकं स गच्छति।
भुक्त्वा तत्र वरान् भोगान् यावदभूतसम्प्लवम्॥
पुण्यक्षयादिहायातः प्रवरे योगिनां कुले।
चतुर्वेदी भवेद्विप्रः स्वधर्म्मनिरतः शुचिः॥
योगं विवस्वतः प्राप्य ततो मोक्षमवाप्नुयात्।
चैत्रे मासि सिते पक्षे यात्रां दमनभञ्जिकाम्॥
यः करोति नरस्तत्र पूर्व्वोक्तं च फलं लभेत्।

शयनोत्थापनयोर्भानोः सङ्क्रान्त्यां विषुवेऽयने ॥
वारे रवेस्तिथौ चैव पर्वकालेऽथवा द्विजाः ।
ये तत्र यात्रां कुर्वन्ति पुरुषाः संयतेन्द्रियाः ॥
विमानेनार्कवर्णेन सूर्यलोकं व्रजन्ति ते ।
यस्तत्र सवितुः क्षेत्रे प्राणांस्त्यजति मानवः ॥
स सूर्यलोकमास्थाय देववन्मोदते दिवि ।
पुनर्मानुषतां प्राप्य राजा भवति धार्मिकः ॥
योगं रवेः समासाद्य ततो मोक्षमवाप्नुयात् ।
तथा कोणार्कक्षेत्रमुपक्रम्य—
आस्ते तत्र महादेवस्तीरे नदनदीपतेः ।
रामेश्वर इति ख्यातः सर्वकामफलप्रदः ॥
तत्रार्चयन्ति कामारिं स्नात्वा सम्यङ्महोदधौ ।
गन्धैः पुष्पैस्तथा धूपैर्दीपैर्नैवेद्यकैर्वरैः ॥
राजसूयफलं प्राप्य वाजिमेधफलं तथा ।
प्राप्नुवन्ति महात्मानः संसिद्धिं परमां तथा ॥
कामगेन विमानेन किङ्किणीजालमालिना ।
उपगीयमाना गन्धर्वैः शिवलोकं व्रजन्ति ते ॥
आभूतसम्प्लवं यावत् भुक्त्वा भोगाननुक्रमात् ।
पुण्यक्षयादिहागत्य चातुर्वेदा भवन्ति ते ॥
शाङ्करं योगमास्थाय ततो मोक्षं व्रजन्ति ते । इति ।

इति कोणार्कविधिः ।

## अथ विरजक्षेत्रम् ।

ब्रह्मपुराणे,

ब्रह्मोवाच ।

विरजे विरजा माता ब्रह्माणी सुप्रतिष्ठिता ।

यस्याः सन्दर्शनान्मर्त्यः पुनात्यासप्तमं कुलम् ॥
सकृत् दृष्ट्वा तु तां देवीं भक्त्याऽऽपूज्य प्रणम्य च ।
नरः स्ववंशमुद्धृत्य मम लोकं स गच्छति ॥
अन्याश्च तत्र तिष्ठन्ति विरजे लोकमातरः ।
सर्वपापहरा देव्यो वरदा भक्तवत्सलाः ॥
आस्ते वैतरणी तत्र सर्वपापहरा नदी ।
यस्यां स्नात्वा नरश्रेष्ठः सर्वपापैः प्रमुच्यते ॥
आस्ते स्वयम्भूस्तत्रैव क्रोडरूपी हरिः स्वयम् ।
दृष्ट्वा प्रणम्य तं भक्त्या नरो विष्णुपुरं व्रजेत् ॥
कपिलागोग्रहे सोमे तीर्थे चालाबुसंज्ञके ।
मृत्युञ्जये क्रोडतीर्थे वासुकीसिद्धकेश्वरे ॥
तीर्थेष्वेतेषु मतिमान् विरजो नियतेन्द्रियः ।
कृत्वाष्टतीर्थीं विधिवत् स्नात्वा देवान् प्रणम्य च ॥
सर्वपापविनिर्मुक्तो विमानवरमास्थितः ।
उपगीयमानो गन्धर्वैर्मम लोके महीयते ॥
विरजे यो मम क्षेत्रे पिण्डदानं करोति वै ।
स करोत्यक्षयां तृप्तिं पितॄणां नात्र संशयः ॥
मम क्षेत्रे मुनिश्रेष्ठा विरजे ये कलेवरम् ।
परित्यजन्ति पुरुषास्ते मोक्षं प्राप्नुवन्ति वै ॥ इति ।

## अथ कामरूपे देवीमाहात्म्यम् ।

कालिकापुराणे,
वाराणस्यां सदा पूजा सम्पूर्णफलदायिनी ।
ततस्तु द्विगुणा प्रोक्ता पुरुषोत्तमसन्निधौ ॥
ततोऽपि द्विगुणा प्रोक्ता द्वारवत्यां विशेषतः ।
सर्वक्षेत्रेषु तीर्थेषु पूजा द्वारवतीसमा ॥

विन्ध्ये शतगुणा प्रोक्ता गङ्गायामपि तत्समा ।
आर्यावर्त्ते मध्यदेशे ब्रह्मावर्त्ते तथैव च ॥
विन्ध्यवत्फलदा पूजा प्रयागे पुष्करे तथा ।
ततश्चतुर्गुणा प्रोक्ता करतोयानदीजले ॥
तस्माच्चतुर्गुणफला नन्दिकुण्डे च भैरव ।
ततश्चतुर्गुणा प्रोक्ता जल्पीशेश्वरसन्निधौ ॥
तत्र सिद्धेश्वरीयोनौ ततोऽपि द्विगुणा स्मृता ।
ततश्चतुर्गुणा प्रोक्ता लौहित्यनदपाथसि ॥
तत्समा कामरूपे च सर्वत्रैव जले स्थले ।
सर्वश्रेष्ठो यथा विष्णुर्लक्ष्मीः सर्वोत्तमा यथा ॥
देवीपूजा तथा शस्ता कामरूपे सुरालये ।
देवीक्षेत्रं कामरूपे विद्यतेऽन्यत्र तत्समम् ॥
अन्यत्र विरला देवी कामरूपे गृहे गृहे ।
ततः शतगुणा प्रोक्ता नीलकूटस्य मस्तके ॥
ततोऽपि द्विगुणा प्रोक्ता हेमके शिवलिङ्गके ।
ततोऽपि द्विगुणा प्रोक्ता शैलपुत्र्यादियोनिषु ॥
ततः शतगुणा प्रोक्ता कामाख्यायोनिमण्डले ।
कामाख्यायां महामायापूजां यः कृतवान् सकृत् ॥
स चेह लभते कामान् परत्र शिवरूपताम् ।
न तस्य सदृशोऽन्योऽस्ति कृत्यं तस्य न विद्यते ॥
वाञ्छितार्थमवाप्येह चिरायुरभिजायते ।
वायोरिव गतिस्तस्य भवेदन्यैरवारिता ॥
सङ्ग्रामे शास्त्रवादे च दुर्जयः स च जायते ।
वैष्णवीतन्त्रमन्त्रेण कामाख्यायोनिमण्डले ॥
सकृत्तु पूजनं कृत्वा फलं दशगुणं भवेत् । इति ।

योगिनीतन्त्रे,

अष्टषष्टिषु शैलेषु मध्य उच्चैश्च यो गिरिः ।
मन्दाराख्यस्तु स शैलो गत्वा तत्र समाहितः ॥
पूर्वभागे तु शैलस्य स्थितो मधुरिपुर्हरिः ।
दर्शनात्तस्य देवस्य कुलानां तारयेच्छतम् ॥ इति ।

## अथ करतोयामाहात्म्यम् ।

भारते,

करतोयां समासाद्य त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ इति ।
करतोये सदानीरे सरिच्छ्रेष्ठे सुविश्रुते ।
पौण्ड्रान् प्लावयसे नित्यं पापं हर करोद्भवे ॥
इति स्नानमन्त्रः ।

## अथ ब्रह्मपुत्रमाहात्म्यम् ।

भारते,

रामस्य च प्रसादेन तीर्थराजं कृतं पुरा ।
तं लोहित्यं समासाद्य विन्देद्बहुसुवर्णकम् ॥
बहुसुवर्णो यज्ञविशेषः । स्वार्थे कः ।

योगिनीतन्त्रे,

लौहित्यं नाम तत्तीर्थं स्नानान्नश्यति पातकम् ।
स्नानेन तीर्थराजस्य तथा सर्वाघसङ्क्षयः ॥
तीर्थराजः स च पुनः सर्वतीर्थफलप्रदः ।
भूतले यानि तीर्थानि सरितश्च सरांसि च ॥
विशन्ति सर्वतीर्थानि तेनासौ श्रेष्ठतां गतः ।
राजा समस्ततीर्थानां सागरः सरितां पतिः ॥
तस्मात् समस्ततीर्थेभ्यः श्रेष्ठोऽसौ सर्वकामदः ।

तमो नाशं यथाऽभ्येति भास्करेऽभ्युदिते प्रिये ॥
स्नानेन तीर्थराजस्य तथा सर्वाघसङ्क्षयः ।
तीर्थराजसमं तीर्थं न भूतं न भविष्यति ॥
अधिष्ठानं सदा यत्र प्रभोर्नारायणस्य च ।
कः शक्नोति गुणान् वक्तुं तीर्थराजस्य च प्रिये ॥
तिस्रः कोट्यो नवसश्च यत्र तीर्थानि सन्ति वै ।
तस्मात् स्नानं च दानं च होमं जप्यं सुरार्चनम् ॥
यत्किञ्चित्क्रियते तत्र चाक्षयं भवति प्रिये ॥ इति ।

## अथ जल्पीशमाहात्म्यम् ।

कालिकापुराणे,

नन्दिकुण्डे नरः स्नात्वा नक्तं कुर्यात्तदा निशि ।
ततः परस्मिन् दिवसे गच्छेज्जल्पीशमन्दिरम् ॥
तत्र स्नात्वा महानद्यां जल्पीशं प्रतिपूज्य च ।
तस्यां निशि हविष्याशी संयतस्तां निशां नयेत् ॥
ततोऽनुदिवसे प्राप्ते गच्छेत् सिद्धेश्वरीं शिवाम् ।
तां पूजयेत्तथाष्टम्यामुपवासं तथाचरेत् ॥
चतुर्भुजा तु सा देवी पीनोन्नतपयोधरा ।
सिन्दूरपुञ्जसङ्काशा धत्ते वर्ती च खर्परम् ॥
दक्षिणे वामबाहुभ्यामभीतिवरदायिनी ।
जटामण्डितशीर्षाद्रिरक्तप्रेतोपरिस्थिता ॥
पञ्चाक्षरजपान्तादिमन्त्रोऽस्याः परिकीर्त्तितः ।
कामाख्यातन्त्रमेवास्याः पूजने तन्त्रमीरितम् ॥
एवं कृत्वा नरो धीमान् मातृयोनौ न जायते ।
जामदग्न्यभयाद्भीताः क्षत्रियाः पूर्वमेव हि ॥

म्लेच्छच्छद्मान्युपादाय जल्पीशशरणं गताः।
ते म्लेच्छवाचः सततमार्य्यवाचश्च सर्वदा॥
जल्पीशं सेवमानास्तु गोपयन्ति च तं प्रभुम्।
त एव तु गणास्तस्य महाराज मनोहराः॥
तोषयित्वाथ तान् सर्वान् जल्पीशं पूजयेन्नरः।
वरदाभयहस्तोऽयं द्विभुजः कुन्दसन्निभः॥
तत्पुरुषस्य तु मन्त्रेण पूजयेद्देवमुत्तमम्।
एवं पुण्यकरे पीठे जल्पीशस्य महात्मनः॥
एतज्ज्ञात्वा नरो याति शङ्करस्यालयं प्रति। इति।

अथ नानातीर्थमाहात्म्यम्।

कल्पतरौ कुरुक्षेत्रानुवृत्तौ—
वामनपुराणे,
तस्मिंस्तीर्थवरे स्नात्वा दृष्ट्वा देवं त्रिलोचनम्।
पूजयित्वा सुवर्णाख्यं नैमिषं प्रययौ ततः॥
तत्र तीर्थसहस्राणि त्रिंशत्पापहराणि च।
गोमत्यां काञ्चनस्थाश्च सुनन्दामध्यवासिनः॥
तेषु स्नात्वार्च्य देवेशं पीतवाससमच्युतम्।
देवदेवं तथेशानं सम्पूज्य विधिना ततः।
गयायां गोपतिं द्रष्टुं जगाम सुमहासुरः॥
सरसि ब्रह्मणः स्नात्वा कृत्वाचम्य प्रदक्षिणाम्।
पिण्डनिर्व्वपणं पुण्यं पितॄणां स चकार ह॥
उदपाने तथा स्नात्वा सरयूं च जगाम सः।
तस्यां स्नात्वा समभ्यर्च्य गोप्रतारे जलेशयम्॥
तथा वामनपुराणे पुरुषोत्तममभिधाय।
तं दृष्ट्वा पुण्डरीकाक्षमक्षरं परमं शुचिः।

उपोष्य षड्दिनान्येष महेन्द्रं पर्वतं ययौ ॥
तत्र देववरं शम्भुमर्द्धनारीश्वरं हरम् ।
दृष्ट्वा सुसम्पूज्य पितॄन् महेन्द्रं चोत्तरं गतः ॥
तत्र देववरं शम्भुं गोपालं सोमशीतलम् ।
दृष्ट्वा स्नात्वा सोमतीर्थे सह्याचलमुपागतः ॥
तत्र स्नात्वा महोदक्यां वैकुण्ठं चार्च्य भक्तितः ।
पितॄन् पिण्डैः समभ्यर्च्य पारियात्रं गिरिं ततः ॥
तत्र स्नात्वा लाङ्गलिन्यां पूजयित्वाऽपराजितम् ।
करपादं समाहृत्य विश्वरूपं ददर्श सः ॥
यत्र देववरः शम्भुर्देवानां तु सुपूजितः ।
विश्वरूपमथात्मानं दर्शयामास योगवित् ॥
तत्र गङ्गणिकातोये स्नात्वाभ्यर्च्य महेश्वरम् ।
जगामाद्रिं च सौगन्धं प्रह्लादो मलयाचलम् ॥
महाह्रदे ततः स्नात्वा पूजयित्वा च शङ्करम् ।
ततो जगाम योगात्मा द्रष्टुं विन्ध्ये सदाशिवम् ॥
त्रिरात्रं समुपोष्यैष अवन्तीं नगरीं ययौ ।
तत्र सिप्राजले स्नात्वा विष्णुं सम्पूज्य भक्तितः ॥
ईशानं तु जगामाथ महाकालवपुर्धरम् ।
तस्मिन् स सर्वसत्वानां तेन रूपेण शङ्करः ॥
तामसं रूपमास्थाय संहारं कुरुते वशी ।
तत्र तेन सुरेशेन श्वेतकिर्नामभूपतिः ॥
रक्षितस्त्वन्तकं हत्वा सर्वभूतापहारिणम् ।
स तत्र हृष्टो वसति नित्यं चैव महोमया ॥
वृतः प्रमथकोटीभिर्वन्द्यो ब्रह्मत्रिदशार्चितः ।
दृष्ट्वा त्वथ महाकालं कालकालान्तकारकम् ॥

दक्षानां यमनं मृत्युमृत्युं चित्रविचित्रकम् ॥
श्मशाननिलयं शम्भुं भूतनाथं जगत्पतिम् ।
पूजयित्वा शूलधरं जगाम निषधाम्पतिम् ॥
तत्रामरेश्वरं दृष्ट्वा देवं सम्पूज्य भक्तितः ।
महोदयं समभ्येत्य हयग्रीवं ददर्श सः ॥
अश्वतीर्थे नरः स्नात्वा दृष्ट्वा तु चतुराननम् ॥
श्रीधरं तु विभुं पूज्य पञ्चालविषयं ययौ ।
भद्रेश्वरं गुणैर्युक्तं पुत्रमर्थपतेरथ ॥
पश्चात्मर्कं रथी दृष्ट्वा प्रयागं प्रयतो ययौ ।
स्नात्वा सन्निहते तीर्थे यामुने लोकविश्रुते ॥
दृष्ट्वा वटेश्वरं रुद्रं माधवं योगशायिनम् ।
द्वारे च भक्तितः पूज्यं पूजयित्वा महेश्वरम् ॥
माघमासमथोपोष्य ततो वाराणसीं गतः ॥
दशाश्वमेधे गङ्गायां तीर्थे सुरगृहादिषु ।
सर्वपापहराद्येषु सम्पूज्य पितृदेवताः ॥
प्रदक्षिणीकृत्य पुरीं पूज्याविमुक्तकेशवौ ।
लोलं दिवाकरं दृष्ट्वा ततो मधुवनं ययौ ॥
तत्र स्वयम्भुवं देवं दृष्ट्वा चासुरसत्तमः ।
तमभ्यर्च्य महातेजाः पुष्करारण्यमागमत् ॥
तेष्वपि त्रिषु तीर्थेषु स्नात्वाऽर्च्य पितृदेवताः ।
पुष्कराक्षमथो गत्वा ब्रह्माणं चाप्यपूजयत् ॥
ततो भूयः सरस्वत्यास्तीर्थे त्रैलोक्यविश्रुते ।
कोटितीर्थे रुद्रकोटिं ददर्श वृषभध्वजम् ॥
नैमिषेया द्विजवरा मागधेयाः ससैन्धवाः ।
धर्मारण्याः पौष्करेया दण्डकारण्यकास्तथा ॥

चाम्पेया भारुकच्छीया देविकातीरगाश्च ये ।
ते तत्र शङ्करं द्रष्टुं समायाता द्विजातयः ॥
कोटिसङ्ख्यास्तपःसिद्धा हरदर्शनलालसाः ।
अहंपूर्वमहंपूर्वमित्येवं वदतो मुने ॥
तान् सङ्क्षुब्धान् हरो दृष्ट्वा महर्षीन् दग्धकिल्बिषान् ।
तेषामेवानुकम्पार्थं कोटिमूर्त्तिरभूद्धरः ॥
ततस्ते मुनयः प्रीताः सर्व एव महेश्वरम् ।
सम्पूजयन्ति ते भक्त्या तीर्थं कृत्वा पृथक्पृथक् ॥
इत्येवं रुद्रकोटीतिनाम शम्भोरजायत ।
तं ददर्श महातेजाः प्रह्लादो भक्तिमान्वशी ॥
कोटितीर्थे नरः स्नात्वा तर्पयित्वा वसून् पितॄन् ।
रुद्रकोटिं समभ्यर्च्य जगाम कुरुजाङ्गलम् ॥
तत्र देववरं स्थाणुं शङ्करं पार्वतीप्रियम् ।
सरस्वतीजले मग्नं ददर्श सुरपूजितम् ॥
सारस्वतेऽम्भसि स्नात्वा स्थाणुं सम्पूज्य भक्तितः ।
क्षीरिकावासमभ्येत्य नीलकण्ठं ददर्श ह ॥
नीलतीर्थजले स्नात्वा पूजयित्वा ततः शिवम् ।
जगाम सागरान्ते स प्रभासे द्रष्टुमीश्वरम् ॥
स्नात्वा च सङ्गमे नद्याः सरस्वत्यार्णवस्य च ।
सोमेश्वरं लोकपतिं ददर्श च कपर्दिनम् ॥
यैर्दक्षशापनिर्दग्धः क्षयी ताराधिपः शशी ।
आप्यायितः शङ्करेण विष्णुना च कपर्दिना ॥
तानभ्यर्च्य वरान् देवान् प्रजगाम महालयम् ।
तत्र रुद्रं समभ्यर्च्य स जगामोत्तरान् कुरून् ॥
पद्मनाभं समभ्यर्च्य सप्तगोदावरं ययौ ।

तत्र स्नात्वार्च्य देवेशं भीमं त्रैलोक्यवन्दितम् ॥
गत्वा दारुवने श्रीमान् श्रीलिङ्गं प्रददर्श ह ।
तत्राभ्यर्च्य च ब्रह्माणीं गत्वार्च्य त्रिदशेश्वरीम् ॥
प्लक्षावतरणं गत्वा श्रीनिवासमपूजयत् ।
ततश्च कुण्डिनं गत्वा सम्पूज्य प्राणितृप्तिदम् ॥
सूर्पारके चतुर्बाहुं पूजयित्वा विधानतः ।
मगधारण्यमासाद्य ददर्श वसुधाधिपम् ॥
तमर्चयित्वा विश्वेशं स जगाम प्रजामुखम् ।
महातीर्थं ततः स्नात्वा वासुदेवं प्रणम्य च ॥
शोणं सम्प्राप्य सम्पूज्य रुक्मवर्माणमीश्वरम् ।
महाकोश्यां महादेवं हंसाख्यं भक्तिमानथ ॥
पूजयित्वा जगामाथ सैन्धवारण्यमुत्तमम् ।
तं दृष्ट्वार्च्य हरिं चासौ तीर्थं कनखलं ययौ ।
तत्रार्च्य रुद्रं कालीशं वीरभद्रं च दानवः ॥
गणाधिपं च मेघाङ्कं ययावथ गिरिव्रजम् ।
तत्र देवं पशुपतिं लोकनाथं महेश्वरम् ॥
सम्पूजयित्वा विधिवत् कामरूपं जगाम ह ।
शशिप्रभं देववरं त्रिनेत्रं सम्पूजयित्वा सहितं मृडान्या ।
जगाम तीर्थप्रवरं महाख्यं तस्मिन् महादेवमपूजयच्च ॥
ततस्त्रिकूटं गिरिराजपुत्रं द्रष्टुं जगामाथ स चक्रपाणिम् ।
तमीड्य भक्त्याथ गजेन्द्रमोक्षणं जजाप जप्यं परमं पवित्रम् ॥
तत्रोष्य दैत्येश्वरसूनुरादरान्मासत्रयं मूलफलाम्बुभक्षी ।
निवेद्य विप्रप्रवरेषु काञ्चनं जगाम घोरं स हि दण्डकं वनम् ॥
तत्र दिव्यं महाशङ्खं वनस्पतिवपुर्धरम् ॥
ददर्श पुण्डरीकाक्षं महान्तं चापधारिणम् ।

तस्याधस्तात्त्रिरात्रं तु महाभागवतोऽसुरः ॥
स्थितः स्थण्डिलशायी च पठन् सारस्वतं स्तवम् ।
तस्मात्तीर्थवरं विन्ध्यं सर्वपापप्रणाशनम् ॥
जगाम दानवो द्रष्टुं सर्वपापहरं हरिम् ।

मत्स्यपुराणे,

कृतशौचं महातीर्थं सर्वपापनिषूदनम् ।
यत्रास्ते नरसिंहस्तु स्वयमेव जनार्दनः ॥

तथा,

वस्त्रापदं रुद्रकोटिं सिद्धेश्वरमहालयम् ।
गोकर्णं भद्रकर्णं च सुवर्णाख्यं तथैव च ॥
कालञ्जरं वनं चैव शङ्कुकर्णं स्थलेश्वरम् ।
एतानि हि पवित्राणि सान्निध्यात् सन्ध्ययोर्द्वयोः ॥ इति ।

## अथ पृथिवीप्रदक्षिणविधिः ।

पुलस्त्यतीर्थयात्रायां भारते पुलस्त्यं प्रति भीष्मवाक्यम् ।
प्रदक्षिणां यः पृथिवीं करोत्यमितविक्रम ।
किं फलं तस्य विप्रर्षे तन्मे ब्रूहि तपोधन ॥
इति पृष्टेन पुलस्त्येन
पुष्करं परमं गत्वा पितामहनिषेवितम् ।
इति क्रमेण पृथिवीप्रदक्षिणप्रकार उक्तः । अन्ते च
अनेन विधिना यस्तु पृथिवीं पर्यटिष्यति ।
अश्वमेधशतस्याग्र्यं फलं प्रेत्य स भोक्ष्यते ॥
इति दर्शितम् । अतस्तेनैव विधिना प्रदक्षिणा कार्या ।
अन्ये तु नरसिंहपुराणे,
कोकामुखे वराहं च मन्दारे मधुसूदनम् ।

इत्यादिक्रमेण ऽष्टषष्टितीर्थयात्रा उक्ता । तेनैव क्रमेण पृथिवीमदक्षिणा कार्य्या ।

द्रष्टव्यानि यथाशक्त्या क्षेत्राण्येतानि मानवैः ।
वैष्णवैस्तु विशेषेण तेषां मुक्तिं ददाम्यहम् ॥ इति वदन्ति ।

## अथ महापथप्रस्थानविधिः ।

भारते,

विख्यातो हिमवान् पुण्यः शङ्करश्वशुरो गिरिः ।
आकरः सर्व्वरत्नानां सिद्धचारणसेवितः ॥
शरीरमुत्सृजेत्तत्र विधिपूर्व्वमनाशके ।
अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः ॥
अभ्यर्च्य देवतास्तत्र नमस्कृत्य मुनींस्तथा ।
स्वर्गलोकं स गच्छतीति प्राक्तनेनान्वयः ।

ब्रह्मपुराणे,

महापथस्य यात्रा च कर्त्तव्या तुहिनोपरि ।
आश्रित्य सत्वं धैर्य्यं च सद्यः स्वर्गप्रदा हि सा ॥
यावत्पौरन्दरो लोको न यातः कायगौरवात् ।
तावत्तुषारमध्ये तु कस्तनुं त्यक्तुमुत्सहेत् ॥
यतस्तुषारदाह्यांस्तु मुञ्चन्प्राणान् विचेतनः ।
प्रदक्षिणावर्त्तशिखं पश्येद्दीप्तं हुताशनम् ॥
सङ्कर्षणं वपुर्विष्णोश्चण्डाग्निं भवदाहकम् । इति ।
तीर्थानां महिमा महानभिहितो योऽसौ हितो जन्मिनां
तत्तत्कर्मविधिर्महाफलनिधिः सोऽप्यत्र निर्व्वर्णितः ।
विद्वन्मानसहर्षवर्षणकृता तन्मेऽमुना कर्मणा
पुण्यस्तम्बकरिर्भवार्णवतरिर्देवो हरिः प्रीयताम् ॥

प्रज्ञाणां परिवर्द्धतेऽधिजनतादैन्यान्धकारापहे
श्रीमद्वीरमृगेन्द्रदानजलधिर्यद्वक्त्रचन्द्रोदये ।
राजादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते
तीर्थे ऽस्मिन् खलु तीर्थजातविषयः पूर्त्तिं प्रकाशोऽगमत् ॥

इतिश्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरी-
नीराजितचरणकमल-
श्रीमन्महाराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनु-
चतुरुदधिवलयवसुन्धरावलयपुण्डरीकविकासदिनकर-
श्रीमन्महाराजाधिराजश्रीवीरसिंहदेवोद्योजित-
श्रीहंसपण्डितात्मजपरशुराममिश्रसूनु-
सकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्र-
विद्वज्जनजीवातु-

श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे तीर्थप्रकाशः
समाप्तः ।



(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २
(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २
(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३
(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३
(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३
(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ३
(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया सहितम् । ( वेदान्तः ) १४
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता१
(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यायाऽवतरणिकया च सहितम् ८
(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... २
(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्याः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... ३
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २
(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हारिभद्रसूरिकृतः । ... ... १
(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३
(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११
(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६
(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २
(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २
(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १
(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २
(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्मामृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४
(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... ३
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मितश्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकरणं श्रीसुबोधिनीटिप्पण्योः—प्रकाशः गोस्वामि श्रीश्रीपुरुषोत्तमजीमहाराज विरचित ३
(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४
(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३
(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च ।

